# प्रस्तावना.

आकर्णयन्तु सर्वेऽपि विपश्चितस्तत्रभवन्तः सहृदया वारिविकारं परिहृत्य हंसा इव गुणग्राहिणो यत् सकललोकानां लोको-
त्तरहितैषिणा मुनिजनमनोजलजस्फोरणस्फुरत्प्रभाप्रभाकरप्रभविष्णुना भवजन्ममृत्युपरम्परादुःखदुःखितजन्तुदुःखहरणकल्पद्रुमाय-
माणेन भव्यानां भवजलधितरणतरलतरणितुलाधिरोहेण नवाङ्गिवृत्तिकारकश्रीमदभयदेवसूरिशिष्यजिनवल्लभसूरिपट्टालंकरिष्णुना
आगमपारदृश्वना श्रीमज्जिनदत्तसूरिणा कतिपयसंशयपदप्रकरणनामकमेतद् ग्रन्थं निर्मितम्, अस्मिंश्च प्रकरणे विधिचैत्याविधिचैत्य-
लक्षणं सामायिकादिकरणविधिरालोचनातपस्यादिकरणप्रकारः प्रासुकाऽप्रासुकजललक्षणं व्रतप्रत्याख्यानादिग्रहणस्वरूपः पार्श्वस्था-
दीनामवन्दनीयता तेषां धर्मकथाया अश्रवणीयता तेषां समीपे व्रतप्रत्याख्यानादीनामग्रहणं विकृत्युत्कृष्टद्रव्यादिलक्षणमनेके विषया
युक्त्या समवायाङ्गस्थानाङ्गानुयोगद्वारनन्दीसूत्रभगवतीकल्पभाष्योत्तराध्ययनाद्यागमप्रमाणेन चाविरुद्धा अनधिगतसकलागमानां
तर्कादिबोधरहितानां मुग्धजनानामनायासेन बोधार्थं विमृश्य दर्शिताः, तथा तेषामागमानां मूलपाठोऽपि प्रयोजनानुसारेण प्रक-
टीकृतः, अस्य प्रकटीकरणकारणं तु एवं प्रवदन्ति-तथाहि श्रीविट्ठणहिण्डाविधानपत्तनकृताधिवासायाः प्रतिदिनमात्मगुरूपदिष्टं
धर्मानुष्ठानानि अनुतिष्ठमानायाः कस्याश्चित् खरतरपरमश्राविकायाः स्वन्यापारानुरूपगच्छान्तरीयश्रावकादिक्रियाकलापं-

दर्शनेन तथाविधसंशयनिवर्त्तकसुगुरुसम्पर्काभावेन च, पौषधं किं पर्वतिथिष्वेवानुष्ठीयते सर्वदा वा, अविधिचैत्ये गम्यते न वा, श्रावकेण सामायिके प्रथमं करेमि भंते उच्यते ईरियावहिप्रतिक्रमणं वा, एलामुस्तादिवासितं जलं प्रासुकमप्रासुकं वा, उपवासादिषु गर्भकप्रमुखानां वदनं चुम्बति न वा, सम्यक्पालितशीलाचार्यसमीपे एव आलोचनादितपः क्रियते अन्यस्यापि समीपे वा, इत्यादयोऽनेके संदेहाः संजाताः, भवन्ति हि सुगुरुसान्निध्याद्यभावे सिद्धान्तोक्तेऽपि अर्थे संशया यदुक्तं गूढं पवयणसारं अंगोवंगे समुद्दसरिसम्मि ॥ अगारिसेहिं कत्तो न तं नज्जइ मन्दबुद्धीहिं ॥ १ ॥ अतस्ते मर्वेऽपि संशया यथावदुत्तरलाभार्थं विज्ञप्तिकायां लिखित्वा दूरदेशप्रवेशपेशलितानार्यमायजनमनसां श्रीअम्बिकादेवताप्रकटितयुगप्रधानत्वालङ्कृतनामधेयानां श्रीमज्जिनदत्तसूरीणां पादमूले प्रेषिताः, तैश्च श्रीमत्सूरीश्वरैर्विलोकनानन्तरमेव भविष्यद्भव्यलोकोपकाराय संशयतिमिरतरुणकरम्बदलने मार्तण्डप्रचण्डप्रभासदृशं सम्यक्त्वकारणसंवेगादिविवर्धकं निर्वाणसुखप्रदर्शकमनेकजिनाभिमतागमार्थसंयुक्तं सरलोक्तित्वात् सुगमार्थं सार्धशतगाथाप्रमाणप्रमितं कतिपयसंशयपदप्रकरणनामकमेतत्प्रकरणं विरचितम्,

ग्रन्थनिर्मातुश्चरित्रं त्वेवं श्रूयते—श्रीमन्महावीरादष्टत्रिंशत्तमपट्टप्रद्योतिकाः सुविहितक्रियाया निर्मलचारित्रस्य च निलयाश्चतुरशीतिगच्छसंस्थापकाः श्रीमदुद्द्योतनसूरयोऽभवन् । तस्य च प्रधानशिष्यो विमलशाहमन्त्रिणो धर्मैश्वर्यादिप्रदायकस्तत्प्रतिबोधेन श्रीमदर्बुदगिरितीर्थोद्धारकर्त्ता षण्मासावधिमाचाम्लं कृत्वा संसेवित धरणेन्द्रद्वारा सीमंधरात् लब्धस्य सूरिमंत्राम्नायस्य

च प्रदर्शिकः सम्यग्ज्ञानदर्शनचारित्ररत्नत्रयस्य धारकः युगप्रवरःश्रीवर्द्धमानसूरिः संजातः । तस्य च जिनेश्वरसूरिर्बुद्धिसा-
गरसूरिश्चेति द्वौ प्रवरशिष्यौ, तयोर्मध्ये चत्वारिंशत्तमपट्टस्य प्रभावुकाश्चतुर्दशविद्यापारदर्शिनः स्वपरसिद्धान्ततत्त्वावधारकाः श्रीदुर्ल-
भराजसमक्षे सभायां दशमाश्चर्यप्रभावनिर्नाशाय तिरोहितविधिमार्गोद्धाराय च शास्त्रवादे चैत्यवासिनो जित्वा वसतिवासप्ररूपका
वादिवादविजयेन श्रीदुर्लभराजप्रदत्तखरतरविरुदालङ्कृता दुर्लभराजगुरवः सातिशायिज्ञानदर्शनचरणचर्चिता जिनमतस्य महा-
प्रभावुका अशीत्यधिकसहस्रे (१०८०) विक्रमार्के श्रीमज्जिनेश्वरसूरयः संजाताः । एतैश्च षट्स्थानकप्रकरणपञ्चलिङ्गीप्रकरणश्री-
हरिभद्राष्टकटीकालीलावतीकथाकथाकोशादयोऽनेके ग्रन्था विरचितास्ते चाद्याऽपि उपलभ्यन्ते, जिनेश्वरसूरीणां पट्टे च पद्मावत्या
सुशोभितस्तथा स्वमहिम्ना मौजदीनयवनं सम्राट्पदे संस्थास्यतीति कथितवान् तत्प्रतिबोधको धनपालश्रीमालप्रमुखान् प्रतिबोध्य
जैनमार्गे प्रवर्तयन् महतीयाणगोत्रस्य प्रतिष्ठापको यत्नेन चतुर्विधधर्मस्योद्धर्धको दयाधर्मस्य गरीयस्त्वप्रतिपादकः संवेगरङ्गशाला-
द्यनेकप्रकरणकर्त्ता श्रीजिनचन्द्रसूरिरवातरत् । जिनचन्द्रसूरीणां पट्टे च तेषामेव लघुभ्राता स्थानाङ्गादिविपाकसूत्रपर्यन्तनवाङ्गानां
नवाङ्गीवृत्तिनिर्माता गणधरानुकरणप्रवणो जयतिहुअणस्तोत्रेण श्रीस्तम्भनकपार्श्वनाथं प्रकटयित्वा स्वाङ्गविकारविच्छेदकः श्रुत-
चारित्रधर्मोद्द्योतको ज्ञानादिरत्नत्रयावतंस एकावतारी श्रीमदभयदेवसूरिर्दिदीपे, एतेषां च सत्तालाभो द्वादशशततमे त्रयोविं-
शत्यूने विक्रमसम्वत्सरे यावत् श्रूयते, तेषां पट्टे च सर्पापकर्षणीसर्पविमोचनीविद्याया ज्ञातारः सर्वसिद्धान्तगुप्तरहस्यज्ञाः सं-
स्कृतप्राकृतकाव्यरचनायां कविवरिष्ठा अष्टादशसहस्रवागडदेशनिवासिनां प्रतिबोधकाः सातिशायिकज्योतिषज्ञानेन त्रिकाल-

...... ...... ... दुग्ध...पदापयूढ़वाः साक्षाद् धर्ममूर्त्तय इव महाप्रभावकाः सद्गुरुनिर्देशानु-
सारेण सद्गुरुपदप्रद्योतकाः श्रीजिनवल्लभसूरयो बभूवांसः, एष चाचार्यपदप्राप्त्यनन्तरं षण्मासावधिं चारित्रं पालयित्वा अष्टपञ्च-
धिके एकादशशततमे सम्वत्सरे तृतीयदेवलोके देवत्वं गताः, एतैश्च सूक्ष्मार्थसार्धशतकसंघपट्टकप्रकरणधर्मव्यवस्थाप्रकरणादयो
बहवो ग्रन्था विरचिताः, अस्य पट्टोपरि श्रीमहावीरात् चतुश्चत्वारिंशत्तमे पट्टे कतिपयसंशयपदप्रश्नोत्तरनामकमूलग्रन्थकारको
बृहद्दादाशब्देनाखिलजगति प्रसिद्धो धंधूकनगरनिवासिहुंबडगोत्रीयवाच्छिगमन्त्रीश्वरवाहडदेव्याः सुपुत्रश्चतुर्दशविद्यानिधानः सर्व
विद्याऽऽधारसत्त्ववेत्ता सर्वोत्कृष्टनिर्मलज्ञानदर्शनचारित्रास्पदः सार्द्धकोटिनयस्य मायाबीजमन्त्रस्य जापक उज्जेण्यां महाकालनिकेत-
नात् तथा चित्तोडमन्दिरात् महाविद्यामन्त्राम्नायपुस्तकस्य ग्राहकः उज्जीवितमृतयवनपुत्रो विषूचीकाव्याधिमपनीय विक्रमपुरे
पञ्चशतसाधूनां तथा सप्तशतसाध्वीनां च चारित्रदायकोऽसंख्यश्रावकश्राविकापरिवारप्रवर्त्तको दशसहस्रकुटुम्बपरिवृतानां
चतुर्णां राज्ञां द्वादशव्रतं ग्राहयित्वा श्रीराजगच्छनिर्मापकोऽम्बादेवीप्रकाशितयुगप्रधानपदोऽनेकप्रभावशाली कलिकालसर्वज्ञः स-
मस्तजैनसंघविवर्द्धको जंगमयुगप्रधानः श्रीजिनदत्तसूरिर्बभूवान्, एतैश्च गणधरसार्द्धशतकप्रबोधोदयकालस्वरूपद्वात्रिंशिका कति-
पयसंशयपदप्रश्नोत्तरप्रकरणचर्चरीप्रकरणपार्श्वनाथस्तोत्रसाम्नायपदस्थानविधिचैत्यवन्दनकुलकवृत्तिपट्टावल्यादयो भूरिशः ग्रन्थाः
संख्याताः, एष एव च सदेहदोलावलीनामटीकाया मूलग्रन्थस्य कर्त्ता, एतेषां चावनितलावतारो विक्रमसम्वद्द्वात्रिंशदधिके-
कादशशतसमये (११३२) प्रसिद्ध एकचत्वारिंशद्युक्ते एकादशसम्वत्सरे (११४१) च धर्मदेवोपाध्यायस्य पार्श्वे दीक्षा गृहीता तदा

सोमचन्द्र इति नाम्ना ख्यातिः समजनि, नवपष्ठीवर्द्धितैकादशशतसमये ॥११६९॥ चित्रोडदुर्गे सूरिपदं लब्ध्वा आषाढशुक्लैकादश्यां
गुरुवासरे एकादशाधिकद्वादशशतसम्वत्सरे ( १२११ ) अजमेरनगरात् स्वर्गं गतः, विशेषतस्तु गणधरसार्धशतकादवसेयम् । जि-
नदत्तसूरीणां पदे च मणिमण्डितभालः क्षेत्रपालमाणिभद्रादिदेवतानुग्रहीत इन्द्रप्रस्थपुरयवनराट्सेवितचरणकमलः पद्मावतीदेव्याः
संप्राप्तवरो जैनधर्मविटपिपीयूषसिञ्चकः परमपुण्यपुञ्जो द्वितीयदादा इति नाम्ना लोकैः कीर्त्तितः श्रीजिनचन्द्रसूरिः संस्थितः ।
अस्य विशेषविस्तारस्तु पट्टावल्यादिग्रन्थादवलोकनीयः, अस्य भुवि पदस्पर्शो विक्रमसम्वदेकादशशततमे (११९७) सप्तनवत्याधिके
भाद्रपदशुक्लाष्टम्यां, पश्चाद् वैशाखशुक्लपञ्चम्यामेकादशसहितद्वादशशते (१२११) विक्रमपुरे श्रीजिनदत्तसूरिहस्तेन सूरिपदं प्राप्य
त्रयोविंशतियुक्तद्वादशशतसमये (१२२३) भाद्रपदकृष्णचतुर्दश्यां स्वर्गगमनम् ॥ जिनचन्द्रसूरिपदे च षट्त्रिंशद्वादिनां वादकण्डूय-
मपनेता सपादलक्षन्यायग्रन्थेन विभूषितकण्ठो योगिस्तम्भितजिनप्रतिमोद्धारक उद्धरणमन्त्रीश्वरराजमहाराजादिभिः सेवितपादमूलो
निर्मलज्ञानादित्रयसहितः श्रीजिनपतिसूरिर्व्यवस्थितः, अमीषां व्योमचन्द्रहस्तगगने (१२१०) सम्वत्सरे जन्म चैत्रकृष्णाष्टम्यां,
तथा दिशाचन्द्रनयनभूम्यां (१२१८) फाल्गुणकृष्णाष्टम्यां दीक्षाग्रहणं, वह्निकरनयनचन्द्रे (१२२३) च सूरिपदप्राप्तिः, मुनिहृ-
यकर्णगगने (१२७७) च पालनपुरनगरात् स्वर्गाधिरोहः ॥ अस्य च पट्टं स्वपरसमयवेदिना शुद्धसंयमिना विद्वच्छिरोमणिना श्री-
जिनेश्वरसूरिणाऽलंकृतम्, एषां जन्म भूताब्धिकर्णचन्द्रे १२४५ विक्रमसम्वत्सरे मार्गशीर्षशुक्लैकादश्यां, पश्चात् खेडानगरे
दीक्षाग्रहणं भूतबाणकरचन्द्रे ( १२५५ ), दिशामुनिश्रवणचन्द्रे ( १२७८ ) माघशुक्लषष्ठ्यां, आचार्यपदप्राप्तिः, चन्द्रवेद-

शिरिगगने (१३३१) च स्वर्गगमनम्, अमीषामेव जिनेश्वरसूरीणां शिष्यः स्वपरसिद्धान्ततत्त्वज्ञः सर्वगुणागारो विद्वद्वरिष्ठः श्रीप्र-
बोधचन्द्रगणिरभवत्, यावच्चासौ विद्यया सद्गुणैश्चाङ्कितस्तदा योग्यतानुमानदक्षेण श्रीजिनेश्वरसूरिणा स्वकीयोच्चैस्तरपदे वाचनाचा-
र्यत्वेन संस्थापितः सर्वगच्छनेतृत्वेऽधिकृतः, एतैरेव कतिपयसंशयपदप्रश्नोत्तरनामकमूलग्रन्थस्य सम्यक्त्ववृक्षबीजकल्पाऽपरनाम
संदेहदोलावलीनाम्ना जगति प्रसिद्धस्य प्रकरणस्य बृहद्वृत्तिनिर्मिता, अस्याश्च निर्माणसमयो विक्रमसम्वत्सरत्रयोदशशततम
एकविंशतिसहितः, श्रीमल्लक्ष्मीतिलकोपाध्यायजिनरत्नाचार्यचन्द्रतिलकोपाध्यायैः स्वपरसिद्धान्तमर्मवेदिभिश्च मिलित्वा एषा
संदेहदोलावली संशोधिता, अत इयं मनीषिभिरहंपूर्वकया सह कौतुकमवलोकनीया ग्रन्थसंख्यापरिमाणं च सार्द्धसप्तशताधिकं
चतुःसहस्रं यावच्चन्द्रार्कौ तावदाशा अप्रतिहतप्रसारो भवतु श्रोतारोऽध्येतारश्च नन्दन्तु ।

प्रबोधचन्द्रगणिनां च श्रीमज्जिनपालोपाध्यायविजयदेवसूरिपद्मदेवगणिगुणभद्रवाचनाचार्याः परमोत्कृष्टगुणसम्पन्नाः
सर्वसिद्धान्तरहस्यज्ञाः सिद्धान्ततर्कशास्त्रलक्षणसाहित्यकातन्त्रपञ्चकादिषु क्रमेण गुरव आसन्, अस्य पट्टानुरोहणक्रमश्चायं–श्रीमहा-
वीरादष्टत्रिंशत्तमे पट्टे उद्द्योतनसूरिः । १ । ततो वर्द्धमानसूरिः ॥ २ ॥ जिनेश्वरसूरिर्बुद्धिसागरसूरिश्च ॥ ३ ॥ जिनचन्द्रसूरिः
॥ ४ ॥ अभयदेवसूरिः ॥ ५ ॥ जिनवल्लभसूरिः ॥ ६ ॥ युगप्रधानजिनदत्तसूरिः ॥ ७ ॥ जिनचन्द्रसूरिः ॥ ८ ॥ जिनपतिसूरिः
॥ ९ ॥ जिनेश्वरसूरिः ॥ १० ॥ वाचकजिनप्रबोधचन्द्रगणिः ॥ ११ ॥

अथ यन्त्रणायां द्रव्यदायकानां नामानि

३००) श्रीमान् सेठ गुलाबचन्द्र गोमाजी अच्छारीवाला.

५०) श्रीमान् सेठ फुलचन्द्रजी जावक फलोदीवाला.

५०) श्रीमान् सेठ अवराजजी नेमीचन्द्रजी चौंदरी जैतारणवाला.

५०) श्रीमान् सेठ छगनमलजीहीराचन्द्रजी रांका जैतारणवाला.

५०) श्रीमान् सेठ चुन्नीलाल धनराजजी रांका कोटरावाला.

२५) श्रीमान् सेठ भागमलजी हस्तीमलजी गोलेच्छा फलोदीवाला.

१५) श्रीमान् सेठ पीरचन्द्रजी गढवाणी जैतारणवाला.

१०) श्रीमान् सेठ लक्ष्मीलालजी मीजेलालजी निमानी फलोदीवाला.

---

पण्डितजगदीश्वरानन्देन संशोधितम् ।

---

Revised by Pandit Jagadishvarananda

# संदेहदोलावल्या अनुक्रमणिका ॥


| विषयः | पत्राङ्कः |
| --- | --- |
| मंगलाचरणम् ॥ | १ |
| अनुबन्धचतुष्टयनिरूपणम् ॥ | २ |
| शास्त्रश्रवणं विना धर्माधर्मयोर्ज्ञानं भवति न वा ॥ | ४ |
| द्रव्यभावभेदेन धर्मो द्विधा ॥ | ६ |
| द्रव्यधर्मस्वरूपं तथा निश्राकृतानिश्राकृतचैत्यविचारः ॥ | ६ |
| भावधर्मस्वरूपकथनम् ॥ | २७ |
| अनुश्रोतगामिधर्मलक्षणम् ॥ | २७ |
| प्रतिश्रोतगामिधर्मलक्षणम् ॥ | २८ |
| द्रव्यधर्मः कस्मिन् गुणस्थाने भवति ॥ | २८ |
| भावधर्मः कस्मिन् गुणस्थाने भवति ॥ | २८ |
| द्रव्यधर्मस्य किं फलम् ॥ | २८ |
| भावधर्मस्य किं फलम् | २९ |
| अधर्मस्य किं कारणम् ॥ | २९ |
| अधर्मस्य किं फलम् ॥ | ३० |
| पुण्यवतामेव गुरुदर्शनं नान्येषाम् ॥ | ३० |
| साधुविहारवर्जिते देशे भव्यानां जन्म भवति न वा ॥ | ३१ |
| गुरुदर्शनं विना संशयोत्पत्तिः ॥ | ३१ |
| गीतार्थसमीपे ते संशयाः प्रष्टव्याः ॥ | ३२ |

| विषयः | पत्राङ्कः |
| --- | --- |
| संशयसमुत्पन्ने चतुर्थं मिथ्यात्वं भवति ॥ .... .... .... | ३२ |
| संशयसमुत्पन्नो निःशङ्कितसम्यक्त्वस्योत्पत्तिः ॥ .... .... | ३२ |
| संशयोत्पत्तिरपि भव्यानां सम्यक्त्वस्य कारणम् ॥.... .... | ३५ |
| एकस्य परिग्रहपरिमाणमसौ गृहीत्वा पालयति न वा ॥ .... | ३६ |
| मार्गोक्तं गुरुनिरादिष्टं परिग्रहपरिमाणमपरोऽपि गृहीत्वा पालयति ॥ .... .... .... .... .... .... | ३६ |
| श्राविकायाः लिङ्गितस्थापनाचार्यस्याग्रे श्रावकस्य सामायिकादि कर्तुं कल्पते न वा ॥ .... .... .... .... | ३७ |
| एकस्य स्थापनाचार्यस्याग्रे श्रावकश्राविकाणां युगपत् सामायिकादि कर्तुं कल्पते न वा ॥ .... .... .... | ४७ |
| पैन्यासादिद्रव्यलिङ्गिनां पार्श्वे सूत्रार्थः श्रूयते न वा ॥ .... | ४८ |
| गुणगणयुक्तगुरुसमीपे एव व्याख्यानं श्रोतव्यम् ॥ .... | ४९ |

| विषयः | पत्राङ्कः |
| --- | --- |
| पार्श्वस्थादीनामुपाश्रये गत्वा तद्धर्मकथायां साधुः किं कुर्यात् ॥ | ५२ |
| मार्गमिलितानां पार्श्वस्थादीनां वन्दनादिकं क्रियते न वा ॥ | ५४ |
| पार्श्वस्थानादीनां वन्दनादिकं न कर्तव्यम् ॥ .... .... | ५४ |
| पार्श्वस्थादीनां वन्दनायाः किं फलम् ॥ .... .... .... | ५४ |
| वचसापि नमस्कारः साधुभिरेव कर्तव्यः न तु श्रावकैः ॥ .... | ५५ |
| पौषधशालायां श्रावकाः स्वयं प्रकरणादिकं विचारयन्ति न वा ॥ .... .... .... .... .... .... | ५६ |
| सुज्ञातं शास्त्रं श्रावकोऽन्येषां कथयति नान्यथा ॥ .... | ५६ |
| यदि कश्चिदन्यद् पृच्छति स च यदि जानाति तदा तदपि कथयति ॥ .... .... .... .... .... | ५६ |
| यदि न जानाति तदा गुरुभ्यो ज्ञात्वा जल्पयिष्यामीति वक्ति ॥ | ५७ |
| पौषधं सर्वासु तिथिषु गृह्यते पर्वतिथिषु वा ॥ .... .... | ५७ |

| विषयः | पत्राङ्कः |
|---|---|
| पुण्यतिथिषु यस्य तपःकरणनियमः स पुण्यतिथिषु कल्याणकादियोगे किं करोति ॥ .... .... .... .... | ५९ |
| प्रतिक्रमतो जनस्य यदि द्वौ त्रीणि चतुरो वा वारान् विद्युतादिसंघट्टो जातस्तदा कथमालोचयति ॥ .... .... | ६१ |
| यस्य प्रतिदिवसं शतसहस्रादिगुणनस्यावग्रहस्तस्याधिकं गुणनमालोचनायां लगति न वा ॥ .... .... .... | ६३ |
| यस्य पञ्चसु तिथिषु तपःकरणनियमस्तस्याधिकं तप आलोचनायां गण्यते न वा ॥ .... .... .... .... | ६३ |
| सामायिकस्थश्रावकस्योत्सर्गतः कियन्ति वस्त्राणि कल्पन्ते ॥ | ६८ |
| सामायिकस्थायाः श्राविकायाः कियन्ति वस्त्राणि .... कल्पन्ते ॥.... .... .... .... .... | ६९ |
| श्राविकया कञ्चुकं विना सामायिकं गृह्यते न वा ॥ .... | ७१ |
| विभिन्नवर्णरसगन्धं जलमेलामुस्तादिवासितं भिन्नं द्रव्यं भवति न वा ॥ .... .... .... .... .... | ७२ |
| पौपधशालायामेकस्मिन् पात्रे क्षिप्तं भिन्नं भिन्नं जलमेकद्रव्यं गण्यतेऽनेकानि वा ॥ .... .... .... .... | ७४ |
| यस्य क्रोशचतुष्टयगमननियमः स यदि क्रोशमपि न गच्छति तदा तस्य कर्मबन्धो भवति न वा ॥ .... .... | ७५ |
| मथितं वस्त्रेण गालितं च दधि विकृतिरुत्कृष्टद्रव्यं वा .... | ७५ |
| मोदकादिपाकार्थं कृतं गुडचूर्णं विकृतिर्भवति न वा ॥ .... | ७६ |
| नानाजातिरसवन्ति विभिन्नानि पूगीफलानि एकं द्रव्यमनेकानि वा ॥ .... .... .... .... .... | ७७ |
| नानादेशजत्वेन विभिन्नानि जलकणघृततैललवणानि एकं द्रव्यमनेकानि वा ॥ .... .... .... .... | ७८ |

| विषय | पत्राङ्क |
|---|---|
| बाल्कादिमुखचुम्बने उपवासादिभङ्गो भवति न वा ॥ | ७९ |
| दधिगुडघृतकणिकानिष्पन्नं द्रव्यं विकृतिरुत्कृष्टं द्रव्यं वा ॥ | ८० |
| विद्युता प्रदीपेन च स्पर्शे जाते दीपस्पर्शात् स्त्रीसंघट्टन भिन्नमभिन्नं वा ॥ | ८० |
| जलस्थितिमितिमात्रं धान्यं विरूढकं प्रकटाङ्कुरं वा ॥ | ८१ |
| भुग्नानि विरूढकानि सचित्तान्यचित्तानि वा ॥ | ८१ |
| स्फुटककर्कटी सचित्तव्रती भक्षयति न वा ॥ | ८२ |
| पूर्वदिने येन मुक्तादिना प्रासुकीकृतं द्वितीयदिनेऽपि तनैव प्रासुकीकृतं जलं पञ्चाहाद्यादिव्रतिनं कल्पते न वा ॥ | ८२ |
| सामायिकव्रतिनोऽप्रतिलेखितमुखवस्त्रिकया सामायिकं ग्रहीतुं कल्पते न वा ॥ | ९१ |
| सामायिकसूत्रोच्चारणानन्तरं तेजस्कायादिस्पर्शे ऐर्यापथिकी प्रतिक्रमणस्य भङ्गो भवति न वा ॥ | ९२ |
| अतप्तगोरसे पतितं द्विदलान्नं सचित्तं भवति नतु तप्तगोरसे पतितमपि ॥ | ९३ |
| मेलयित्वा कटाहे पक्वानि गोधूमघृतदुग्धानि विकृतिरुत्कृष्टद्रव्यं वा ॥ | ९४ |
| अन्यस्य परिग्रहपरिमाणं यदा स्वकल्पितनियमेन स्वीकरोति तदा गुरूणा मिलने तमुत्कलं करोति न वा ॥ | ९४ |
| यत्रासने क्षणमात्रं स्थीयते तद्गणनाया लगति न वा ॥ | ९४ |
| यत्र च फलकादौ कटीमात्रं दीयते तत् शय्या भवति न वा ॥ | ९४ |
| पृथक् पृथक् भाजने पक्वा नाना जातयस्तण्डुला किमेकं द्रव्यमनेकानि वा ॥ | ९५ |
| पञ्चाशकादिषु पार्श्वस्थादिकानां वन्दनकदानं नोक्तम् ॥ | ९६ |

| विषय | पत्राङ्क |
| --- | --- |
| आपकाले दन्तशोधनकं गृह्यते न वा ॥ | ११७ |
| उपवासकरणविधिस्तथा तत्फलनिरूपणम् ॥ | ११८ |
| फलिशिष्टेऽपि तपसि रात्रौ जलपानं न कल्प्यम् ॥ | १२० |
| आलोचनातपसि पादयोनामभ्यङ्ग कार्यते न वा ॥ | १२० |
| तप कर्तुमसमर्थ किं स्वाध्याय करोति अन्यद्वा ॥ | १२१ |
| कालत्रयो स्वाध्याय क्रियते न वा ॥ | १२१ |
| कालवेला च यस्मिन् कस्मिन् समये भवति ॥ | १२१ |
| स्वाध्याय कत्र विधिना क्रियते ॥ | १२४ |
| आलोचना गृहीत्वा उपवासं कर्तुमसमर्थ किं करोति ॥ | १२६ |
| स एकान्तनाम्ना स्वाध्यायेन वोपवासं कुर्यात् ॥ | १२७ |
| तपस्यान्ते गुर्वाज्ञया एव कर्त्तव्यम् ॥ | १२७ |
| अगीतार्थतः प्रायश्चित्तग्रहण ग्राहकस्यापि दोषो दायकस्य तु अधिकम् | १२९ |
| आलोचनायाश्चतुर्भङ्गी ॥ | १३० |
| उभयोरजानतो साधुश्रावकयो प्रत्याख्यान मृषावाद एव ॥ | १३१ |
| प्रत्याख्यातविकृतीनामुत्कृष्टद्रव्याणि भक्ष्यन्ते न वा ॥ | १३२ |
| संगरराजिका द्विदलानि भवन्ति न वा ॥ | १३३ |
| कण्डुकगोवारप्रभृतीनां द्विदलत्वापादनम् ॥ | १३४ |
| पञ्चोदुम्बर्यादयो भोक्तव्या न वा ॥ | १३४ |
| उद्यमनं विना कृत कल्याणकादितपो निष्फल स्यात् वा ॥ | १३६ |
| अपूजिता सती यस्य कुलदेवता प्रतिकूलमाचरति स किं करोति ॥ | १३६ |
| ग्रन्थकारस्य वंशादिकनिरूपणम् ॥ | १३८ |

अर्हम्

श्रीस्तम्भनपार्श्वनाथस्वामिभ्यो नमः।

श्रीमज्जिनदत्तसूरिविरचिता वाचनाचार्यश्रीप्रबोधचन्द्रगणिविरचितवृत्तिसहिता

# ॥ सन्देहदोलावली ॥



श्रीवर्द्धमानप्रभुमानमाम्यहं यज्ज्योतिषि स्फूर्जति सर्वतो मुखे ॥
न स्थातुमत्र क्षणमात्रमप्यलं तमोमयोऽनेकमुखोऽपि संशयः॥ १ ॥

जैनाय ज्योतिषे स्वस्ति यत्र साक्षिणि तत्क्षणात् ॥ जायतेऽभीष्टदा सिद्धिर्भग्नधैर्यबला ध्रुवम् ॥ २ ॥
श्रीजिनेश्वरसूरीणां वचनाय नमो नमः ॥ यदभूत् प्रतिभूः सिद्धिवधूपाणिग्रहोत्सवः ॥ ३ ॥
ज्ञानदानगुरून् वन्दे यद्वाणीदीपिकारुचा ॥ वाङ्मये विवरे स्वैरं सिद्ध्यर्थी विचराम्यहम् ॥ ४ ॥

स्वैरं यैर्विहरद्भिरत्र भुवने सर्वज्ञकल्पैस्तथाऽनन्यव्याहतदेशनालहरिभिर्मिथ्यात्वमुन्मूलितम् ॥
एते सम्प्रति संशयप्रभृतयस्तन्मूलभूता यथा निर्जीवा इव नोच्छ्वसन्त्यपि मनाक् कालेऽनुकूलेऽपि हि ॥२॥

तैः पूज्यपादैर्जिनदत्तसूरिभिः कृतेऽत्र शास्त्रे जिनशासनानुगे ॥
सन्देहदोलावलिनाम्नि लेशतः करोमि वृत्तिं स्वगुरूपदेशतः ॥ ३ ॥

इह हि किलातिशायिज्ञानिभिर्भट्टारकश्रीजिनदत्तसूरिभिः दुःषमाकालमाहात्म्याविर्भवदसन्मार्गसंसर्गोल्लसदनेकशङ्कापङ्ककलङ्कितानि भविष्यद्धार्मिकलोकधर्मानुष्ठानानि माऽभूवन्निति परोपकाररसिकतया स्वोत्प्रेक्षितसम्भाव्यप्रश्नमालानुसारिसारोत्तराभिधायकं संशयपदप्रश्नोत्तरनामकं प्रकरणं चक्रे ॥ तच्च इह "सन्देहदोलावली" इति नाम्ना प्रसिद्धम् । तस्य चायमर्थः—"सन्देहा एव अनिश्चयात्मकत्वेन दिग्द्वयस्पर्शित्वाद्दोला इव दोलाः प्रेङ्खाः सन्देहदोलाः, तासामावली माला" ॥ सा उत्तरदानेन निराकार्यतयाऽभिधेया, यस्यां ग्रन्थपद्धतौ सा 'सन्देहदोलावली' इति ॥

तत्र चिकीर्षितग्रन्थप्रारम्भे "परमात्मनो नाम अभ्युपादीयमानमभिप्रेतसिद्धिं सम्पादयते, किं पुनस्तेषां सद्भूतगुणोत्कीर्त्तनम् ?" इति । अभीष्टार्थसिद्ध्यर्थमभीष्टदेवतास्तवनम् च । तथा शास्त्रे—"प्रेक्षावतामभिधेयसम्बन्धप्रयोजनावधारणपूर्विका प्रवृत्तिः, अन्यथा प्रेक्षावत्ताक्षतिः" इति ॥

श्रोतॄणां प्रवृत्त्युत्साहोत्पादनार्थमभिधेयादि च प्रतिपिपादयिषुः गाथाद्वयमाह—

"पडिबिम्बिय पणयजयं जस्संघिरुहोरुमउरमालासु । सरणागयं व नज्जइ तं नमिय जिणेसरं वीरं ॥ १ ॥

कइवयसन्देहपयाणमुत्तरं सुगुरुसंपयाएणं । वुच्छं मिच्छत्तमओ तमत्तहा होइ संसइणं" ॥ २ ॥

व्याख्या—तत्राद्यगाथायां अभीष्टदेवतास्तवः, द्वितीयगाथायां चाभिधेयं साक्षादस्ति। सम्बन्धप्रयोजने तु सामर्थ्यगम्ये, इदं हि प्रकरणं सन्देहपदोत्तराणां परिज्ञाने उपायः, इत्युपायोपेयलक्षणः सम्बन्धः। प्रयोजनं तु द्विधा—'अनन्तरं परंपरं' च। पुनः प्रत्येकं द्विधा—'कर्तृश्रोतृ'भेदात्। तत्र सन्देहसन्दोहापहरणं कर्तुरनन्तरं प्रयोजनम्। यथावस्थितजिनवचनप्रकाशनम् च। श्रोतुश्च तत्त्वज्ञानं शुद्धधर्मप्रवृत्तिश्च॥ परंपरं प्रयोजनं त्वाचार्यस्यार्थप्रदानलक्षणे स्वकृत्ये अग्लान्या प्रवृत्तत्वेन परमपदमेव। यदुक्तं भगवत्यां—

आयरिय-उवज्झाए णं भंते! सविसयम्मि गणं अगिलाए संगिण्हमाणे उवगिण्हमाणे कइहिं भवग्गहणेहिं सिज्झइ, जाव अंतं करेइ? गोयमा! अत्थेगइए तेणेव भवग्गहणेणं सिज्झइ, अत्थेगइए दुच्चेणं भवग्गहणेणं सिज्झइ, तच्चं पुण भवग्गहणं नाइक्कमइत्ति ॥

स्वविषये अर्थप्रदानसूत्रप्रदानलक्षणे गणं अग्लान्या अखेदेन सङ्गृह्णन् स्वीकुर्वन्नित्यर्थः। श्रोतुरप्येतदेव, सम्यग्ज्ञानपूर्विकायाः शुद्धधर्मप्रवृत्तेर्मोक्षहेतुत्वात्। यदुक्तम्—'नाणकिरियाहिं मोक्खोत्ति'। इति समुदायार्थः॥ अवयवार्थोऽधुना विविच्यते। वुच्छं वक्ष्ये भणिष्यामि। उत्तरं प्रतिवचनम्। कपामिलव आह—कतिपयसन्देहपदानाम्। सन्देहाः "अयं किमेवमन्यथा

था" इत्यादिरूपाः संशयाः, तेषां पदानि स्थानानि सन्देहपदानि । कतिपयानि परिमितानि । समस्तसन्देहापहरणे हि चतुस्त्रिंश-
दतिशयकलितत्वात् भगवान् 'अर्हन्' एव समर्थो, नान्यः । तानि च तानि सन्देहपदानि, च कतिपयसन्देहपदानि, तेषां संमुग्ध-
स्थानानामित्यर्थः ॥ अथवा पदशब्दो वाक्यार्थः, तदर्थस्याप्यस्य भावात् । यदुक्तं अनेकार्थे—"पदं स्थाने विभक्त्यन्ते शब्दे
वाक्येऽङ्कवस्तुनोः, त्राणे पादे पादचिह्ने व्यवसायापदेशयोः" ॥ १ ॥ इति ॥ ततश्च सन्देहपदानां संशयवाक्यानां जैनाभासो-
पासकव्यापरणदर्शनोच्छलद्बहुलेकातिरेकप्रवृत्तानां प्रश्नानामित्यर्थः, तेषामेव नियमेनोत्तरदानयोग्यत्वात् ।

एवंच श्रीवीठणहिण्डाभिधानपत्तनवास्तव्यया कयाचित् खरतरपरमश्राविकया प्रतिदिनमात्मगुरूपदिष्टधर्मानुष्ठानानि
अनुतिष्ठन्त्या स्वव्यापरणाननुरूपगच्छान्तरीयश्रावकव्यापरणदर्शनात् तथाविधसुगुरुसम्पर्काभावाच्च समुद्भवन्तः सन्देहाः सम्य-
गुत्तरलाभार्थं विज्ञप्तिकायां लिखित्वा दूरदेशप्रवेशपेशलितानार्यप्रायजनमनसां श्रीअम्बिकादेवताप्रकटितयुगप्रधानत्वालङ्कृत-
नामधेयानां श्रीजिनदत्तसूरीणां पादमूले प्रेषिताः । श्रीमत्पूज्यैश्च वाचनानन्तरमेव तस्या भविष्यल्लोकानामप्युपकाराय
सरलोक्तित्वात् सुगमार्थं सार्धशतगाथाप्रमाणमेतत् प्रकरणं विरचितमित्येषाऽपि प्रसिद्धिर्वृद्धपरम्परया निशम्यमाना समूला
भवतीति ॥

ननु—यदि सुगमबोधमिदं तर्हि किमिति व्याख्यातुमारब्धम् ? उच्यते । सिद्धान्तादिसंवाददानेन द्रढयितुम्, न पुनः गूढ-
गर्भं प्रकटयितुम् । "तत्किमत्र सैद्धान्तिकमेवोत्तरं वक्ष्यते, न पुनः स्वप्रतिभयोत्प्रेक्षितम् । एवं च अस्य किं बुद्धिवैभवम् ? पर-

वचनोपजीवित्वात्" इत्यत आह—'सुगुरुसंपयाएण' इति । शोभनाः पञ्चविधाऽऽचारवत्त्वेन प्रधानाः गुरवः सुगुरवः, सिद्धान्तशुद्धप्ररूपकाः, शोभनाश्च ते गुरवश्च सुगुरवः, तेषां सम्प्रदाय आम्नाय उपदेश इति यावत् । सुगुरुसम्प्रदायस्तेन । सिद्धान्तस्यास्य युक्तस्य सुगुरूपदेशमन्तरेण बीजाक्षरस्य इव दुरधिगमत्वात् ॥ यदुक्तम्—"गूढं पवयणसारं अंगोवंगे समुद्दसरिसम्मि । जइ अम्हारिसेहिं कत्तो तं नज्जइ मन्दबुद्धीहिं" ॥ "तं पुण आयरिएहिं पारंपरएण इत्थ जं पत्तं" ॥ अत्र यावत्नासमित्यर्थः । जइ हुज्जइ न आयरिया को तं जाणिज्ज सारमिणं" ॥ तं तदेत्यर्थः । अयमाशयः—"स्वप्रतिभोत्प्रेक्षितेनाप्युत्तरेण युक्त्या जल्पमानेन जनः प्रत्याय्यत एव । केवलं तत्सिद्धान्ताऽननुयायित्वेन अनास्थाजनकत्वेन विसंवादित्वेन च दुरन्तसंसारकारणमिति तदुपेक्ष्य वृद्धपरम्परयाऽवगतमागमिकमेव तद्वक्ष्ये" इति ॥

अत्रैकवचनान्तोत्तरपदेन भ्रान्तः कश्चित् आह—

ननु—"एकेन उत्तरेण भगवान् 'अर्हन्' एव अनेकान् संशयांश्छोटयितुं क्षमः, तादृग्वचनातिशयसम्पन्नत्वात् । ग्रन्थकारस्तु सातिशयोऽपि तादृगतिशयरहित एवेति, कथममुना प्रतिज्ञातम्—'अनेकेषां संशयानामेकमुत्तरं वक्ष्ये इति" ॥

सत्यम् । जातिविवक्षया एकवचनम् । यथा—'सम्पन्नो' यव इति । तद्विवक्षा च प्रतिसन्देहमेकमेवोत्तरं दास्ये इति ज्ञापनार्थम् । बहुवचने तु 'किं प्रतिसन्देहमनेकान्युत्तराणि अत्र दास्यन्ते' इति सन्देहः स्यात् ।

या" इत्यादिरूपाः संशयाः, तेषां पदानि स्थानानि सन्देहपदानि । कतिपयानि परिमितानि । समस्तसन्देहापहरणे हि चतुस्त्रिंशदतिशयकलितत्वात् भगवान् 'अर्हन्' एव समर्थो, नान्यः । तानि च तानि सन्देहपदानि, च कतिपयसन्देहपदानि, तेषां संमुग्धस्थानानामित्यर्थः ॥ अथवा पदशब्दो वाक्यार्थः, तदर्थस्याप्यस्य भावात् । यदुक्तं अनेकार्थे—"पदं स्थाने विभक्त्यन्ते शब्दे वाक्येऽङ्कवस्तुनोः, त्राणे पादे पादचिह्ने व्यवसायापदेशयोः" ॥ १ ॥ इति ॥ ततश्च सन्देहपदानां संशयवाक्यानां जैनाभासोपासकव्यापरणदर्शनोच्छलद्बहुलरेकातिरेकप्रश्नानां प्रश्नानामित्यर्थः, तेषामेव नियमेनोत्तरदानयोग्यत्वात् ।

एवं च श्रीचीठणाह्निण्डाभिधानपत्तनवास्तव्यया कयाचित् खरतरपरमश्राविकया प्रतिदिनमात्मगुरूपदिष्टधर्मानुष्ठानानि अनुतिष्ठन्त्या स्वव्यापरणाननुरूपगच्छान्तरीयश्रावकव्यापरणदर्शनात् तथाविधसुगुरुसम्पर्काभावाच्च समुद्भवन्तः सन्देहाः सम्यगुत्तरलाभार्थं विज्ञप्तिकायां लिखित्वा दूरदेशप्रवेशपेशलितानार्यप्रायजनमनसां श्रीअम्बिकादेवताप्रकटितयुगप्रधानत्वालङ्कृतनामधेयानां श्रीजिनदत्तसूरीणां पादमूले प्रेषिताः । श्रीमत्पूज्यैश्च वाचनानन्तरमेव तस्या भविष्यल्लोकानामप्युपकाराय सरलोक्तित्वात् सुगमार्थं सार्धशतगाथाप्रमाणमेतत् प्रकरणं विरचितमित्येषाऽपि प्रसिद्धिर्वृद्धपरम्परया निशम्यमाना समूला भवतीति ॥

ननु—यदि सुखबोधमिदं तर्हि किमिति व्याख्यातुमारब्धम् ? उच्यते । सिद्धान्तादिसंवाददानेन द्रढयितुम्, न पुनः गूढमर्थं प्रकटयितुम् । "तत्किमत्र सैद्धान्तिकमेवोत्तरं वक्ष्यते, न पुनः स्वप्रतिभयोत्प्रेक्षितम् । एवं च अस्य किं बुद्धिवैभवम् ? पर-

जणइ, नाणदंसणचरित्तबोहिलाभसंपण्णे णं जीवे अन्तकिरियं कप्पविमाणो च वत्तिअं आराहणं आराहेइ" इति ॥ प्रसङ्गतस्तु
विघ्नोपशान्तिरपीति ।

अथ व्यतिरेकमुखेन प्रकरणकरणप्रयोजनमाह—

अथ व्यतिरेकमुखेन प्रकरणकरणप्रयोजनमाह— तदन्यथा उत्तरदानमन्तरेण । अत एभ्यो
मिच्छत्तमओ तमन्नहा होइ संसइयं इति । तमिति पुंस्त्वं प्राकृतत्वात् । यतो मिथ्यात्वं पञ्चधा भवति ।
हृदयस्थसन्देहेभ्यः, मिथ्यात्वं विपरीतबोधरूपं प्रथमगुणस्थानकम् । सांशयिकं सांशयिकसंज्ञम् । संसयकरणं जं
यदुक्तम्—"जीवाइपयत्थेसु जिणोवइट्ठेसु जा असद्दहणा । सद्दहणा वि य मिच्छा विवरीयपरूवणा जा य ॥ १ ॥
चिअ जो तेसु अणायरो पयत्थेसु । तं पञ्चविहं मिच्छत्तं तद्दिट्ठी मिच्छदिट्ठी अ" ॥२॥ इति ॥ इदं च प्रथमत एव, क्रमेण तु शेषाण्यपि
अश्रद्धानादीनि । भवति जायते । सन्दोग्धॄणामिति शेषः । अयमभिप्रायः—सांशयिकमिथ्यात्वोद्भवनिवारणार्थमेवाऽयमारम्भो
ऽन्यथा सम्यगुत्तरालाभेन साद्यन्तास्ते सन्देहाः प्रतिपन्थित्वेनौन्नत्यमसहमाना द्वादशव्रतधारिणमपि सिद्धिसौधाधिरोहैकहेतु
गुणस्थानश्रेणिनिश्रेणि चतुर्थादिगुणस्थानपदस्थिततो गले गृहीत्वा नयन्त्येव यावत् प्रथमं गुणस्थानमित्यर्थः ॥ २ ॥

ननु "तथापि एतावान् प्रयासो न युक्तियुक्तः प्रतिभाति । यावता यस्य कस्यापि यदा कदापि सन्देह उत्पत्स्यते स यदि
तत्त्वं निर्निनीषुर्धर्मश्रद्धालुश्च तदा तत्क्षणमेव सुगुरूणां पादमूले गत्वा तदुपदेशान्निश्चितं धर्माधर्मस्वरूपमवगम्य च निःसन्दि-
ग्धो भविष्यति" इत्यत आह—

"ननु चानेकान्येव तानि कस्मान्न दीयन्ते, प्रतिभाविशेषद्योतकत्वात्"? इति न वाच्यम्। वक्तुरसम्यग्ज्ञानख्यापकत्वात्, यदुक्तम्—'व्याख्यानमनेकविधं लिङ्गमबोधस्य, धूम इव वह्नेः'। मूलं मार्गमजानन् प्रयात्यनेकान् पथो मुग्धः। श्रोतुः सन्देहापादकत्वाच्च ॥

किं कृत्वा? नत्वा नमस्कृत्य। कम्? वीरम्। शूरवीरविक्रान्ताविति। वीरयति अष्टप्रकारकर्मशत्रून् प्रति विक्रामति, इति वीरः। अचूपचादिभ्य इत्यच् प्रत्ययः, तं वीरं वर्द्धमानस्वामिनं जिनाः सामान्यकेवलिनः तेषामीश्वरं चतुस्त्रिंशदतिशयर्द्धिमत्त्वेन स्वामिनं तं, वीरं नत्वा उत्तर वक्ष्ये। यस्य किमित्यत आह—जस्संघित्ति। यस्य अङ्घ्रिरुहाः पादनखाः ते एव उरवो महान्तो मुकुरा आदर्शाः अङ्घ्रिरुहोरुमुकुराः, तेषां माले पङ्क्ती अङ्घ्रिरुहोरुमुकुरमाले, तयोः। क्रमनखमहिष्ठदर्पणश्रेण्योरित्यर्थः। द्विवचने बहुवचनं प्राकृतत्वात्। यदुक्तं प्राकृतलक्षणे—"बहुवयणेण दुवयणं छट्ठी विभत्तीइ भण्णइ चउत्थी। जह हत्था तह पाया नमुत्थु देवाहिदेवाणं" इति॥ प्रतिबिम्बितं प्रतिफलितम्। विभक्तिलोपः प्राकृतत्वात्॥ किमित्याह—पणयजयं। प्रणतं प्रह्वीभूतं जगत् विश्वम्। जगच्छब्देन आधाराधेययोरभेदोपचारात् भव्याः क्रोशन्तीतिवज्जगदन्तर्गतसंज्ञिप्राणिवर्गोऽभिधीयते, तस्यैव समवसृतया भगवत्पादप्रणमनसम्भवात्। प्रणतं च तत् जगच्च प्रणतजगत्॥ किमित्याह—ज्ञायते उत्प्रेक्ष्यते कविनेति शेषः॥ शरणागतमिव त्राणार्थं प्रविष्टमिव। अनेन च स्तुतिमङ्गलेन शास्त्रारम्भे एव मुख्यतो ज्ञानदर्शनाद्युत्तररत्नानां विशिष्टतरलाभः कथितः। यदुक्तम्—"थय-थुइमंगलेणं भंते? जीवे किं जणइ? गोयमा! थइ-थुइमंगलेणं नाणदंसणचरित्तबोहिलाभं

पूर्यमाणाभिप्रेतप्राप्तिमनोरथत्वात् । ये ये उत्साहे कृतेऽप्यपूर्यमाणाभिप्रेतप्राप्तिमनोरथास्ते ते अभिप्रेतप्रतिकूलकर्मोदयवन्तः, यथा भिक्षार्थं भ्राम्यन्न प्राप्तभिक्षो ढण्ढणकुमारः । तथा चैते । तस्मात्तथा" इति ॥ २ ॥

'ततश्च किमित्यत आह—'गीयत्थाणं' इत्यादि । गीतार्थानां समग्रोत्सर्गापवादसूत्रचर्चाचतुराणां गुरूणां धर्माचार्याणाम् । अदर्शनात् अनालोकनात् । कथमित्याक्षेपे । 'कथं केन प्रकारेण' भवेत् स्यात् । श्रवणम् आकर्णनम् । 'समस्तसन्देहहरस्य गुरूपदिश्यमानस्य जिनवचनस्य' इति शेषः । अयमाशयः—"यद्यपि ते निरुपमशुश्रूषाधर्मरागादिगुणवत्त्वेन गुरुपदेशं श्रोतुमहर्निशमुत्सहमानाः सन्ति, तथापि प्रतिलोमकर्ममहिम्ना विदेशवासित्वे जाते तं न श्रोतुं शक्नुवन्ति" इति ॥

"एवमपि किम् ?" इत्यत आह—'सवणंति' श्रवणं शुभगुरूपदेशस्याकर्णनम् । विना अन्तरेण । कथमित्याक्षेपे, कुगतिपतज्जन्तुधारकः, शुभस्थाने जन्तुधायको वा, सत्कृत्यजन्मा जीवगुणो धर्मः । यदुक्तम्—

"दुर्गतिप्रसृतान् जन्तून् यस्माद्धारयते ततः । धत्ते चैतान् शुभे स्थाने तस्माद्धर्म इति स्मृतः"

इति ॥ तद्विपरीतोऽधर्मः पातकम् । धर्मश्च अधर्मश्च धर्माधर्ममिति समाहारत्वादेकवचनम् । विलक्ष्येत विशेषेण ज्ञायेत ? गुरूपदेशविशेषश्रवणं विनाऽभूतत्वाद्धर्माधर्मतत्त्वावगमस्य । अत एवोक्तम्—

"सुच्चा जाणइ कल्लाणं सुच्चा जाणइ पावगं । उभयं पि जाणइ सुच्चा जं सेयं तं समायरे"

सुगुरुपयदंसणं पइ कयाभिलासेहिं सावयगणेहिं । परमसुहकम्मपयडिप्पडिसिद्धतदिट्ठसङ्गेहिं ॥ ३ ॥
गीयत्थाणं गुरूणं अदंसणाओ कहं भवे सवणं । सवणं विणा कहं पुण धम्माधम्मं विलक्खिज्जा ॥ ४ ॥

व्याख्या—निरवद्यमार्गे यः स्वयं प्रवर्तते, अन्यांश्च प्रवर्तयति स सुगुरुः । यदुक्तम्—

अवद्यमुक्ते पथि यः प्रवर्तते प्रवर्तयत्यन्यजनं च निःस्पृहः ।
स सेवितव्यः स्वहितैषिणा गुरुः स्वयं तरंस्तारयितुं क्षमः परम् ॥ १ ॥

इति ॥ तस्य पदानि चरणाः सुगुरुपदानि, तेषां दर्शनं अवलोकनं सुगुरुपददर्शनम् । तत्प्रति उद्दिश्य कृतोऽभिलाषः, उत्कण्ठा यैस्ते, तथा तैरपि, अपि अत्र अनुक्तोऽपि द्रष्टव्यः, श्रावकगणैः श्राद्धवृन्दैः, परं केवलं स चासौ इष्टश्च तदिष्टः, परमपदोपायप्रदर्शकत्वेन वल्लभो गुरुः । तस्य सङ्गः सम्पर्कः तदिष्टसङ्गः । अशुभा मनश्चिन्तितकार्यप्रतिबन्धकत्वेन प्रतिकूलाः कर्मप्रकृतयो ज्ञानावरणीयादिकर्मभेदाः, अशुभाश्च ताः कर्मप्रकृतयश्च अशुभकर्मप्रकृतयः । ताभिः प्रतिषिद्धो निवारितः तदिष्टसङ्गः शुभगुरुयोगो येषां ते, तथा तैः अशुभकर्मप्रकृतिप्रतिषिद्धतदिष्टसङ्गैः, गुरुर्द्रष्टुमपि न लभ्यते इत्यर्थः । अयमाशयः—"साध्यमेवारब्धुमुत्सहन्ते मन्तः; परं तदपि कर्तुमतर्कितोदितप्रतिलोमकर्मणां सकाशात् न लभन्ते" । यदुक्तम्—

"कम्मेहिं वज्जमारोयमेहिं जओ नन्दणो वि पडिबुद्धो । सुयहं पि विसूरंतो न तरइ अप्पक्खमक्काउं"

इति ॥ गुरुसङ्गप्रतिबन्धककर्मोदयानुमानं चेत्थम्—"विवादाध्यासिता अभिप्रेतप्रतिकूलकर्मोदयवन्तः, उत्साहे कृतेऽप्य-

पूर्यमाणाभिप्रेतप्राप्तिमनोरथत्वात् । ये ये उत्साहे कृतेऽप्यपूर्यमाणाभिप्रेतप्राप्तिमनोरथास्ते ते अभिप्रेतप्रतिकूलकर्मोदयवन्तः, यथा
भिक्षार्थं भ्राम्यन्न प्राप्तभिक्षो ढण्ढणकुमारः । तथा चैते । तस्मात्तथा" इति ॥ ३ ॥

ततश्च किमित्यत आह—'गीयत्थाणं' इत्यादि । गीतार्थानां समग्रोत्सर्गापवादसूत्रचर्चाचतुराणां गुरूणां धर्माचार्याणाम् । अदर्शनात् अनालोकनात् । कथमित्याक्षेपे । 'कथं केन प्रकारेण' भवेत् स्यात् । श्रवणम् आकर्णनम् । 'समस्तसन्देहहरस्य गुरूपदिश्यमानस्य जिनवचनस्य' इति शेषः । अयमाशयः—"यद्यपि ते निरुपमशुश्रूषाधर्मरागादिगुणवत्त्वेन गुरूपदेशं श्रोतुमहर्निशमुत्सहमानाः सन्ति, तथापि प्रतिलोमकर्ममहिम्ना विदेशवासित्वे जाते तं न श्रोतुं शक्नुवन्ति" इति ॥

"एवमपि किम् ?" इत्यत आह—'सवणंति' श्रवणं शुभगुरूपदेशस्याकर्णनम् । विना अन्तरेण । कथमित्याक्षेपे, कुगतिपतज्जन्तुधारकः, शुभस्थाने जन्तुधायको वा, सत्कृत्यजन्मा जीवगुणो धर्मः । यदुक्तम्—

"दुर्गतिप्रसृतान् जन्तून् यस्माद्धारयते ततः । धत्ते चैतान् शुभे स्थाने तस्माद्धर्म इति स्मृतः"

इति ॥ तद्विपरीतोऽधर्मः पातकम् । धर्मश्च अधर्मश्च धर्माधर्ममिति समाहारत्वादेकवचनम् । विलक्ष्येत विशेषेण ज्ञायेत ? गुरूपदेशविशेषश्रवणं विनाऽभूतत्वाद्धर्माधर्मतत्त्वावगमस्य । अत एवोक्तम्—

"सुच्चा जाणइ कल्लाणं सुच्चा जाणइ पावगं । उभयं पि जाणइ सुच्चा जं सेयं तं समायरे" ॥

पुनःशब्दो विशेषणे। स चेदं विशिनष्टि। यथा—गुरुवचनश्रवणे सत्यपि यौ धर्माधर्मौ महाकष्टेन लक्ष्येते तौ कथं तदभावे लक्षयितुं शक्यते इत्यर्थः ॥ ४ ॥

अथ कोऽसौ विशेषो यो धर्माधर्मयोर्न लक्ष्यते इत्याह—

"कहमित्थ पयट्टाणं धम्मो संभवइ कहमधम्मो य" इति।

व्याख्या-कथं केन प्रकारेण अत्र जगति प्रवृत्तानां धर्मसाधनार्थमुद्यतानां धर्मोऽनन्तरोक्तस्वरूपः सम्भवति सम्पद्यते, कथं केन प्रकारेण प्रवृत्तानाम् अधर्मश्च, चः समुच्चये, पातकं च सम्भवतीति न विलक्ष्यते इति सम्बन्धः। यद्यपि धर्माधर्मौ लोकरूढ्यादेः सामान्येन ज्ञायेते एव, यथा—'आत्मनः सुखहेतुर्धर्मः, दुःखहेतुस्त्वधर्म' इति, तथापि यथा प्रवृत्तानां धर्माधर्मौ स्यातां तथा न बुध्येते। तदेकान्तकारणस्य भगवदर्हदाज्ञाराधनाविराधनारूपस्य विशेषस्य सुगुरूपदेशबाह्यानां दुर्लभत्वात् ॥ एतेनेदमुक्तम्-"सदनुष्ठाने प्रवृत्तस्याप्याज्ञाराधनेनैव धर्मो, न अन्यथा" इति। यदुक्तम्-"किं भंते जे गिलाणं पडियरइ से धन्ने उदाहु, जे तुमं सम्म, दंसणेणं पडिवज्जइ, गोयमा जे गिलाणं पडियरइ से धण्णे, से केणट्ठेणं भंते एवं वुचइ, गोयमा। जे गिलाणं पडियरइ से मम संमदंसणेण पडिवज्जइ, जे मं संमदंसणेणं पडिवज्जइ, से गिलाणं पडियरइत्ति" आणाकरणं खु अरहंताणं दंसणं" इति। एवमष्टादशसु पापस्थानेष्वपि प्रवृत्तस्याज्ञाविराधनेनैव अधर्मो, न अन्यथा। शासनप्रत्यनीकगर्दभिल्लनृपवंशमूलोच्छेदिनां श्रीकालिकाचार्यादीनां निष्कलङ्कचारित्रित्वादिति भावः।

अथ 'गुरुवचनश्रवणं विना धर्माधर्मयोर्दुर्लक्षत्वं' यदुक्तं तत्र धर्मदुर्लक्षत्वे हेतुमाह—

**धम्मो वि दुहा इह दव्वभावभेएहिं सुपसिद्धो त्ति ॥ ५ ॥**

व्याख्या—धर्मः सुकृतहेतुजिनगृहविधापनादिस्वरूपः । अपिरेवकारार्थः, ततो यस्मात्तद् द्विधा द्विप्रकारः । इह प्रवचने, किं यति-
श्रावकसम्बन्धिभेदाभ्याम्? 'न' इत्याह—'दव्वभावभेएहिं' द्रव्यशब्दो गौणवचनः, भावशब्दो मुख्यवचनः भेदशब्दो
विशेषवचनः । ततो द्रव्यं च भावश्च द्रव्यभावौ । तौ च तौ भेदौ च द्रव्यभावभेदौ, ताभ्याम् । अत्र बहुवचनं प्राकृतत्वात् ।
तत्र गौणो धर्मः स्वकार्यासाधकत्वेनाऽन्वर्थरहितत्वाद्द्रव्यधर्मः, मुख्यस्तु स्वकार्यसाधकत्वेन सान्वयत्वाद्भावधर्म इति । सुप्रसिद्धो,
विख्यातः । यदुक्तं 'आवश्यकनिर्युक्तौ'—"दुविहो य होइ धम्मो" दव्वधम्मो य भावधम्मो य" इति ॥ तथाहि बाह्यतः समानमपि हि
द्वादशावर्तवन्दनकं वीरकशालापतेः सुकृतासाधकत्वेन द्रव्यधर्मः, कृष्णवासुदेवस्य तु विशिष्टनिर्जराकारणत्वेन भावधर्म एव । ततः
कथं ज्ञायते सुगुरूपदेशमन्तरेण? यथा इदमित्थमनुष्ठीयमानं सुकृतहेतुः, इदमन्यथा" इति भावः ॥ ५ ॥

सम्प्रति विनेयजनानुग्रहाय द्रव्यधर्मभावधर्मौ प्रकटयिष्यन् प्रथमतः सार्धगाथया द्रव्यधर्मलक्षणमाह—

**गड्डरियपवाहाओ जो पइनयरं दीसए बहुजणेहिं । जिणगिहकारवणाई सुत्तविरुद्धो असुद्धो अ ॥ ६ ॥"**

**सो होइ दव्वधम्मो अपहाणो नेय निव्वुइं जणइ त्ति ॥**

व्याख्या—गड्डर्य ऊरण्यः तासां प्रवाहः स्थितिः, यदुक्तम्—'प्रवाहो व्यवहाराम्बुवेगयोः' इति व्यवहारस्य तु स्थितिपर्यायत्वात्,

पुनःशब्दो विशेषणे । स चेदं विशिनष्टि । यथा--गुरूपदेशश्रवणे सत्यपि यौ धर्माधर्मौ महाकष्टेन लक्ष्येते तौ कथं तद्-भावे लक्षयितुं शक्यते इत्यर्थः ॥ ४ ॥

अथ कोऽसौ विशेषो यो धर्माधर्मयोर्न लक्ष्यते इत्याह--

"कहमित्थ पयट्टाणं धम्मो संभवइ कहमधम्मो य" इति ।

व्याख्या-कथं केन प्रकारेण अत्र जगति प्रवृत्तानां धर्मसाधनार्थमुद्यतानां धर्मोऽनन्तरोक्तस्वरूपः सम्भवति सम्पद्यते, कथं केन प्रकारेण प्रवृत्तानाम् अधर्मश्च, चः समुच्चये, पातकं च सम्भवतीति न विलक्ष्यते इति सम्बन्धः । यद्यपि धर्माधर्मौ लोकरूढ्यादेः सामान्येन ज्ञायेते एव, यथा--'आत्मनः सुखहेतुर्धर्मः, दुःखहेतुस्त्वधर्म' इति, तथापि यथा प्रवृत्तानां धर्माधर्मौ स्यातां तथा न बुध्येते । तदेकान्तकारणस्य भगवदर्हदाज्ञाराधनाविराधनारूपस्य विशेषस्य सुगुरूपदेशवाह्यानां दुर्लक्ष्यत्वात् ॥ एतेनेदमुक्तम्--"सदनुष्ठाने प्रवृत्तस्याप्याज्ञाराधनेनैव धर्मो, न अन्यथा" इति । यदुक्तम्--"किं भंते जे गिलाणं पडियरइ से धन्ने उदाहु, जे तुमं दंसणेणं पडिवज्जइ, गोयमा जे गिलाणं पडियरइ से धण्णे, से केणट्ठेणं भंते एवं वुच्चइ, गोयमा । जे गिलाणं पडियरइ से मम दंसणेणं पडिवज्जइ, जे मं दंसणेणं पडिवज्जइ, से गिलाणं पडियरइ त्ति" आणाकरणं खु अरहंताणं दंसणं" इति । एवमष्टादशसु पापस्थानेष्वपि प्रवृत्तस्याज्ञाविराधनेनैव अधर्मो, न अन्यथा । शासनप्रत्यनीकगर्दभिल्लनृपराज्योच्छेदिनां श्रीकालिकाचार्यादीनां निष्कलङ्कचारित्रित्वादिति भावः ।

घायी । यदि वा निष्ठीवनादिकरणं 'असकहा अणुचिया सणाइया । आययणंसि अभोगो इत्थं देवा उदाहरणं 'देवहरयाम्मि देवा- विसयविसविमोहिया वि न कया वि । अच्छरसाहिं पि समं हासकीडाइं वि करेन्ति' इत्यादि श्रुतस्य निष्ठीवनाद्याशातना- वर्जनाभिधायकस्य विरुद्धः सर्वाशातनाप्रवृत्तिमत्त्वेन व्याघातकारी । अथवा 'जिणभवणकारणविही सुद्धाभूमी दलं च कट्ठाई । भियगाण य सन्धाणं सासयवुड्ढी य जयणा य' इत्यादिग्रन्थस्य प्रवचनप्रावीण्यव्यञ्जकचैत्यनिर्मापणविधिदर्शकस्य विरुद्धोऽशुद्धभू- म्यादिदलपूर्वकत्वेन वेश्यापाटकमद्यापणपाटकद्यूतखलकमत्स्यबन्धकचर्मकारछिम्पकरजकबन्धकारचित्रकारादिनिन्द्यजनपाटकान्त- र्गतत्वेन देवप्रतिबद्धस्थावरप्रायोग्यकूपवाटिकाक्षेत्रोद्भूतिककरकारापणादिकोत्सूत्राचारप्रचारवत्त्वेन च प्रतिकूलः । सूत्रविरुद्धः सूत्र- विरुद्धत्वादित्यर्थः ॥ एतेनाविधिचैत्यमुक्तम् । अविधिचैत्यत्वहेतुदोषरहितस्यापि जिनगृहादेः साधुनिश्रामात्रमिश्रितत्वेन च द्रव्यधर्मत्वमाविष्कर्तुं द्वितीयं हेतुगर्भं विशेषणमाह—'असुद्धो य' इति । अशुद्धः 'तत्थाएसो चयगुनिस्सं' इत्याद्यागमतात्पर्य- पर्यालोचनावधारितनिषेधया साधुनिश्रया कलुषितत्वात् मलिनः, अशुद्धत्वादित्यर्थः । अनेन च निश्राचैत्यमुक्तम् । चः समुच्चये । ततो न केवलम् अविधिचैत्यं द्रव्यधर्मो, निश्राचैत्यमपि । एवं बिम्बादीनामपि द्रव्यधर्मत्वं भावनीयमित्यर्थः ॥ ६ ॥

स भवति जायते । द्रव्यधर्मो गौणधर्मो, धर्माभास इति यावत् । धर्मशब्दस्यान्वयार्थरहितस्य अत्र लोकरूढ्या प्रवृत्तत्वात् स्वयमेव सूत्रकारो द्रव्यशब्दार्थं विवृणोति—'अपहाणो' इति । अप्रधानो धर्मः, द्रव्यशब्दस्य इह अप्राधान्यार्थत्वात् । यदुक्तम्— 'अप्पाहन्ने वि इहं कत्थइ दिट्ठो वि उ दव्वसद्दो त्ति । अङ्गारमद्दगो जह दव्वायरिओ सयाऽभव्वो त्ति, अप्रधानत्वं चास्य कषायकलुग-

च अविधिचैत्यस्य अभावात् तथाहि कल्पचूर्णौ चैत्यद्वारे "ताणि चेइयाणि चउव्विहाणि" तं जहा—"निस्साकड
चेइयाणि १ अनिस्साकडचेइयाणि २ साहम्मियचेइयाणि ३ भत्तिचेइयाणि" ४ इति । यदि पुनः पञ्चमकमपि भवदुक्तं
चैत्यमभविष्यत् तदा तदप्यभ्यधास्यत् वृत्तिकारः । प्रस्तावनसरत्वात् न चाभिहितम् । तस्मात् ज्ञायते नास्त्येवेति चेत् ।
अत्रोच्यते । तत् किं यत् चैत्यमत्र नोक्तं तत्र नास्त्येव । एवं तर्हि अन्यतीर्थिकपरिगृहीतार्हच्चैत्यमपि नास्ति, तस्याप्यत्रानुक्त-
त्वात् । एवं च सम्यक्त्वदण्डके "नो मे कप्पइ अज्जप्पभिइं अन्नतित्थिए वा अन्नतित्थियदेवयाणि वा अन्नतित्थियपरिग्गहि-
याणि अरिहन्तचेइयाणि वा ॥ १ ॥" इत्याद्यालापकस्य नैरर्थक्यम् । 'नैवं नैरर्थक्यम्, भगवद्भिः श्रीभद्रबाहुस्वामिभिरुक्तत्वात्'
इति चेत्, तत् किम्? यत् भद्रबाहुस्वामिभिरुक्तं तत् मान्यं? मान्यमेव । तेषां श्रुतकेवलित्वेन सर्वसम्मतत्वात्' इति चेत् तर्हि
अविधिचैत्यमपि मान्यमेव । अविधिचैत्यं हि अनायतनमुच्यते, तस्य च श्रीभद्रबाहुस्वामिपादैरेव ओघनिर्युक्त्यादावुक्तत्वात् ।
तथाहि ओघनिर्युक्तिः—"जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया । मूलगुणपडिसेवी अणाययणं तं वियाणाहि ॥१॥
जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया । उत्तरगुणपडिसेवी अणाययणं तं वियाणाहि ॥ २ ॥ जत्थ साहम्मिया बहवे
भिन्नचित्ता अणारिया । लिङ्गवेसपडिच्छिन्ना अणाययणं तं वियाणाहि ॥ ३ ॥" इत्यादि ॥
ननु—अत्र कथं चैत्यं लब्धम्? यच्छब्दस्य सर्वनाम्नः सप्तम्यन्तस्य स्थानमात्रवाचित्वात्" इति चेत्, उच्यते—"नाणस्स

१ साहम्मियचेइयाणि १ मंगलचेइयाणि २ सासयचेइयाणि ३ भत्तिचेइयाणीति ४ इतिमन्वान्तरपाठः ॥

मात्समायितत्वात्। तथाहि—मात् कृते चैत्ये कथञ्चित् कश्चित् केनचित् अपमानितः,स च क्रोधाद्द्वितीयमारभते। समानधनेन हीनधनेन वा केनापि कारितं चैत्यमालोक्य 'किमहमस्मादपि हीनः' इत्यभिमानादन्यः। प्रियधर्मराजाऽमात्यादीनावर्जयितुं मायया अन्यतरः। 'अस्य प्रभावान्मे पुत्रादिलाभोऽभूत्' इत्यस्य भवनं घटयामि, यथा पुनरन्योऽप्यभ्युदयो भवतीति लोभादन्यतमः। 'कारयामि किञ्चित् कीर्तनम्, येन आचन्द्रार्कमहं सर्वत्र प्रशस्ये' इत्याशयादपरः। इत्याद्यसङ्ख्यकदवलेपलिप्तं हि तत्। अत एवात्र जातिज्ञातिकदाग्रहग्रस्तोऽपि अनुचितगीतनृत्यवादित्रप्रवृत्तिरपीति। क्लेशयशनिर्मितं च सुकृतमपि दुष्कृतायते। यदुक्तम्—"तव गुणश्रेणिपथूया न संविलिहस्य हुंति ताणाय। रावणागमिविणयरया कुन्तलदेवी उदाहरणं" इति। अथाघात्ये हेतुं फलाभावमाह—नेय निव्वुइं जणइ त्ति। स गतानुगतिक-लोककारितचैत्यादिः नैव निर्वृतिं सिद्धिगतिनामधेयं अतिशुभस्थानं जनयति सम्पादयति। अर्थात् कारापकादीनां प्रासुकासम्भअसश्चिनिर्मापितत्वेन ताम्बूलभक्षणाद्याशातनावत्त्वेन च प्रवचनलाघवहेतुतया सम्यक्त्वमात्रस्याप्यजनकत्वात्। यदुक्तम्—"पाएण णंतदेउलजिणपडिमा कारिया उ जीवेहिं। असमञ्जसवित्तीए नय सिद्धो दंसणलवोवित्ति" ॥ आह यद्येवमस्ति तत् कथं ते महानुभावाः क्लेशशतोपार्जितं द्रव्यमेवं विनियुञ्जते ?' । उच्यते-सद्बोधाभावात्। 'सोऽपि कथम् ?' चेत्, उच्यते कुगुरुवचनैकलीनत्वात् बहुजनासेवितमार्गनिरर्गलरागान्धत्वाच्चेति।

— ... सिद्धान्ते चतुर्विधस्य एव चैत्यस्य उक्तत्वात्, तत्र

"ताणि चेइयाणि चउव्विहाणि" 'तं जहा—"निस्साकड
च अविधिचैत्यस्य अभावात् तथाहि कल्पचूर्णौ चैत्यद्वारे
चेइयाणि १ अनिस्साकडचेइयाणि २ साहम्मियचेइयाणि ३ भत्तिचेइयाणि" ४ इति । यदि पुनः पञ्चमकमपि भवदुक्तं
चैत्यमभविष्यत् तदा तदप्यभ्यधास्यत् वृत्तिकारः । प्रस्तावसरत्वात् न चाभिहितम् । तस्मात् ज्ञायते नास्त्येवेति चेत् ।
अत्रोच्यते । तत् किं यत् चैत्यमत्र नोक्तं तत्र नास्त्येव । एवं तर्हि अन्यतीर्थिकपरिगृहीतार्हच्चैत्यमपि नास्ति, तस्याप्यत्रानुक्त-
त्वात् । एवं च सम्यक्त्वदण्डके "नो मे कप्पइ अज्जप्पभिइं अन्नतित्थिए वा अन्नतित्थियदेवयाणि वा अन्नतित्थियपरिग्गहि-
याणि अरिहन्तचेइयाणि वा ॥ १ ॥" इत्याद्यालापकस्य नैरर्थक्यम् । 'नैवं नैरर्थक्यम्, भगवद्भिः श्रीभद्रबाहुस्वामिभिरुक्तत्वात्'
इति चेत्, तत् किम्? यत् भद्रबाहुस्वामिभिरुक्तं तत् मान्यं? मान्यमेव । तेषां श्रुतकेवलित्वेन सर्वसम्मतत्वात्' इति चेत् तर्हि
अविधिचैत्यमपि मान्यमेव । अविधिचैत्यं हि अनायतनमुच्यते, तस्य च श्रीभद्रबाहुस्वामिपादैरेव ओघनिर्युक्त्यादावुक्तत्वात् ।
तथाहि ओघनिर्युक्तिः—"जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया । मूलगुणपडिसेवी अणाययणं तं वियाणाहि ॥१॥
जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया । उत्तरगुणपडिसेवी अणाययणं तं वियाणाहि ॥ २ ॥ जत्थ साहम्मिया बहवे
भिन्नचित्ता अणारिया । लिङ्गवेसपडिच्छिन्ना अणाययणं तं वियाणाहि ॥ ३ ॥" इत्यादि ॥

ननु—अत्र कथं चैत्यं लब्धम्? यच्छब्दस्य सर्वनाम्नः सप्तम्यन्तस्य स्थानमात्रवाचित्वात्" इति चेत्, उच्यते—"नाणस्स

१ साहम्मियचेइयाणि १ मंगलचेइयाणि २ सासयचेइयाणि ३ भत्तिचेइयाणीति ४ इतिग्रन्थान्तरपाठः ॥

दंसणस्स य चरणस्स य जत्थ होइ वाघाओ। वज्जिज्जवज्जभीरू अणाययणवज्जओ छिप्पं ॥१॥" इति मूलगाथायां 'यत्र आयतने ज्ञानादिव्याघातस्तद्वर्जयेत्' इति चतुश्चत्वारिंशदधिक-चतुर्दशशतप्रकरणकारैः श्रीहरिभद्रसूरिभिः व्याख्यातम्। ततो ज्ञायते तद्विवरणभूतासु 'जत्थसाहम्मिए' इत्यादिष्वपि गाथासु यच्छब्दार्थ आयतनमेव। मूलसूत्रानुसारित्वात् विवरणस्य, आयतनं च चैत्यम्। यदुक्तम्—'अमरकोशनाममालायाम्' 'चैत्यमायतनं तुल्ये' इति प्रवचनेऽपि च'। आयतनशब्दश्चैत्यार्थे प्रयुक्तो दृश्यते। यथा–'आययणम्मि अभोगो इत्थं देवा उदाहरणं' इति। ततोऽत्र चैत्यतया व्याख्यायते।

ननु—"भवतु यच्छब्दार्थो वृत्तिकृता व्याख्यातत्वात् आयतनम्, आयतनस्य तु अर्थश्चैत्यमेव। अत्रेति कथम्? पूर्वसूरिभिरव्याख्यातत्वात् अनेकार्थत्वाच्चास्य। ततो यथा 'भोक्तुर्भोगायतनं शरीरम्' इत्यत्र आयतनशब्दस्यार्थः स्थानमात्रम्' एवमत्रापि प्रतिश्रयमठादिरूपं स्थानमात्रमस्यार्थो भवतु। किं चैत्येन निरर्थकमनायतनीकृतेन?" इतिचेत्,

सत्यम्। किन्तु यदि चैत्यमनायतनं न स्यात् तदा 'जत्थ साहम्मिया बहवे भिन्नचित्ता' इत्यादिकस्य अनायतनलक्षणस्य अव्यापकतादोषः। नहि 'यत्र यत्र भिन्नवृत्तित्वादिविशेषणोपेता लिङ्गिनः साधर्मिका वसन्ति तत्तत् अनायतनम्' इति व्याप्तिरस्ति, चैत्येन व्यभिचारात्। तस्मात् यदि चतुर्दशपूर्वधरश्रीभद्रबाहुस्वामिवचने बहुमानस्तदा स्वीक्रियतां चैत्यस्यापि अनायतनता, यतस्तदैवाऽव्यापकतादोषः परिह्रियते। यदि साध्येन अनायतनत्वेन भिन्नवृत्तित्वादिविशेषणवत् साधर्मिकत्रासोपलक्षितं

चैत्यमचैत्यं वा सर्वं व्याप्यते, नान्यथेति । किञ्च न वयं चैत्यमनायतनं कुर्मः, किं तर्हि ? येऽर्हद्दीक्षां प्रपद्य—अनगणय्य च
चैत्यमध्ये वसन्ति, ते एव कुर्वन्ति । वयं तु केवलमागमोक्तत्वात् ब्रूमः ।

ननु—"चैत्यमनायतनं कुर्मः । इति वक्तुमपि नोचितम्, श्रद्धाभङ्गहेतुत्वात् । गुरुदोषोद्घाटनवत् ॥ तथाहि—महाप्रयासो-
पार्जितद्रव्यापरिमितव्ययेन कारितं चैत्यमनायतनमिति चेत् कर्णकोटरे प्रविष्टं तदा न कोऽपि चैत्यं कारयितुमुत्सहिष्यते । नहि
कस्यापि द्रव्यं मन्दवल्लभम्, येन कमपि लाभमनपेक्ष्य व्ययिष्यते । तथा च चैत्यव्यवच्छेदः" इति चेत्,

मैवम् । नहि चैत्यमिति, अनायतनम्, येनायं प्रसङ्गभङ्गः स्यात् । किन्तु पार्श्वस्थाद्यधिष्ठितमिति । ततश्च पार्श्वस्थाद्यधिष्ठितम-
नायतनम्' इति श्रुतेर्विवेकः समुच्छलति भव्यजन्तूनां यदि प्रधानमपि कारितं चैत्यं पार्श्वस्थाद्यधिष्ठितं सन्न बहुफलं,
तर्हि न दासामश्चैत्यमध्ये वस्तुं पार्श्वस्थादीनाम् । नहि 'भूताधिष्ठितमद्भुतमपि गृहं न सगुणम्' इति जानानः । कश्चित् आत्महि-
तैषी स्वगृहस्य भूताद्यधिष्ठाननिवारणार्थं लोहादिरक्षां मान्त्रिकैर्न कारयति, अधिष्ठातुं प्रवृत्तानि वा भूतादीनि न निष्कासयति ।
तस्मात् अनिश्राकृतमेव चैत्यं कारयिष्यामः, यस्मिन् कारिते महती पुण्यानुबन्धिपुण्योपार्जना भवतीति, ततो वक्तव्यमेव 'द्रव्य-
लिङ्गिपरिगृहीतं चैत्यमपि अनायतनम्' इति ॥

ननु—"अत्र यदि यच्छब्दस्यार्थे 'आयतनं तर्हि—'जत्थ साहम्मिया बहवे सीलवन्ता बहुस्सुया । चरित्तायारसम्पन्ना आययणं
तं वियाणाहि ॥ १ ॥ इत्यत्रापि यदर्थ आयतनमेव, तुल्ययोगक्षेमत्वात् । ततो 'यत्र आयतने ज्ञानादिरत्नत्रयसम्पन्ना साधवो

यगन्ति' इत्युक्ते अर्थादेव ज्ञायते—'साधवश्चैत्येऽपि वसन्ति' इति, आयतनस्य चैत्यार्थतया भगतैव व्यवस्थापितत्वात् । तथाच सुविहितानामपि चैत्यवासप्रसङ्गः" इति चेत्, न ।

नहि यच्छब्दस्यार्थः सर्वत्राप्येक एव, असर्वनामत्वप्रकृतिप्रसङ्गात् । यदि वा भवतु यच्छब्दार्थोऽत्राप्यायतनं तथापि न चैत्यनामप्रसङ्गः, व्याप्तेरभावात् । नहि यद्यद् आयतनं तत्तद् चैत्यम्, 'भोक्तुर्भोगायतनं शरीरम्' इति सूत्रस्थेन आयतनेन व्यभिचारात् । अत्र आयतनशब्दः स्थानमात्रार्थ एव, न चैत्यार्थः । एवं प्रस्तुतगाथायामप्यवधार्यम् ।

ननु—"यथोऽप्यायतनशब्द 'एकत्र चैत्यार्थः, अपरत्र स्थानमात्रार्थः' इत्येषा कुतः विशेष प्रतीतिः ?" इति चेत्,

उच्यते-प्रकरणवशात् । अनेकार्थेऽपि हि शब्दे प्रयुक्ते प्रकरणवशाद्विशेषप्रतीतिर्भवत्येव । यथा भोजनक्षणे राज्ञा 'सैन्धवमानय' इत्युक्तो लवणमेव विशिष्टमानयति, न तदर्थमपि तुरङ्गमम् ।

ननु—"अत्रापि चैत्यार्थः कस्मान्न भवति ?" ।

उच्यते, असम्भवात् । न हि शीलवत्त्वादिगुणोपेताः साधवश्चैत्ये वसन्ति, 'ते ण ठंति न चेइए' इत्याद्यागमेन निवारितत्वात् । अपवादेऽपि स्त्रीसकुलायामप्युक्तयतनया वसतावेव साधुभिर्वस्तव्यम्' इति । निशीथे नियमितत्वाच्च यदुक्तम्—"चिरोत्सर्गापवादे यदिह शिवपुरीदूतभूते निशीथे । प्रत्युक्ता भूरिभेदा गृहिगृहवसती कारणेऽपोद्य पश्चात् ॥ स्त्रीससक्त्यादियुक्तेऽप्यभिहितयतनाकारिणां संयतानाम् । सिंहत्रागारिधाम्नि न्ययमि ननु मतः क्वापि चैत्ये निवासः" इति ॥

भिन्नवृत्तित्वादिविशेषणयुक्तास्तु लिङ्गतः साधर्मिका भगवदाज्ञातिक्रमकारित्वाच्चैत्येऽपि वसन्तः साक्षादीक्ष्यन्ते इति कथं तुल्ययोगक्षेमत्वम्?

भवतु । 'वा नाणस्स दंसणस्स य चरणस्स य जत्थ होइ वाघाओ' इत्यादि गाथाविवरणस्य आयतनशब्दः स्थानमात्रार्थः । एवमपि असत्साध्यसिद्धेः यत्र स्थाने द्रव्यलिङ्गिनो वसन्ति तत् स्थानं चैत्यमचैत्यं वा सर्वमप्यनायतनमेव । अथ वसत्स्वपि पार्श्वस्थादिषु चैत्यं अर्हन्मूर्तिप्रभावान्न अनायतनम्। एवं तर्हि तत्प्रतिश्रयोऽपि न अनायतनम्, तत्रापि हि पुस्तकपत्रचित्रभित्तिचित्रपटादिस्थार्हन्मूर्तेः सद्भावात् । अथ 'सा भावप्रतिष्ठिता' इति चेत्, तत् किं यत्र प्रतिष्ठिता प्रतिमा भवति तत् अनायतनं न भवति? एवं तर्हि परतीर्थिकपरिगृहीतं चैत्यमपि न अनायतनम्, तत्रापि प्रतिष्ठितप्रतिमायाः सद्भावात् । तस्माद्यथा पार्श्वस्थादिप्रतिश्रयः प्रतिष्ठितायामप्रतिष्ठितायां वा अर्हत्प्रतिमायां सत्यामसत्यां वा द्रव्यलिङ्गिवासोपाधिसद्भावादनायतनम्, एवं चैत्यमपीति ।

ननु—"एवं तर्हि 'यत्र आयतने' इति किं व्याख्यातं वृत्तिकृता? आयतनशब्दस्य अर्थत्वेन समुपयत्वाद्?"

उच्यते । 'आयतनमपि पार्श्वस्थाद्याक्रान्तमनायतनं भवति, किं पुनरन्यत्? इति ज्ञापनार्थम्। किञ्चेयमपि गाथा संज्ञासूत्रम्, अत्र आयतनसंज्ञायाः क्रियमाणत्वात्, सा च असत्येव क्रियते, न सती । नहि यस्य देवदत्त इति नाम प्रागेवास्ति, तस्य पुनरपि देवदत्त इति नाम क्रियते । ततो यदि यदर्थ आयतनमेव स्यात्, तदा संज्ञाकरणमनर्थकम्, आयतनसंज्ञायाः प्रागेव

सत्त्वात् । नच यत्साध्यत्वं, अनवस्थाप्रसङ्गात् । शाकुनिकादिषु तु आयतनत्वमपि प्रसिद्धेऽप्यनायतनसंज्ञा कथनप्रसङ्गात् किन्तु इति युक्त एव, तत्र यदर्थं आयतनम् । अत्र तु न, संज्ञाभूतस्य चैत्यस्यागतत्वात् । अपि चात्र आयतनं लक्षणम् । लक्ष्यं चात्र सिद्धमेव भवति, न प्रसिद्धम् । अन्यथा लक्षणस्य वैफल्यप्रसङ्गः ॥ शीलरत्नादिगुणरत्नस्वामिनिकरामोऽत्राधिकृतो हि कथनम् । तच प्रसिद्धमेव भवति, अप्रसिद्धस्य लक्षणत्वायोग्यत्वात् । लक्षणं हि ज्ञापकम् । ननु चेत् स्वयमज्ञातम्, कथमन्यस्य ज्ञापकम्? नहि अज्ञातस्वरूपो धूमोऽनालोक्यमानवह्नेर्गमको भवति । तस्मादनेनापि लक्षणेन प्रसिद्धेन भाव्यम्, प्रसिद्धं च चैत्यासनिर्लिङ्गमेव, न तु चैत्यम् । चैत्ये हि शीलरत्नादिगुणवन्तः साधवस्तु न वसन्त्येव, 'जे वसंति न चेइए' इत्यागमवचनानिषेधात् । ये च वसन्ति न ते सुविहिताः, भगवदाज्ञाविराधकत्वात् । इति कथं चैत्यं आयतनं स्यात्? यदि पुनः स्यात् तदा अनन्यसदोषदुष्टत्वेन इदं लक्षणमनुपादेयमेव भवेत्, चैत्ये सुविहितानामनागमनाभ्यस्तत्वात् । तथापि श्रीमद्धयाङ्गस्वामिपादानां पूज्यत्वेनाभ्युपगच्छामि तदानीमत्र चैत्यादन्यदेव वसत्यादिकं यदर्थोऽभ्युपगम्यताम्, यथा असम्भवदोषो निवर्तते । अन्यथा सम्प्रदायनानीतसुविहितवासे चैत्ये आयतनसंज्ञा क्रियमाणा, अजाते पुत्रे नामकरणवत् कृतमेवोपहासाय सम्पद्यते । न चैत्यं लोके लोकोत्तरेऽपि आयतनमुच्यते । आयतनस्य च सेवा यतिभिः सदा कार्या । यदुक्तं ओघनिर्युक्तौ—'वजिन्तु अणाययणं आययणं गवेसणं सया कुज्जा' इति । बृहत्कल्पस्यानुक्रमाध्ययनेऽप्युक्तम्—'एयस्स वज्जणेणं आययणनिसेवणं समुद्दिट्ठं' इति । यस्य समुद्रसंवासानन्तरं चैत्यरचनं च कर्तुं शक्यते, नच तदर्थंरिति ।

"कथमनागमिकश्चैत्यवासः? येनायतनसंज्ञा क्रियमाणा प्रणेतुरुपहासाय स्यात्"? इति चेत्,
नैवम्। सेवा हि आराधनमुच्यते। तच्च आराध्यसम्मतस्थितेः प्रतिपालनेनैव भवति, न तु व्यतिक्रमेण। यदुक्तं श्रीजिनव-
ल्लभसूरिभिः श्रुतौ—'तुममऽच्छीहिं न दीससि नाराहिज्जसि पभूयपूयाहिं। किन्तु गुरुभत्तिरागेण वयणपरिपालणेणं च' इति ॥१॥
अत्र त्वाराध्यं चैत्यम्। तस्य च उचिता इयं स्थितिः—यावता कालेन चैत्यवन्दना क्रियते तावन्मात्रमेवोत्सर्गतश्चैत्ये साधुभिः
स्थातव्यम्, न अधिकम्। स्नात्रादिकारणे तु स्नात्रादि यावत्। यदुक्तम्—'तिन्नि वा कड्ढइ जाव थुइओ तिसिलोइया। ताव
तत्थ अणुन्नायं कारणेण परेण वा' इति तस्याश्च व्यतिक्रमणं, भवति चैत्यावासे सति। अतोऽसौ स्थितिभङ्गहेतुत्वान्नायतनस्य
सेवा उच्यते, किन्तु विराधनैव। अत एव सदा शब्दोऽप्यत्र सर्वदिनवाची, न तु अहोरात्रवाची। अन्यथा शयनभोजनबहि-
र्गमनादिशेषक्रियाविलोपप्रसङ्ग इति। किञ्च यदि आगमिकश्चैत्यवासोऽभविष्यत्तदा महानिशीथग्रन्थान्तरस्थं नाभणिष्यत्।—
'कूराभिग्गहियमहामिच्छदिठीहिं पावेहिं। अहमाहमेहिं नामायरिय उवज्झायसाहुलिङ्गीहिं। जिणवरमढआवासो पकप्पिओ
सायसीलेहिं ॥१॥ इति। अथ चोक्तमिदमत्र। तस्मात् ज्ञायते—'कल्पित एवासौ' इति ॥ इह त्वेके स्वपक्षसमर्थनार्थमित्थं
ब्रुवते। यथा नायमागमिकः, किन्तु दुःषमाकालानुभावात् यथोक्तोपाश्रयस्य दुर्लभतामालोक्य प्रवचनविख्यातयुगप्रधानविरुदैः
श्रीआर्यरक्षितमिश्रैः ऐदंयुगीनसाध्वनुग्रहाय एष आचीर्णः। यदुक्तम्—"बलमेहावुद्धीणं हाणिं नाऊण सुविहियजणस्स
चेइयहरपरिभोगो तेण कओ अज्जरक्खीहिं" इति तदत्यन्तमयुक्तम्, तैर्हि प्रभुभिर्यत् आचीर्णं तत् सकलेऽपि प्रवचने तत्कर्तृ-

कतया प्रसिद्धम्। यथा आर्यिकाणां स्वपक्षेऽप्यप्रव्राजनं व्रतानारोपणं प्रायश्चित्तादानं कालग्रहणं च यदुक्तम्—"आरेण अज्जरक्खिय कालाणुन्नाय नत्थि अज्जाणं। पव्वावणवयभारोवणं च पच्छित्तदाणं च" इति ॥ १ ॥ तथा सर्वेष्वपि धर्मगच्छेषु वृद्धपरम्परया समागच्छदवलोक्यते। यथा चतुर्थ्यां पर्युषणा, तेषां किञ्चिन्न्यूनदशपूर्वधरत्वेन सर्वसम्मतत्वाच्च। अयं च न तथा। तत् कथं तैराचीर्ण इत्युच्यते? किञ्च कार्यमालम्ब्यैव लोकदोषं बहुगुणं किञ्चित् कदाचित् चरन्ति गीतार्थाः? यदुक्तम्—"अवलंबिऊण कज्जं जं किंची आयरन्ति गीयत्था थोवावराहबहुगुणं सव्वेसिं तं पमाणन्ति"। तदत्र कार्यं किम्?

ननु "उक्तमेव, यथोक्तोपाश्रयस्य दुर्लभत्वम्" इति चेत्,

अहो प्रत्यक्षविरोधः। अधुनाऽपि हि सुविहिता आगमोक्तविधिना याचमानास्तावदौत्सर्गिकीमापवादिकीं वा वसतिं गृहस्थेभ्यो वस्तुं लभन्ते। किं पुनस्तदानीमिति? न किञ्चिदेतत्। यदि चोपाश्रयस्य दुर्लभत्वं किं साधूनामेव? न साध्वीनाम्? येन एतास्तन्मतेऽपि प्रायः चैत्यान्तर्न वसन्ति। आगमे तु आर्यिकोपाश्रयस्यैव दुर्लभत्वम् उक्तं। यथा—"मंसपेसीसरिस्सीसु वसही रक्खियं तु दुल्लभं। एएण कारणेणं दो दो मासा अवासागुत्ति" ॥ १ ॥

न तु साधूपाश्रयस्यत्यहो आगमिकत्वममीषाम्। तथा यद्यप्यनाधाकर्मिकत्वाच्चैत्ये वसतां साधूनां कश्चिद्गुणो भवति तथाऽप्याशातनादोषो, मिथ्यात्वहेतुत्वाद्दीर्घसंसारकारणत्वाच्च तदपेक्षया महानेव। तथा निरन्तरमाविर्भवदुद्भटशृङ्गाररसतरुणी रूपशब्दोपलम्भनमप्यत्र महामनोविप्लवहेतुरिति। कथमत्र सुविहितानामवस्थानमाचेरुस्ते पूज्याः? अपरे त्वाहुर्न चैत्यवासो मतत्याश्रितः।

किं तर्हि? यथोक्ता वसतिरार्यरक्षितकाले व्यवच्छिन्नेति । यदुक्तम्—'छवाससएहिं नवुत्तरेहिं मुक्खंगए महावीरे वुच्छिन्नं
सुजईणं विपट्ठीवंसाइयं ठाणं इति ॥
इदं चातीव युक्तिविकलम्। व्यवच्छिन्नं हि तदेवोच्यते यत् कथमपि पश्चान्न सम्भवति । यथा—'मणपरमोहिं पुलाए आहार
ग खवग उवसमे कप्पे । संजमतिय केवलि सिज्झणा य जंबुम्मिवुच्छिन्ना' इति ॥ वसतिस्त्वधुनाऽपि सम्भवन्ती दृश्यते,
इति कथं व्यवच्छिन्नेत्युच्यते? अथवोच्यताम् । यदि साधुवत् साध्व्योऽपि सर्वथा चैत्ये एव वसेयुः । यदि वा चैत्यरहिते
ग्रामे नगरे वा साधवोऽपि नावतिष्ठेयुः, यदि वैकचैत्यग्रामे नगरे वा स्थिताः साधवः साध्व्यश्च सर्वेऽप्येकस्मिन्नेव तस्मिंश्चैत्ये
रात्रावपि वसेयुः । न चैवं लोकप्रवादाद्यनेकानर्थभयात् । तस्मान्न व्यवच्छिन्नेति । केवलं भवाभिनंदित्वाद्द्रव्यलिङ्गि-
भिरेवायमादृतः । अथ ते चैत्ये न वसन्त्येव इति चेत्, कथं तर्हि 'चैत्यवासिन' इति व्यपदिश्यन्ते । अथ परः—'तत्
किं चैत्यवासिव्यपदेशस्य वसनमेव निमित्तम्" एवं च यदा ते क्वापि ग्रामान्तरे गच्छन्ति तदा अचैत्यवासिनः स्युः,
तत्र चैत्याभावेन तदन्तर्वासस्याप्यभावात् । ततो 'निमित्ताभावे नैमित्तिकस्याप्यभावात्' इति चेत्, आचार्यः कः किमाह?
किं वयं चैत्यवासिव्यपदेशस्य चैत्यवसनमेव केवलं निमित्तं ब्रुवन्तः सः, येनायं प्रसङ्गः सरङ्गः स्यात् । किन्तु ज्ञानशक्ती अपि?
यो हि चैत्ये वस्तुं जानाति शक्नोति वसति च स चैत्यवासी भण्यते। ततस्ते चैत्ये वसन्तु । ग्रामान्तरगता मा वात्सुस्तथापि चैत्यवा-
सिन एव ज्ञानशक्त्योर्निमित्तयोस्तत्रापि भावात् । किं अपचन्नपि ज्ञानशक्तिसद्भावात् पाचको न भण्यते । यदुक्तम्—निच्च-

त्पाकादौ पाचकादौ ज्ञानशक्त्यपेक्षा बुद्धिशब्दाविति । किंवा क्रीडन्तोऽपि तदध्यवसायानिवृत्तेर्यथेह कुमाराः क्रीडन्ति' इत्युच्यते, एवमवसन्तोऽपि वसनाध्यवसायानिवृत्तेस्ते चैत्यवासिन इति व्यपदिश्यन्त एव । इत्यलमप्रस्तुतेन । प्रारब्धमेव प्रमेयं निर्वाह्यतां यदि काचिच्छक्तिरस्ति ।

ननु विवक्षितोपाधिमत् चैत्यं द्रव्यतोऽनायतनं भावतो वा ? ।

उच्यते । द्रव्यतः, ननु भावतः । किमिति न भवति ? ।

कथ्यते । भावतोऽनायतनस्य लौकिकस्य पण्याङ्गनादेरिव लोकोत्तरस्य पार्श्वस्थादेरेवोक्तत्वात् । तथाहि ओघनिर्युक्तौ—
"सावज्जमणाययणं असोहिठाणं कुसीलसंसग्गी, एगट्ठा हुंति पया एए विवरीयआययणे ॥ वज्जेतु अणाययणं आययणगवेसणं सया कुज्जा । तं तु पुण अणाययणं नायव्वं दव्वभावे य ॥ दव्वे रुद्दाइघरं अणाययणं भावओ दुविहमेव । लोइय लोउत्तरियं तहियं पुण लोइयं भणिमो ॥ खरियातिरिक्खजोणी तालायरसमण माहण सुसाणो वागुरियवाह गुम्मियहरिएसपुलिन्द मच्छंधा, खणमवि न खमं काउं अणाययणं सेवणं, सुविहियाणं, जं गन्धं होइ वणं तं गन्धो मारुओ वाइ जे अन्ने एवमाई लोगंमि दुगुंछिया गरहिया य समणाण व समणीण य न कप्पए तारिसे वासो ॥ अह लोउत्तरियं पुण अणाययणं भावओ मुणेयव्वं जे संजमजोगाणं करिंति हाणि समत्थावि" ॥ 'अम्बस्स य निम्बस्स य' इत्यादि ॥

आययणं पि य दुविहं दव्वे भावे य होइ नायव्वं । दव्वम्मि जिणहराई भावम्मि य होइ तिविहं तु ॥

त्रिविधं ज्ञानदर्शनचारित्ररूपमायतनमित्यर्थः । “जत्थ साहम्मिया बहवे सीलवन्ता बहुस्सुया, चरित्तायारसम्पन्ना आययणं
तं वियाणाहि ॥ सुन्दरजणसंसग्गी सीलदरिद्दं पि कुणइ सीलड्ढं । जह मेरुगिरीलग्गं तणं पि तं कंचणं होइ त्ति” ।
ननु—“अत्र चैत्यं द्रव्यतया आयतनमेवोक्तम् । यथा—दव्वंमि जिणहराई” इति चेत्,
सत्यम् । किन्तु निरुपाधीदम्, मिथ्यादृष्टिपरिगृहीतत्वोपाधिसहितं त्वनायतनमेव । अन्यथा दिगंबरादिपरिगृहीतचैत्यस्या-
प्यायतनत्वं स्यात् । तथा च ‘अन्नतित्थियपरिग्गहियाणि अरहंतचेइयाणि च’ इति वचनस्य नैरर्थक्यम्, व्यवच्छेद्याभावात् ।
तस्माल्लिङ्ग्यधिष्ठितं चैत्यं द्रव्यतोऽनायतनमेव । ननु भावतोऽनायतनम् । किमिति नोक्तम् ?
उच्यते । अचेतनत्वेन तथाविधभावशून्यत्वात् । यदि वा भावतोऽप्यनायतनम्, आधाराधेययोरभेदोपचारात् । मञ्चाः
क्रोशन्तीतिवत् ॥ यतो व्याख्यातं लौकिकभावानायतनप्रतिपादक ‘खरियातिरिखजोणि’ इत्यादिगाथायां श्रीहरिभद्रसूरि-
भिः । यथा—“खरियत्ति” द्व्यक्षरिका, यत्रास्ते तत् अनायतनम् तथा तिर्यग्योनयो यत्र तत् अनायतनम् तालाचराश्चारणाः, ते
यत्र तत् अनायतनम् । श्रमणाः शाक्यादयः, ते यत्र, तथा ब्राह्मणा यत्र श्मशानं च तद् अनायतनम् । तथा व्यागुरिका व्याधा
गुल्मिका ‘गोत्तिपाला,’ हरिएषाः पुलिन्दमत्स्यबन्धाश्च यत्र तत् अनायतनम्” इति । ततो यथा वेश्यादिभिरधिष्ठितं स्थानं भाव-
तोऽनायतनं लौकिकम्, एवं पार्श्वस्थादिभिरधिष्ठितं चैत्यमपि लोकोत्तरिकं भावतोऽनायतनमिति ।

ननु "चैत्यं कथमपि अनायतनं न भवति, विनष्टिलोपाधेर्मठादिमात्र एव विश्रान्तत्वात्। अत एव ते मठपतयो भण्यन्ते" इति चेत्,

नैवम्। मठादेरपि चैत्यान्तर्गतत्वात्॥

ननु "यदि चैत्यान्तर्गतमठादौ वसत्सु सत्सु पार्श्वस्थादिषु चैत्यमनायतनं तर्हि देशान्तर्गतग्रामनगरादिस्थानस्थितेषु तेषु देशोऽप्यनायतनं स्यात्, न्यायस्य समानत्वात्" इति चेत्,

अथ आचार्यः—अहो तार्किकत्वं अहो सैद्धान्तिकत्वं यत्प्रसङ्गं ददता न तर्कलक्षणं नापि सिद्धान्तोक्तमपेक्ष्यते। तथाहि—'प्रमाणसिद्धे व्याप्यव्यापकभावे व्याप्याङ्गीकारे अनिष्टव्यापकप्रसञ्जनं तर्कः' इति तर्कलक्षणम्। अत्र तु अन्तर्गतस्थानवासिपार्श्वस्थादिकं व्याप्यम्, अनायतनं व्यापकम्, अनयोश्च व्याप्यव्यापकभाव ऊहाख्येन प्रमाणेन सिद्ध एव, केवलं यत् देशस्य अनायतनत्वं प्रसञ्जितं तत् न अस्माकमनिष्टम्। अभ्युपगमात्॥ नापि सिद्धान्तसिन्धौ न भणितम्, दृश्यमानत्वात्। तथाहि पञ्चकल्पभाष्ये—नाणस्स दंसणस्स य चरणस्स य जत्थ नत्थि वाघाओ। एसो उक्किट्ठकप्पो जहियं च अणाययणा न हुंति॥ के पुण अणाययणा भणिया, साहम्मिभिन्नचित्ता मूलुत्तरदोसपडिसेवी॥ एएहिं जो देसो आइन्नो तह य अन्नतित्थीहिं। मच्छंधवाहगामा पुलिन्ददेसा अणाययणा" इति। तस्मादिष्टप्रसञ्जनाख्यतर्कदोषदुष्टोऽयं प्रसङ्ग इति न काञ्चिदस्माकं क्षतिमावहति॥ ननु साधर्मिकचैत्यादिचतुर्विधचैत्यमध्ये कतमस्य भेदोऽनायतनम्?।

उच्यते । यस्य सत्कस्ते रोचते तस्यापि । "तत् किं भक्तिचैत्यस्यापि ?" इति चेत्, एवं? न तस्य हि निश्राकृतानिश्रा-
कृतरूपभेदद्वयमेव श्रूयते ॥ तथाहि कल्पभाष्ये–"निययाइं सुरलोए भत्तिकयाइं च भरहमाईहिं । निस्सानिस्सकयाइं तत्था
एसो चयसुनिस्सं" इति ॥

अथ आचार्यः—तत् किं योऽत्र भेदो नोक्तः स न सम्भवत्येव ? । एवं सति अन्यतीर्थिकपरिगृहीतार्हच्चैत्यमपि न सम्भ-
वति, अस्यापि भक्तिचैत्यभेदस्य कल्प–भाष्ये अनुक्तत्वात् । तथाच सम्यक्त्व–दण्डके—परतीर्थिकपरिगृहीतचैत्या वन्द-
नाद्यभिग्रहालोपकोपेक्षणीयाः, निरभिधेयत्वात् । काकदन्तपरीक्षाग्रन्थवत् ॥

ननु तदोपेक्षेत । यदि दिगम्बरादिपरतीर्थिकाः सर्वथाऽपि न भवेयुर्यदि वा तत्परिग्रहेऽर्हच्चैत्यानि सर्वथा न स्युः ।
न चैवम्, कालमाहात्म्यात्तद्द्वयस्याप्युदयवत्त्वात् । अत एव पूज्यपादैः श्रीभद्रबाहुस्वामिभिरुक्तोऽयम् ? इति चेत्, तत् किं
भक्तिचैत्यस्य निश्राकृतानिश्राकृताभ्यां भिन्नस्तृतीयोऽप्यन्यतीर्थिकपरिगृहीतार्हच्चैत्यरूपो भेदोऽस्ति ? । 'एवम्' इति चेत्,
तद्यदि चतुर्थोऽप्यनायतनलक्षणो भवेत्तदा को दोषः? 'अनवस्था' इति चेत्, आह—कल्पानुक्ततृतीयभेदसत्ताऽभ्युपगमे सा कथं
न स्यात् ? । ननु 'एतत्साधकं प्रमाणमस्ति, यस्य हि साधकं प्रमाणं भवति, तदेव भवति । न शेषमिति । कथमनवस्था ? इति
चेत्, किं नामास्य साधकं प्रमाणम् ? । ननु 'आगमः' । स कः ? 'आवश्यकनिर्युक्तिरेव' इति चेत्,

आचार्य आह—तत् किं यस्य साधिका असौ भवति, तस्मिन् अभ्युपगम्यमाने न अनवस्था ? एवं तर्हि अनायतनलक्षण-
चतुर्थभेदेऽपि अभ्युपगम्यमाने न अनवस्था, तस्यापि साधिका आवश्यकनिर्युक्तिरस्त्येव । तथाहि—

"खणमवि न खमं काउं अणाययणसेवणं सुविहियाणं । जं गंधं होइ वणं तं गंधो मारुओ वाइ"

इत्यत्र 'अनायतनं पार्श्वस्थाद्यायतनम्' इति वृत्तिकृता व्याख्यातम् । ततः पार्श्वस्थादिसम्बन्धि आयतनम् अनायतनत्वात्
क्षणमपि सेवितुं सुविहिताना न क्षममित्यर्थः । एवं च अनायतनमावश्यकनिर्युक्त्याऽपि साधितमेवेति, न युज्यते । समानप्रमा-
णकयोरनयोर्मध्ये एकं मन्तुमेकं चावमन्तुम् आगमिकमन्यानाम्' अनागमित्वप्रसङ्गात् ।

ननु—"अत्र आयतनशब्दः सन्दिग्धतया न निश्चायक इति । तत् स्पष्टाक्षरं किमप्यागमोक्तं दर्शय, येन निशङ्कितचैत्यमपि
अनायतनतया अभ्युपगच्छामः । किं युक्तिशतैर्दर्शितैरपि ?" इति चेत्,

तर्हि श्रूयताम् । "वुड्ढा वासो रई धम्मे अणाययणं वज्जणे । निग्गहो य कसायाणं एयं वीरस्स सासणं" इति निशीथभा-
ष्यचूर्णौ व्याख्यातम्–'अनायतनं स्थली, सा चार्हत्पार्श्वस्थादिपरिगृहीता देवद्रोणी' । तथाहि निशीथपीठिकायामपि 'साह-
म्मियत्थलीसु जायअदिते भणावणगिहीणं' इत्यादि गाथाचूर्णिः—'समाणधम्मा साहम्मिया थली देवद्रोणी जायन्ति याज-
यन्ति अरहन्ति य पासत्थियपरिग्गहियदेवद्दोणीसु पुव्वं जा जयन्तीत्यर्थः । देवद्रोणी च देवगृहमेव । इति आगमसिद्धमनायतनत्वं
चैत्यस्य ।

पुनरप्यनुमानेन साध्यते। तथाच प्रयोगः—"विवादाध्यासितं चैत्यम्, अनायतनम्, अन्तर्वसद्द्रव्यलिङ्गित्वात्। प्रतिश्रयवत्"॥ यदि वा "चैत्यमप्यनायतनम्, अनधिकारिपरिगृहीतत्वात्। मातङ्गपरिगृहीतचैत्यवत्" इति॥

ननु—एवं प्रमाणिकमपि अनायतनं कल्पभाष्ये किमिति नोक्तम्?"

उच्यते। सूत्रस्थितेर्वैचित्र्यदर्शनार्थम्। यदुक्तम्—

'कत्थइ देसग्गहणं, कत्थइ घिप्पंति निरवसेसाइं। उक्कमकमजुत्ताइं कारणवसओ निरुत्ताइं।

इति अनायतनचैत्यसिद्धिः।

ननु—'निश्राकृताऽनायतनयोः कियान् भेदः?' उच्यते। महान्। 'कथम्?, इति चेत्,

श्रूयताम्। निश्राकृतं हि तत् चैत्यम्, यत् द्रव्यलिङ्गिनां निश्रया निष्पन्नम्। यदुक्तं "निस्सानिस्सकयाइं तत्थाएसो चयसु निस्सं" इति कल्पभाष्यगाथार्धचूर्णौ—'निस्साए कयं जं तं न कप्पइ। जत्थ साहुनिस्सा नत्थि तं कप्पइ त्ति' यत्र तु चैत्ये ते वसन्ति तदनायतनम्। यदुक्तम्—'जत्थ साहम्मिया वहवे' इत्यादि। इति प्रकट एव भेदोऽनयोः।

'तत् किं यत्र द्रव्यलिङ्गिनो वसन्ति तत् तेषां निश्रया न निष्पन्नम्?' इति चेत्,

कः किमाह? नहि वयमिदमाचक्ष्महे, यत् 'अनायतनमनिश्राकृतमेव'। किन्तु यथा भक्तिकृतचैत्यस्य निश्रालक्षणोपाधिस-

ऽवासद्भावाभ्याम् एकं निश्राकृतम्, अपरं अनिश्राकृतम्, इति भेदद्वयम्, एवं निश्राकृतस्यापि द्रव्यलिङ्गिनिवासोपाधिसद्भावासद्भावाभ्यामेकमनायतनम्, द्वितीयं न अनायतनम्। किं तर्हि? निश्राकृतमेवेति भेदद्वयम्। इति।

एतमेवार्थं समर्थयितुं प्रमाणान्तरमनुमानमुच्यते—"पार्श्वस्थाद्यासविशिष्टं चैत्यं, निश्राकृताभिमम्, अनायतनत्वात्। यद्यदनायतनं, तत्तत् निश्राकृताभिमम्, यथा उभयसम्मतं परतीर्थिकपरिगृहीतार्हच्चैत्यम्। तथा चेदम्। तस्मात्तथा" इति। नच 'अनायतनत्वात्' इति हेतुः 'असिद्ध' इति वाच्यम्, अस्य प्रागेव सप्रपञ्चं साधितत्वात्। अनेन च अनुमानेन उपष्टम्भित आगमः प्रस्खरितसिंह इव अस्खलितप्रसरत्वात् स्वसाध्यं साधयत्येवेति। तस्माद्द्रव्यायतनभावायतनविचारे प्रारब्धे श्रीभद्रबाहुस्वामिपादैः 'दव्वम्मि जिणहराई' इत्यनेन गाथान्येन स्वमतः परतीर्थिकपरिगृहीतत्वाद्युपाधिरहितस्य जिनगृहादेर्द्रव्यायतनत्वमुक्तम्। पार्श्वस्थाद्युपाधिसान्निध्यात्तस्यैव 'नाणस्स दंसणस्स य' इत्यादिगाथाचतुष्केण अनायतनत्वं, भवति ह्युपाधिसन्निधानादुपाधिमतोऽपि तद्रूपता, तन्निवृत्तौ च तन्निवृत्तिः। यथा जपाकुसुमसन्निधानात् स्फटिके रक्तरूपता, तदपगमाच्च तदभावः, एवमिहापि पार्श्वस्थाद्यनायतनोपाधिव्यावृत्त्या जिनगृहादीनामप्यनायतनत्वनिवृत्तिः।

ननु "यदि तृतीयमपि चैत्यं अनायतनगंधमभविष्यत्तदा 'निस्सकडमनिस्सकडे वा वि चेइए सव्वहिं थुई तिन्नि वेलं व चेइयाणि च नाउं इक्किक्का यावि' इत्यादिना द्वयोरिव तृतीयस्यापि चैत्यवन्दनविधिमभणिष्यत्। नहि परिपाट्या चैत्यानि वन्यमानानां क्रमागतं चैत्यमुल्लङ्घयितुं युज्यते, तीर्थकरहीलनाया दुरन्तसंसारकारणत्वात्। यदुक्तम्—'तित्थयरपवयणसुए आयरियं-

गणहरं महिड्ढीयं । आसायन्तो बहुसो अणन्तसंसारिओ होइ । इति नच भणितवान् सत्यपि प्रस्तावे कल्पभाष्यकारः । ततो ज्ञायते नास्त्येव"? इति चेत्,

अथ आचार्यः—तत् किं यस्य चैत्यवन्दनविधिरत्र नोक्तस्तन्नास्त्येव ? एवं तर्हि परतीर्थिकपरिगृहीतार्हच्चैत्यमपि मा भूत्, तदीयस्यापि चैत्यवन्दनविधेरत्रानुक्तत्वात् ।

आह । परतीर्थिकपरिगृहीतार्हच्चैत्यमवन्द्यम्, सम्यक्त्वहानिहेतुत्वात् । इत्यस्य वन्दनविधिरत्र नोक्तः, अत एव च चैत्यपरिपाटिप्रस्तावे क्रमागतमप्येतत् परित्यजतां न कश्चिद्दोषः ?" इति चेत्,

एवं तर्हि पार्श्वस्थादिपरिगृहीतार्हच्चैत्यमपि सम्यक्त्वादिहानिहेतुत्वादवन्द्यमेवेति, क्रमागतमप्येतत् परिहरताम् अदोष एव । किञ्च चैत्यपरिपाटिप्रस्तावे अनायतनचैत्यवन्दनविध्यभणनमनायतनचैत्यस्य अवन्द्यत्वमेव प्रतिपादयति, न पुनरभावम् । तत्सद्भावस्य स्थानान्तरे सिद्धत्वात् ॥ प्रयोगश्चात्र "पार्श्वस्थादिपरिगृहीतार्हच्चैत्यं, अवन्द्यम्, ज्ञानादिव्याघातहेतुत्वात् ॥ अनुक्तवन्दनविधित्वाद्वा ॥ परतीर्थिक–परिगृहीतार्हच्चैत्यवत् ॥

ननु "अनायतनं निश्राकृतं वा स्यात्, अनिश्राकृतं वा ननु प्रकारान्तरम् । निश्रानिश्रयोर्हि सर्वचैत्यव्यापकत्वात् तयोश्च 'निस्सकडमनिस्सकडे वा वि' इत्यादिना वन्दनविधिरुक्त एवेति कथमवन्द्यता ?" इति चेत् ।

न । एवं हि परतीर्थिकपरिगृहीतार्हच्चैत्यस्यापि वन्द्यत्वप्रसङ्गः, तस्यापि निश्रानिश्रैकतरपूर्वकत्वात् ।

ननु "परतीर्थिका मिथ्यादृष्टयः, इति तद्भावितमर्हच्चैत्यमपि मिथ्यात्वमेव, यतो मिथ्यादृष्टिपरिगृहीतं द्वादशाङ्गमपि मिथ्यात्वं भवति। किं पुनरन्यत्?, यदुक्तम्—'मिच्छद्दिट्ठिपरिग्गहिअं दुवालसङ्गं पि मिच्छत्तं' इति। तथाच तस्य निश्रानिश्रैकतरपूर्वकत्वेऽपि न वन्द्यता' इति चेत्।

एवं तर्हि पार्श्वस्थादिभिरपि परिगृहीतस्य चैत्यस्य अवन्द्यता न दुर्घटा, तेषामपि मिथ्यादृष्टित्वात्। तथाहि—"तत्साधनं—विवादाध्यासिताः पार्श्वस्थादयो, मिथ्यादृष्टयः, उत्सूत्रभाषित्वात्। जमालिवत्" इति॥ उत्सूत्रभाषित्वं चामीषां प्रत्यक्षेण सिद्धम्। तथाहि—एते यतीनां चैत्यवासं औद्देशिकभोजनं च, देवार्थस्थावरप्रायोग्यरूपवाटिकादिकारापणादिकमनेकविधमुत्सूत्रं, सभासमक्षमुपदिशन्तः, एतत्समर्थनार्थं च सुविहितैः सह प्रत्यहं कलहायमानाः साक्षादीक्ष्यन्ते इति। उत्सूत्रभाषिणां च मिथ्यात्वमागमतोऽग्रे साधयिष्यति। तथाच 'मिथ्यादृष्टिपरिगृहीतत्वात्' इति हेतुरन्यतीर्थिकपरिगृहीतचैत्यस्येव द्रव्यलिङ्गिपरिगृहीतचैत्यस्य अवन्द्यत्वं साधयत्येव। ततश्च पार्श्वस्थादयश्चैत्ये वसन्तु मा वा वसन्तु, चैत्यैः परिगृहीतं सदा वर्जनीयमेव। अपि च यमद्रव्यलिङ्गिकं चैत्यं सुविहितां दूरतो वर्जनीयम्, व्रतलोपहेतुत्वात्। वेश्यासामन्तवत्॥ न चायमसिद्धो हेतुः, तत्साधकस्य "पासत्थसंगमोवि य वयलोवो तो वरमसङ्गो' इति वचनस्य उभाभ्यामभ्युपगम्यमानत्वात्। नापि विरुद्धः, साध्यविपर्ययेण सेव्यत्वेन अव्याप्तत्वात्। नापि अनैकान्तिकः, 'आययणनिसेवणं सया कुज्जा' इत्यादि वचनासेव्यतया विपक्षे आयतने आगतत्वात्।

वेश्यासामन्तस्य व्रतलोपहेतुत्वमनायतनत्वात् सिद्धम् । यदुक्तं
नच साधनविकलो दृष्टान्तः गणिकागृहसमीपत्वलक्षणस्य
दशवैकालिके—'अणायणे चरन्तस्स संसग्गीए अभिक्खणं । हुज्ज वयाणं पीडा सामन्नंमि य संसओत्ति' ।
नापि साध्यविकलः, अपध्यानादिदोषहेतुत्वेन तत्र दूरतो वर्जनीयत्वस्य सर्वसिद्धत्वात् । उक्तं च—'तम्हा एयं वियाणित्ता
दोसं दुग्गइवड्ढणं । वज्जए वेससामंतं मुणी एगंतमस्सिएत्ति' । अन्यच्च, यद्यनायतने गम्यते तदा तद्वास्तव्यपार्श्वस्थादिविसं-
स्थूलप्रवृत्तयोऽवलोक्यन्ते, तदवलोकनाच्च झटित्येव विपरिणामो भवति, । व्यासव्याख्यातवृन्ताकदोष इव भगवदर्हद्वचने चा-
प्रत्ययोऽपि । ततश्च "विवादापन्नमनायतनं न गमनयोग्यम्, भावभङ्गहेतुत्वात् । अनास्थाजनकत्वात् च । पार्श्वस्थादिप्रति-
श्रयवत्" इति ॥
ननु "यूकाशङ्कया परिधानस्य अपरिधानं न युक्तम् । यदि भावपातहेतोरनास्थाजनकस्य चान्तर्वासियत्याभासानाचारदर्श-
नभयेन चैत्यं परिहियते, तर्हि चैत्याद्बहिरपि परिहियताम् । तत्र सुतरां तदनाचारदर्शनस्य सम्भवात् ॥ नहि ते यावतोऽना-
चारान् बहिः कुर्वन्ति तावतां शतांशमपि चैत्यान्तः कुर्वन्ति ?" इति चेत्,
सत्यम् । अत एव पार्श्वस्थादिन्यासो देशोऽपि सुविहितानामुत्सर्गेण परिहार्यतयोपदिष्टः पूर्वधरैः । तथाहि—पञ्चकल्पभाष्ये—
"नाणस्स दंसणस्स य चरणस्स य जत्थ नत्थि वाघाओ । एसो उक्खित्तकप्पो जहियं च अणाययणा नत्थि ॥
जहियं च अणाययणा न हुंति के पुण अणाययणा भणिया, । साहम्मिभिन्नवित्ता मूलुत्तरदोसपडिसेवी ॥

णगरहिं जो देसो आइओ तह य अन्नतित्थीहिं । मच्छंधवाहगामा पुलिन्ददेसा अणायपणा" ॥

एवं च यदा क्षेत्रकल्पमधिकृत्य पार्श्वस्थाद्याकीर्णदेशेऽपि यतीनां गमनं निषिद्धम्, तत्र कैव कथा तत्परिगृहीतचैत्येषु ॥

ननु "एवं समानधर्मत्वे सति चैत्यमेव परिहियते, न देशः" इत्यत्र मात्सर्यं मुक्त्वा नान्यन्निमित्तमुपलभामहे

मैवम् । चैत्यं प्रति ह्यन्येषामपि श्रेयोऽर्थिनां न मत्सरः, किं पुनरागमबहुमानिनाम् ?

यद्येव तर्हि देशोऽपि परिहर्तुमुचितः ।

सत्यम् । परिहराम एव, यदि संयमनिर्वाहानुगुणमन्यं तं लभामहे ।

अथ परः । तत् किं देशान्तराणि काकैर्भक्षितानि यद् यूयमत्यादरेण गवेषयन्तोऽपि न लभध्वे ? श्रीभद्रबाहुस्वामिना तु विहारयोग्याया भूमेस्तावत् सर्वासु दिक्षु प्रभूततरोऽप्यनुज्ञावत्त्वात् । तथाहि कल्पसूत्रे—"पुरत्थिमेणं कप्पइ निग्गंथाणं वा निग्गंथीणं वा जाव मगहाउ इत्तए, दक्खिणेणं कप्पइ निग्गंथाणं वा निग्गंथीणं वा जाव कोसंबीउ इत्तए । पच्छिमेणं जाव थूणाविसओ उत्तरेणं जाव कुणालाविसओ ताव आयरियखित्तो नो कप्पइ इत्तो बाहिंति" । अस्यामार्यभूमिकायां सार्धपञ्चविंशतिर्जनपदा धर्मक्षेत्रतया भगवदर्हद्भिरुक्ताः । इत्यत्र संयमानुगुणदेशदुर्लभतां कथ्यमानां को नाम सहृदयः शृणोति ? यद्वा स शृणोति, यः शीतलविहारी स्यात् । तस्य पार्श्वस्थाद्यन्यतरत्वेन स्वपक्षपोषकत्वबहुमानित्वात् ॥ न पुनरुद्यतविहारी, तस्य सुविहितत्वेन सिद्धान्तविरुद्धवचनावहेलनपरत्वात् ।

आचार्य आह—सत्यमेतत् । किन्तु यद्यप्यनेके देशाः सुविहितविहारयोग्या उपदिष्टाः सन्ति, तथापि कालदोषवशात् संप्रति महाप्रबलम्लेच्छादिधर्मप्रत्यनीकलोकैराक्रान्ता बहुशस्ते इति तत्र प्रगन्तुमपि न शक्यते दूरे स्थातुम्, यदि वा शक्यतां कथमपि केषुचित्, तथापि दशमाश्चर्यमहिम्ना दुःषमाकालानुभावेन भस्मकग्रहमाहात्म्याद्वा तत्राप्यवश्यं भवन्त्येव पार्श्वस्थादयोऽपि इत्यसौ न शक्यते सम्प्रति परिहर्तुम् । अशक्यवस्तुविषये पुरुषो नापराध्यति । एवंविधे वापवादे पार्श्वस्थादिव्याप्तेऽपि देशे यतीनामव-स्थानमनुज्ञातमस्ति । अत एव चात्र वसद्भिस्तैः स्वार्थभ्रंसादिदोषसम्भावनया पार्श्वस्थानामपि द्रव्यतोऽनुवर्तनामात्रं विधेयमित्यु-क्तम् सिद्धान्ते तथाहि—"अगीयादाइन्ने खेत्ते अन्नत्थ ठिइ अभावम्मि । भावाणुव घायणुवत्ताणाहिं तेसिं तु वसियव्वं ॥ इहरा सपरुवघाओ उच्छोभाईहिं अत्तणो लहुया तेसिं च कम्मबन्धो दुगंपि एयं अणिट्ठफलं । तो दव्वओ वि तेसिं अरत्तदुट्ठेण कज्जमासज्ज अणुवत्तणच्छमासिं कायव्वं ॥ किंपि न उ भावा" इति ॥ अगीयादाइन्नेति । अगीतार्थाद्याकीर्णे पार्श्वस्थादिसङ्कुले । तेसिं तेषां पार्श्वस्थादीनामित्यर्थः । अविधिचैत्ये तु पार्श्वस्थादिप्रतिश्रय इव एवंरूपो अपवादो नास्ति, इत्यस्मिन्नन्यतीर्थिकपरि-गृहीतचैत्य इव परिह्रियमाणे न काचित् क्षतिः, दर्शनशुद्धिहेतोश्चैत्यवन्दनाया अनिश्राचैत्येषु निश्राचैत्येषु वा निर्वाहयितुं शक्यत्वात् ।

ननु—यत्रैते उभे अपि न स्तः, केवलमविधि चैत्यम् एव भवति, तत्र का वार्त्ता ? उच्यते महात्मन् यत्र अविधिचैत्यमपि न भवति तत्र का वार्त्ता ॥ ननु तत्र गृहे प्रतिमाग्रे स्थापनाचार्यस्याग्रे वा चैत्यवन्दना क्रियते" इति चेत्, "एवं तर्हि केवलाविधि-

चैत्यरति अपि इदमेव उत्तरं दीयमानं केन वार्यम् ॥ तथापि तत् परिहर्तुं न युज्यते, तत्परिहारोत्थितस्य अवर्णवादस्य अन्येषां कर्मबन्धनिबन्धनत्वात् स्वस्य लाघवजनकत्वाच्च" इति चेत्,

मैवम् । नहि तच्चैत्यमिति परिह्रियते, येन अवर्णवादः स्यात् । किन्तु हीनाचारस्थानमिति । हीनाचारस्थानपरिहारोत्थितस्य अवर्णवादस्य असाधुवादस्य प्रवचनगुणोद्दीपकत्वेन अन्येषां बोधिबीजलाभहेतुत्वात् स्वस्य प्रतिषिद्धगन्धमात्रासहिष्णुत्वेन गौरवकारणत्वात् । यदि पुनर्न परिह्रियते तदा आज्ञाभङ्गादयो दोषाः । हीनाचाराणां च तत्तदनर्थप्रवृत्तौ स्थैर्यमासञ्जितं स्यात्, किञ्च अनायतने गत्वा यदि पार्श्वस्थादयो न वन्द्यन्ते तदा मत्सरो वर्धितः स्यात् । अथ वन्द्यन्ते तदा 'उसन्नो पासत्थो होइ कुसीलो तहेव संसत्तो । अहछन्दो वि य एए अवन्दणिज्जा जिणमयम्मि' इत्याद्यागमविराधना । अपि च गम्येतापि यदि, तत्र गतानां कश्चिद् लाभः स्यात्? केवलं चैत्यवन्दनादिनिमित्तकदर्शनशुद्धिलाभोत्कण्ठया तत्र गतास्तदन्वर्गवद्द्रव्यलिङ्गिविसंस्थूलप्रवृत्तिदर्शनोद्भूतज्ञानदर्शनचारित्रव्याघातलक्षणे छेदे जाते सति प्रकामं ताम्यन्ति । यथाह—'चूणनार्थं गताश्चूण्टिता आयाता' इति । अन्यथा पूर्वाचार्यकृतमनायतनसंज्ञाया व्याख्यानं याद्दच्छिकं स्यात् ॥ अतः कथं तत्र गम्यते? तस्मादायव्ययचिन्तायामुत्सर्गतो गमनादगमनमेव श्रेय इति । कदाचित् पुनर्गुणविशेषलाभसम्भावनया पार्श्वस्थादिप्रतिश्रय इव तत्रापि गम्यत एवेति । इदमत्र रहस्यम्—उत्सर्गतो विधिचैत्ये एव प्रतिदिनं चैत्यवन्दना विधेया, यदि पुनर्निश्राकृतानि अपि तत्र स्युस्तदा कदाचिदपवादतस्तेष्वपि विधीयते । विधिचैत्याभावे तु प्रतिदिनमपि तदधिकारिभिः पार्श्वस्थादिभिश्चैत्यादद्दिरेव पभस्यादौ,

स्ववासस्याभ्युपगतत्वात् पार्श्वस्थादिवासवासितचैत्येषु पुनर्गमनं निषिद्धमेव, अत्यन्तापवादं मुक्त्वा तत्सम्भवे तु आयव्यय-
तुलनया गन्तव्यम् यदुक्तम्—'तम्हा सव्वाणुन्ना सव्वनिसेहो य पवयणे नत्थि । आयं वयं तुलिज्जा लाहाकंखिव्व वाणियओ
त्ति' इत्यनायतनवर्जनस्थापना ॥

ननु उक्तनीत्या भवत्वनायतनं वर्ज्यम्, किन्तु 'निश्राचैत्येष्वपवादपदे एव गन्तव्यम्' इति यत् भणितं तत् न वयं श्रद्दध्महे । स
कल्पे हि 'निस्सकडमनिस्सकडे वा वि चेइए सव्वहिं थुई तिन्नि' इत्यादिगाथया द्वयोरपि चैत्ययोरविशेषेण वन्दनविधिरुक्तः। स
च अविशेषेण गमनमन्तरेण दुर्घट एव " इति चेत्,

सत्यम् किन्तु यत्र प्रस्तावे सामान्येन चैत्यवन्दनविधिरुक्तस्तत्र सामान्येनैव द्वयोरपि चैत्ययोर्गम्यते केवलं स प्रस्ताव एव दुर्लक्षः,

ननु 'कः प्रस्तावः ?' इति चेत्, भण्यते निश्राकृतानुयानोत्सव एव, तत्र हि चैत्यपूजादिद्वादशकारणान्यतरकारणवशात्
सुविहितैर्गम्यते । गतैश्च तत्रानिश्राकृतचैत्याविशेषेणैव निश्राचैत्येऽपि चैत्यवन्दना क्रियते । यदुद्दिश्य हि यत्र गम्यते तत् तत्र
बहु मन्तव्यम्, अन्यथा लोकापवादः । समत्सरव्यवहारदर्शनाच्छ्रद्धाभङ्गश्च तत्संज्ञिनाम् ॥

ननु "निश्राकृतचैत्यसम्बन्धिनि स्नानानुयानाद्युत्सवेऽपि किमपवादत एव गम्यते ? ननु उत्सर्गतोऽप्यनिश्राकृत इव"
एवमस्ति । "कुतः कारणात् ?" इति चेत्,

उच्यते । 'चयसुनिस्सं' इति वाक्येन निश्राकृतचैत्यस्य उत्सर्गतश्च त्याज्यत्वेनोपदिष्टत्वात् । तथाच कल्पभाष्यचूर्णौ

अनुयानगमननिषेधकदशकारणावसरे—'इयाणिं परिहरणा अणुयाणत्ति दारं, चोयग जिणकालम्मि वि किह परिहरणा जहेव अणुयाणे अभिगमणम्मि य पुच्छा निक्कारणकारणे लहुया जइ सन्ति एसु गच्छेसु संपयं एवं आहाकम्मादयो दोसा, तो जिण-काले सहस्सादीणं गच्छाणं कहं आहाकम्मादीणं परिहरणा' ॥

आचार्य आह 'जहेव अणुयाणे' अस्य व्याख्या—ण्हाणाणुजाणमाईसु जायन्ति जह संपयं समोसरिया। सतसो सह-स्ससो वा इय जिणकाले वि सोहिसु कंत्था" ॥

आह हीनत्वान्न युक्तेयमुपमा। यथा 'देवदत्तमुखमिव चन्द्रः' इत्युक्ते हीनोपमत्वादयुज्यमानमित्युपगम्यते तद्वत् साम्प्रतिक-समवसरणोपमया तीर्थकरकाले समवसरणमुपमेयमिति हीनोपमा कृता भवता।

आचार्य आह—"पच्चक्खेण परक्खं साहिज्जइ नेव एसु हीणुवमा जं पुरिसजुगे तइए वुच्छिन्नो सिद्धिमग्गाओ 'कंत्था, तित्थ कराउ सुधम्मसामी तो जंबुनामो सिद्धो जदि उग्गमादीहिं दोसेहिं न मुज्झंतो तो न चेव सिज्झंतो जंबुनामातो सिद्धिमग्गो वुच्छिन्नो अतिगमणं पच्छट्ठं, सीसो पुच्छइ, अणुयाणे किं अभिगंतव्वं नवेति, आयरिओ भणइ, जइ निकारणे अभिगच्छति पच्छित्तं आणादिणो य दोसा विराहणा होइ संजमाए। एवं तावचंते दोसा पत्ते अणेगविहा कंत्था, विराहणा कहं संजमे आताए। उच्यते। महिमा उस्सुयभूएरीयादी नवि सोहए तत्थ आयायकायये न सुत्तं नेव पेहणा कंत्था इरियं न सोधयति तत्थ कंटट्ठिमादीहिं आयविराहणा" ॥ संजमविराहणा पंथेऊकायो ॥ उत्सुकत्वेनैव न सूत्रमर्थं वा गुणयति, नापि प्रतिलेखनां

८ चेइय १ आहाकम्मे २ उग्गमदोसा य ३ संह ४ इत्थाओ ५ नाडग
करोति । एते गच्छन्तस्स दोषाः । मासस्वामी दोषाः— साहम्मियाण अट्ठा
६ संफासण ७ तंतु ८ खुड्ड ९ निद्धम्मकज्जाय १० दारगाहा इत्थ जं अकप्पियं कप्पियं वा तं भणति । साधर्मिकाणामर्थाय यत् कृतं तस्येयं मार्गणा—चे
चउव्विहे लिङ्गओ जह कुडुंबी । मङ्गलसासयभत्तीइ जं कइयं तत्थ अदोसो । सासयचेइयाणि ॥ ३ ॥
इयत्ति दारं, ताणि चेइयाणि चउव्विहाणि तं जहा साहम्मियचेइयाणि ॥ १ ॥ मङ्गलचेइयाणि ॥ २ ॥ न लिङ्ग-
भत्तिचेइयाणि ॥ ४ ॥ तत्थ साहम्मिए चउव्विधेत्ति भङ्गा सूइया, लिङ्गतो साहम्मिओ न पवयणतो इत्येकः ॥ १ ॥ न लिङ्गतो न
तो साहम्मिओ, किन्तु पवयणतो त्ति, द्वितीयः ॥ २ ॥ लिङ्गतो साहम्मिओ पवयणतो य त्ति, तृतीयः ॥ ३ ॥
पवयणतो साहम्मिओत्ति, चतुर्थः । ४ । स्थापना चैवं ॥

लि० । न प० ॥ १ ॥ प० । न लि० ॥ २ ॥ लि० । प० ॥ ३ ॥ न लि० । न प० ॥ ४ ॥

लिङ्गतो जह कुडुंबी, वारत्तयो भणियं होइ एयस्स कयं अम्हं कप्पइ । अस्या व्याख्या—वारत्तगस्स पुत्तो पडिमं ठाविंसु चे-
इयहरम्मि । तत्थ य थली अहेसी साहम्मियचेइयं तं तु कण्ठा ॥ मङ्गलचेइयाणं व्याख्या—अरहन्तपतिट्ठाए महुरानयरीइ
मंगलाइं तु गेहेसु । चच्चरेसु अ छन्नउईगामअड्ढेसु महुरानयरीए घरे कए पढमं अरहन्ता पतिट्ठविज्जंति मङ्गलनिमित्तं ॥ जइ न
करिंति घरं पडइ, गामड्ढेसु त्ति देसीभणितीछन्नउई गामेसुत्ति भणियं होइ, उत्तरावहाणं एसा भणिति । गामड्ढेसु, सारेण्वि-
त्यर्थः । 'सासयभत्तिचेइयाणं, व्याख्या—निययाइं सुरलोए भत्तिकयाइं च भरहमादीहिं । निस्सानिस्सकयाइं तहिं आएसो

जह गुनिस्सम् ॥ इत्थ भत्तिचेइए आदेसो अधिकार इत्यर्थः। निस्साए कयं जं तं न कप्पइ, जत्थ साहुनिस्सा नत्थि तं कप्पति, अनेन निश्चयुक्तम्—'अनिश्राचैत्येऽन्यदापि गन्तुं कल्पते, किं पुनः स्नानानुयानादिमहसि ? निश्राचैत्ये तु स्नानानुयानाद्युत्सवेऽपि गन्तुं न कल्पते, किं पुनरन्यदा ? ततोऽनुयाने यद्युभयत्राप्यविशेषेण गम्यते तदा निश्राचैत्यत्यजनोपदेशस्य नैरर्थक्यम्। तथाच निश्राचैत्यगमनमेव प्रतिषिद्धकारणरूपो दोषः, अथ अनिश्राचैत्यस्य एव अनुयानाद्युत्सवे गम्यते तर्हि तत्रस्थानि निश्राचैत्यानि यदि न परिह्रियन्ते तदा आज्ञाभङ्गादयो दोषाः अथ परिह्रियन्ते। तदा लोकप्रवादः, श्रद्धाभङ्गो मत्सरवृद्धिश्च तद्गोष्ठिकानाम्। तथाहि—यदि निश्राचैत्यसम्बन्धिनि अनुयानोत्सवे न गम्यते तदा लोकोपहासः। यथा—'अहो! समतापरिणामस्तपस्विनां यदेते स्वकीयैरेव श्राद्धैरारब्धे तीर्थोन्नतिहेतौ अनुयानोत्सवेऽपि गच्छन्ति, नतु परकीयैः' इति। निश्राचैत्यगोष्ठिकानां च सुविहितेषु प्रद्वेषः। अथ तत्रापि गम्यते तदावश्यमेव निश्राचैत्येऽपि गन्तव्यमेव। नहि दुग्धे पातुमारब्धे तत्सम्बद्धं जलं परिहर्तुं शक्यते। तथाच प्रवृत्तिदोषः, 'जहगुनिस्सं' इत्यागमविराधना चेति। तस्माद्यथाक्षुद्रेदनाद्यन्यतरकारणमन्तरेण यतिभिर्भोजनं न क्रियते, एवं कारणमन्तरेण स्नानानुयानाद्युत्सवेऽपि न गम्यते एवेति।

चेइयविसयं, इदाणिं आधाकम्म इतिदारं। जीयं उद्दिस्स कयं कम्मं सो वि य जया उ साहम्मी ॥ गो चिय तत्तिए भत्ते लिङ्गादीणं न सेवेज्ज ॥ जीवमुद्दिश्य यत् कृतं 'सो वि य जइ साहम्मिओ' सोचिय जइ तइए भत्ते लिङ्गतो वि पवयणतो वि तो आहाकम्मं भवइ न सेवेज्ज भवेज्ज। आह तित्थकरपडिमट्ठाए कयं कहं कप्पइ ॥ उच्यते। संवट्टमेहपुप्फा गन्धनिमित्तं कया जइ जईणं। न

हु लब्भापडिसेद्धुं । किंपुण पडिमट्ठमारब्धं ? कंठा तीर्थकरस्यैव अट्ठाए जं कयं तं तस्स पडिसेवतस्स कहं दोसो न भवति ? उच्यते । तित्थकरनामगोयस्स खयट्ठा तह या चेव सा भव्वा धम्मं कहेइ, अरिहा पूयं वासेव एतं तु खीणकसाओ अरहा कयकिच्चो अविय जीयमणुय त्तिपडिसेवंतो वितहा अदोसवं होइ तं पूयं कंठा ॥ सा भव्वाइति ॥ स्वको भावः स्वभावो यथा आपो द्रवा इत्यादि, एवं तीर्थंकरस्य पुनरपि आह तीर्थंकराय यत् कृतं, प्रतिमार्थं वा, तत्केन लक्षणेन यतीनां कल्प्यते, उच्यते—साहम्मिओ न सत्था तस्स कयं ते य णकप्पइ जईणं जं पुण पडिमाणकयं तत्थ कहा का अजीवत्ता ॥ कंठं ॥ न लिंगतो नाऽपि प्रवचनतः साधर्म्मिकः तीर्थकरः ॥ इयाणिं वसहिं भणइ—"ठाइमठाई ओसरणमंडवा संजयट्ठदेसा वा । पेढियभूमीकम्मे निसेवओ अणुमई दोसा, समोसरणे वहवो संजया एहिंतित्ति धम्मसद्धाए मंडवे करेंति, ते पुण देसकया वा, आहाकम्मिया वा, देसकडत्ति, अप्पणो संजयट्ठाए कया ठाइ त्ति, जे वत्ते समोसरणे न उक्किल्लिज्जंति, अट्ठाती जे वत्ते समोसरणे उक्किल्लिज्जंति, तेसु जदि ठायंति, तो तन्निप्पन्नं ॥ 'पेढियत्ति, उयट्टया, भूमीकम्मं समाभूमीकया, आउट्टा वा संमज्जिय उल्लित्तया ॥ एयाणिवि संजयट्ठयाए देसकडाणि वा हुज्जा, एयाणि सेवंतेणं जीवघातो अणु मोदितो भवति ॥ आहाकम्मत्तिगयं ॥ २ ॥ 'इयाणि उग्गमादोसत्ति दारं, ठवियगसंछोभाई दुसोहगा हुन्ति उग्गमे दोसा, वहुगा संजया पविढन्ति त्ति काउं धम्मसड्ढिओ लोगो, संजयट्ठयाए ठवियगगाराणि॥ करेइ ॥ आगयाणं अविखेवेणं दाहामोत्ति, संछोभं वा करेइ, अन्नेसु वि गिहेसु असंकणिज्जेसु तंदुलादिखज्जगविहाणाणि वा संजयट्ठाए निक्खिवइ ॥ आगयाणं दिज्ज ह उग्गमदोसत्ति गयं ॥ ३ ॥ इयाणिं सेहत्तिदारं, वंदिज्जंते दट्ठुं इयरे सेहा तहिं गच्छे,

तत्थ समोसरणे पासत्थाई समोसरंति ॥ ४ ॥ ते य बहुजणेणं वंदिज्जमाणा पूइज्जमाणा अ दट्ठुं तेसु सेहा गच्छन्ति" 'इयरे त्ति' पासत्थाई सेहत्ति गयं ४ इयाणिं इत्थीओ नाडगदोवि दारे एगगाहाए वक्खाणेइ, इत्थी विउव्विआओ भुत्ता भुत्ताण दट्ठुं दोसाओ ॥ ५ ॥ एवमेव नाडयज्जा सविब्भमानचियपगीया ॥ ६ ॥ 'कंठा संफासणत्ति दारं, इयाणिं तत्थ समोसरणे पुप्फारुहण कोउगागयाणं इत्थिपुरिसाणं संमद्देणं स्पर्शो-भवति, तत्र भुक्ताभुक्तभोगानां स्मृतिकरण कोउगाइं भवन्ति ॥ इत्थ गाहा ॥

थी पुरिसाण उफासो गरुगा लहुगा मनी य संघट्टे ॥ आया संजमदोसा उड्डावण पच्छाकम्मादी ॥

कंठा ॥ थीफासे, इत्थी पुरिसफासेज्ज आयात्ति "आतमविराधना" सम्मद्दे हत्थादी भज्जिज्जा संजमविराहणा संमद्दे छकाया न दीसन्ति, न परिहरिज्जंति, उभावणेत्ति ॥ मंजएन छिक्कुत्तिकाउं ण्हाइज्जा, तं पच्छा कम्मं पासित्ता अन्ने वि दुगंछिजन्ति 'आदिशब्दाद्, असंखडंहुज्जा ॥ ७ ॥ इयाणिं तंतुत्तिदारं भणइ ॥

लूताकोलिग जालगकोत्थलकारा य उवरिगेहे य ॥ साडितमसाडिते लहुगा गुरुगा अभत्तीया ॥

लूता पुडओ, कोलिओ मच्छियवग्घाओ, सो वि पिहुतंतूहिं जालसरिसं निव्वत्तेइ तेण मच्छियाईणि गिण्हइ, कोत्थलकारिया, घरेरिया, सेसं कण्ठं ॥ जइ साडेज्ज अह न साडेइ तो भत्ती न कया हवइत्ति ॥ इयाणिं सुद्ध निघम्मकज्जायत्ति दो वि दारे भणइ, पढाइ इयरवरुइं दट्ठुं उग्गंठिया तहिं गच्छे दारं उक्कुट्ठयरघणाइं ववहारे चेव लिंगीणं, छिंदंतस्स अणुमई, य मिलंत अच्छिदओ, अउविखनणाछिद्दाणि य पेहंती नेव कज्जेसु साहिज्जं ॥ गाथाद्वयं कण्ठं ॥ घट्टा मट्टा पपुट्टा पंडुर पडपाउआ

परिणमित्ता तत्थ गच्छंति, ॥ ९ ॥ उक्खिवणंति उग्वा-
हयमिव उद्दामा गयमिव निरंकुसा, पासत्थादी खुड्डे दट्ठुं संविग्गखुड्डावि परिणमित्ता तत्थ गच्छंति, ॥ ९ ॥ उक्खिवणंति उग्वा-
डणा ॥ १० ॥ एए दोसा निक्कारणपविसंतस्स, इत्याज्ञाभङ्गाद्यात्मसंयमविराधनादिदोषभयाच्चैत्याधाकर्म्मादिदोषदर्शकभयाच्च
सुविहितानाम् उत्सर्गेण अनिश्राचैत्यस्यापि स्नानानुयानाद्युत्सवे गमनप्रतिषेधोऽभ्यधायि ॥ अत एव उज्जयिन्यां श्राद्धै रथयात्रा-
महसि प्रारब्धे, एषु युगप्रधानेषु आगतेषु असदारब्धरथयात्रा सनाथा भविष्यतीति, तन्निमन्त्रणया देशान्तरात् सुविहितशिखा-
मणयः श्रीमदार्य्यसुहस्तिसूरयस्तत्र आययुः ॥ न पुनः स्वकीयया महिमाविशेषावलोकनोत्कण्ठया ॥ ननु एवं चारणश्रमणैः
व्यभिचारः, तेहि नन्दीश्वरादिचैत्येषु अष्टापदादिचैत्येषु वा शक्रादिप्रारब्धां महिमां द्रष्टुं निजेच्छयैव आगच्छन्तीति श्रूयते ?
इति चेत् सत्यं किन्तु तेषां निजशक्त्या तत्र गमनेऽपि पूर्वोक्तदोषाऽसंभवादिति न तैर्व्यभिचारः ॥ तत्किं निश्राचैत्ये ऽनु
यानोत्सवेऽपि न गन्तव्यमेव ? न अपवादतस्तत्राऽपि गमनस्यानुज्ञातत्वात्, तथाहि कल्पभाष्यचूर्ण्योः, इमेहिं पुण कारणेहिं
पविसियव्वं जइ न पविसंति चउलहुआ ४ काणि वा कारणानि, चेइयपूया १ रायानिमंतण २ सन्नि ३ वाइ ४ खवग ५
धम्मकही ६ संकिय ७ पत्त ८ पभावण ९ पवित्ति १० कज्जाय ११ उड्डाहो ॥ १२ ॥ इति द्वारगाथा चेइयपूया, रायनिमंतणं
च दोवि दारे एगट्ठे वक्खाणेइ ॥ पविसंते इमे गुणा भवन्ति "सड्ढावुड्ढी रण्णो पूयाइत्थिरत्तणं पभावणया पडिघाओ य अणत्थे
अत्था य कया हवइ तित्थे, रन्नो सड्ढा वड्ढिया हवइ, चेइय पूया थिरीकया भवइ ॥ एवं तीर्थं प्रभावितं भवति ॥ ये वान्ये अर्ह-
च्छासनस्य बहुजने दोषान् ख्यापयन्ति, एवंविधानाम् अनर्थानां प्रतिघातः कृतो भवति, आस्था नाम स्वपक्षपरपक्षिणाम्

अर्हत्कृते तीर्थे बहुमानमुत्पादितं भवति ॥ इयाणिं गन्निरादि एए दोवि दारे एगट्ठे वक्खाणेइ, एमेव य सन्नीणं वि जिणाण पडिमासु पढमपट्ठवणे मा परवाई विग्घं करिज्ज, वाई अओ विसइ उवासगो कोइ पढमं जिणपडिमाए पइट्ठाणं करेइ, तत्थ माहणो आगए दट्ठूणं चिंतेइ, जइ ताव इमे भगवंतो अरिहपूयं दट्ठुं एंति, एतदेव ममातो अलाहि, एत्ताहे निच्चमेव पूयं करेमि, एवं सड्ढा वड्ढइ, अह न पविसंति संजया, नत्थित्ति विपरिणामो भवइ, किं एतेसिं पूया कीरइ, कोइसे नत्थि ॥ ३ ॥ वादिणा पविट्ठेणं इमे गुणा परवादिनिग्गहं दट्ठुं भवंति,

नव धम्माणं थिरत्तं पभावणा, सासणे, य बहुमाणो ॥ अभिगच्छन्ति य विउसा अविग्घपूयाए सेयाए ॥

कण्ठा ॥ सेयाएत्ति ॥ अविग्घेणं पूयाए कयाए सपरउपरपरउाणं इह लोए परलोए य सेयं इहलोए असिवाइउवद्दवा न भवंति ॥ परलोए तित्थयरपूयाए दरिसणविसुद्धी निज्जत्तिया भवइ ॥ ४ ॥ इयाणिं खवगत्तिदारं,

आयावेंति, तवस्सीओ, भावणया परप्पवाईणं ॥ जइ एरिसा वि महिमं ठविंति कारिंति सड्ढाय,,

'कण्ठा, जइ एरिसा वरस्सिणो ठविंति तओ सावगामहिमं करेंति, कारविंति य ॥ इयाणिं धम्मकहीतिदारं ॥

आयपरसमुत्तारो तित्थवियड्ढी य होइ कहयंते ॥ अन्नाभिगमेण य पूयाथिरया स बहुमाणा ॥

कण्ठा ॥ अन्येषां श्रावकाणां प्रतिबोधनेन धम्मकहत्तिगयं ॥ ६ ॥ इयाणिं संकियत्तिदारं ॥ निस्संकियं च काहिइ उभये

जं संकियं सुयधरेहिं, उभयेत्ति ॥ सूत्रेऽर्थे च यत् शङ्कितम् आसीत्, तच्चैत्यपूजाद्यन्यतरकारणमिलितावाचत्रश्रुतधरेभ्यः सका-
शात् निश्शङ्कितं करिष्यन्तीति ॥ ७ ॥ पत्तइतिदारमिदानीम्,,
अव्वो छित्तिकरं वा लभिसिपत्तं दुपक्खाओ गिहत्थपक्खाओ सीसं संजयपक्खाओ पाडिच्छयं
लभेज्जा ॥ ८ ॥
अथ पभावणत्ति दारं ॥
जाइकुलरूवधणवलसंपन्ना इड्ढिमंतनिक्खंता ॥ जयणाजुत्ता य जई समेव तित्थं पभाविंति ॥ पावयणी ॥१॥
धम्मकही २ वादी ३ नेमित्तिओ ४ तवस्सीय ५ विज्जा ६ सिद्धोय ७ कवी ८ अट्ठेव पभावगा भणिया ॥ जो जेण गुणेण
अहिओ, जेण विणा वा न सिज्झइ, जं च ॥ सो तेण तम्मि कज्जे सव्वत्थामं न हावेइ ॥ ९ ॥ साहम्मिया गयाणं खेमसिवाईण
लभए वित्ती, गच्छइ जहियं ताइं होइ त्ति नवा वि पुच्छइ, वा ॥ तत्थ अन्नेसिं संभोइयाणं चिरगयाणं पवित्तिं सुणइ, आय-
रियाणं वा अहवा सुभिक्ख दुभिक्खाणं नेमित्तिया पवित्तिं साहिंति ॥ पुच्छइ साहम्मियाई किं होहिंति नवा ॥१०॥ कुलमाई-
कज्जाइं साहिस्सं ॥ ११ ॥ लिंगिणोय साहिस्सं जे लोग विरुद्धाइं करिंति लोगुत्तराइं वा ॥ १२ ॥ अथ प्रागुक्ताऽऽज्ञाभङ्गातङ्का-
दिदोषात्मसंयमविराधनादिदोषपरिहरणार्थम् गमनविधिं दर्शयतश्चूर्णिभाष्ये "एएहिं कारणेहिं पुव्विं पडिलेहगाउ पेसविओ
अद्धाण निग्गयादी लग्गा सुद्धा जहा खमओ, एएहिं ति, यान्येतानि चेइयपूयादीनि कारणनि उक्तानि, एएहिं पविसि-यव्वं ति, काउं

पुव्वं पडिलेहियव्वं, तत्थ इमे पसियव्वा इमाणि य पडिलेहियव्वाणि, अनयोर्व्याख्या—नाऊण य अभिगमणं गीए पेसेइ, पेहिउं फज्जो, उवस्स अ भिक्खायरिया वाहिं उब्भामगाईया सा भाविय इयरे विय जाणंती मंडवादिणो गीया सेहाईण य थेरा वंदण जुत्ति विहिं कहए कण्ठा ॥ अथ चैत्याधाकर्म्मादिदोषदशकपरिहरणार्थं, यतनामाहतुश्चूर्णिभाष्यकारौ ॥ पविट्ठाणं चेइयवंदणे समोसरणे य विहिं भणइ ॥ निस्सकडमनिस्सकडे वावि चेइए सव्वहिं थुईतिन्नि वेलंव चेइयाणि य नाओ इक्किक्किया वावि ॥ १ ॥ निस्सकडे ठाइ गुरू कइवयसहिए इयरा वए वसहिं ज तु पुणनिस्सं कड थूरिंति तहिं समोसरणं ॥ संविग्गेहिय कहणा इयरेहिं अपच्चओ न उवसमो पव्वज्जाभिमुहादि य तेसु वए सेहमाईया थूरिंति समोसरणं अच्चागइ निस्स चेइएसुं पि ॥ इहरालोगविरुद्धो सद्धाभंगो य सड्ढाणं ॥ कण्ठा ॥ भिक्खाहिंडणे इमो विही, पुव्वपविट्ठेहिं समं हिंडंति, तत्थ ते पमाणं तु साभाविय भिक्खाओ-विदंति पुव्वाय ठवियादी ॥ कण्ठा 'पुव्वपविट्ठेहिं ति, जे पुव्वं पडिलेहगा पेसविया जत्थ इत्थीसंकुलं तत्थविदेण इंति निंति वज्जुयमज्झे थेर इत्थिओ तेण, ठिंति नय नाडएसुं ॥ अथ ठंति नपेहरागाइं जुवत्ति तरुणा ते मज्झे कीरंति ॥ यतः स्त्रियः ततो वृद्धा भवन्ति, जत्थ नाडइज्जाओ तत्थ न ठायंति, अथ ठंति तो ताणि मणोहराणि न पिक्खंति, गीए य नोवयुंजंते ॥ तंतुलवाजालादिसु इमो विही—

सीलेइमंगफलये इयरे चोयंति तंतुमाईसु ॥ अभिजोइंति सवित्तिसु अणिच्छफेडंत दीसंता ॥

कण्ठा ॥ जत्थ तंतुमाईणि पिच्छइ तत्थ देउलिए चोएइ ॥ एयाणि देउलाणि मंगफलयसमाणाणि जइ मंखस्स फलयं उज्ज-

अथ संवित्तिओ तो अभिओ इज्जंति अंबाडिज्जंति ।। जत्थ
लंताहे सव्वो पूरइ एवं जइ देउलाणि सारवेह तो अन्नं पि लब्भइ ।। मणुन्नेय आहारो ।। कण्ठा ।।
खुड्डविप्परिणामो तत्थ उज्जलवेसो खुद्दे करिंति ।। उव्वट्टणाइ चुक्खेय नय मुचंतसहाए दिंति ।। एयं दीहाउ लक्खणं विइयस्स
खुद्दाणं उरब्भ दिट्ठंतो य कीरइ आउर चिन्नाइं एयाइं जाइं चरइ नंदिओ सुकतणेहिं जावेहिं पच्छद्धं, उवणओ कायव्वो, कज्जेसु
उरब्भस्स माया भणइ ।। हे, पुत्त एताहिं एसमारिज्जं तओ एवं चारिज्जइ, तुमं सुकत्तणेहिं, तिव्व खुभे दंडं ।। कण्ठा ।।
इमो विही न मिलंति ।। लिंगिकज्जे अच्छंति च मीलिया उदासीणा चिंतिय निच्चं धम्मं करेमि
अत्रतु ।। चेइयपूइयेत्यादिभिः कुलमाई कज्जाइं साहिसस्सं इत्यन्ताभिर्गाथाभिः द्वादशस्वपि चैत्यपूजादिपु अनुयानगमन-
कारणेपु भणितेपु अन्यतरकारणवशेन अनुयानगमनसंभवे सति, पूर्वोक्तानुयानगमनकारणेषु भणितेपु अन्यनिपेधकदो-
पदशकपरिहरणार्थ 'एएहिं' इत्यादि गाथाभिर्विधिरुक्तः ।। तत्रत्यलोकानाम्' अनुयानोत्सवविपयोत्साहः वृद्ध्यर्थमेत्र 'निस्स-
कडमनिस्सकडे वा' इत्यादिना द्वयोरपि चैत्ययोरविशेपेण वन्दनविधिरुक्तः न च ययोः कारणवशादविशेपेण वन्दनविधिरु-
क्तस्तौ कारणं विनापि तथैव सदा वन्द्यौ ।। एवंहि श्रुतादिकारण उपस्थिते सुविहितवत् पार्श्वस्थादयोऽपि उक्तत्वात् वन्द्यन्ते,
इति सर्वदाऽपि तथैव वन्द्येरन् ।। नच वन्द्यन्ते तस्मात् निश्रानिश्राकृतचैत्ययो—रविशेपेण वन्दनम् आपवादिकमेव ? यदि
पुनरौत्सर्गिकं स्यात्, तदा तद्विधिरत्र नोच्येत, अयं हि आपवादिककृत्यभणनस्यैव अवसरः ।। किञ्च चैत्यवन्दनविधिर्द्वयोरपि
अविशिष्ट एवोक्त इति, यदि द्वे अपि चैत्ये सदा वन्द्ये तर्हि समवसरणपूरणमपि द्वयोरपि अविशिष्टमेवोक्तम्, इति तदपि सदा

विधेयं स्यात्, तथा च 'चयसुनिस्सं' इत्युपदेशस्य नैरर्थक्यं ॥ वन्दनसमवसरणपूरणयोः गमनमन्तरेण असंभवादिति ॥ गमनस्यापि तत्र भावात् न नैरर्थक्यं ॥ यत्रानिश्राचैत्यं भवति, समवसरणपूरणमाश्रित्य निश्राचैत्यं भवति, तत्र समवसरणपूरणम् आश्रित्य निश्राचैत्यस्य वर्ज्यत्वादिति चेत्? न चैत्यवन्दनार्थं तत्रापि अवर्ज्यत्वात् ॥ ततश्चैत्यवन्दनार्थं तत्र गताः सन्तो, यदि गुणविशेषसभाननया समवसरणमपि पूरयन्ति, तदा को दोषः ॥ अपि च यदि समवसरण पूरणमेव अपवादिकं, न चैत्यवन्दनं, तर्हि समवसरणपूरणस्यैव विधिरत्र भणितुमुचितो, न चैत्यवन्दनस्य, तस्यौत्सर्गिकत्वेन सदा सिद्धत्वात्, नच सिद्धं साध्यतेऽनवस्था प्रसङ्गात्, अथ 'चयसुनिस्सं' इत्यनेन समवसरणमेव निश्राचैत्ये निषिद्धं, न चैत्यवन्दनम्, अनिश्रा चैत्याभावे तस्यैव निश्राचैत्ये विधेयत्वेनोक्तत्वात् ॥ यदुक्तं "पूरिंति समोसरणं अन्नासइ निस्सचेइएसुं पीति" तथापि साधारणवाक्यभ्रान्तौ मा कश्चित् ज्ञासीत् वन्दनमपि निषिद्धमेवेति तद्विधिरुक्तः, इति चेत् न "जइ सुनिस्सं" इत्यनेन निश्राचैत्यस्यौत्सर्गतः सर्वथापि त्याज्यत्वेनोक्तत्वात्, चूर्णिकृतापि तथैव व्याख्यातत्वाच्च ॥ तथाहि—"जं निस्साए कयं तं न कप्पइ त्ति" अकल्पनीयं चापरिभोग्यमेव भवति, ततः परिभोगानर्हत्वाद्—अगम्यम् एवेदं, तथा च तत्र गमनासंभवे कथं वन्दनं समवसरणपूरणं वा भविष्यतः ॥ अत एव अपवादसूत्रेष्वेव द्वयोरपि चैत्ययोरविशेषेण वन्दनविधिरुक्तः ॥ नतूत्सर्गसूत्रे क्वापि, यदि पुनः सदापि अविशिष्ट एवासौ अभविष्यत्, तदा उत्सर्गसूत्रेष्वपि अभणिष्यत् ॥ नच भणितस्ततो ज्ञायते आपवादिक एवेति, यत एवापवादिकस्तत एव एनं शैक्षका न जानते, तेषाम् अपरिणतत्वेन अपवादसूत्रानधिकृतत्वात् ॥ यत एव न जानते, तत एव कारणत्रयाद्

अनुयाने गच्छन्तः स्थविराः शैक्षकादीनां वन्दनयुक्तिं वहिरेव कथयन्ति ॥ यदुक्तं—सेहाईणं य थेरा वंदणजुत्तिं बहिं कहएंति"
यदि पुनर्द्वयोरपि चैत्ययोः समाना वन्दनयुक्तिरौत्सर्गिक्येव स्यात्, तदानीं स्थविरास्तेषां तां वहिर्नाकथयिष्यन् ॥ तस्मा आरोग-
नाशिक्षान्तर्गतत्वेन अपर्वानुष्ठानत्वेन च वृत्तग्रहणानन्तरमेव तैरभ्यस्तत्वात्, किंच वन्दनापेक्षया द्वे अपि चैत्ये समतया यदि
गम्ये स्यातां, तदा अनिश्राचैत्ये इव निश्राचैत्येऽपि प्रस्तुतवेषेणैव क्षुल्लका गच्छेयुः ॥ न चैवमस्ति, तत्र हि गच्छन्तः सुवि-
हिताः क्षुल्लकान् उज्ज्वलवेषान् उद्वर्त्तनाद्यपनीतमलान् कृत्वा नयन्ति, यदुक्तम् "उज्जलवेसे खुड्डे करिंति उव्वट्टणाइ चुक्खेयत्ति"
अन्यथोद्भटवेषत्वेन नटविटप्रायान् पार्श्वस्थादिक्षुल्लकांस्तत्र दृष्ट्वा ते विपरिणम्य तन्मध्ये गच्छेयुः ॥ यदुक्तं 'घट्ठा य इयरखुड्डे
दट्ठुं उग्गंडिया तहिं गच्छेइ त्ति, तस्मात् चैत्यवन्दनार्थमपि न समतया द्वे अपि चैत्ये गम्ये ॥ अपि च यदि द्वे अपि चैत्ये समे
स्यातां, तदा अनिश्राचैत्ये इव निश्राचैत्येऽपि, स्नानादिमहिमादर्शनार्थं गीतार्थसाधुभिः सह तिष्ठता गुरुणा सह शैक्षका अभि
तिष्ठेयुः ॥ न च तिष्ठन्ति, ते हि नवप्रव्रजितत्वेनापरिणता इति वसतौ व्रजन्ति, यदुक्तं निस्सकडे ठाइ गुरू कइवयसहिओ
इयरा ताहे वसहिं ॥ इति, अन्यथा महर्द्धिकलोकवन्द्यमानपार्श्वस्थादींस्तत्र दृष्ट्वा शैक्षका गौरवप्रियत्वेन तन्मध्ये गच्छेयुः, यदुक्तं
"वंदिज्जंते दट्ठुं इयरे सेहा तहिं गच्छे इति" तथा यदि निश्राचैत्यम् उत्सर्गतोऽपि गम्यं स्यात्, तदा तत्रस्थलूतातन्तुजलाद्यशु-
भपदार्थानाम् अपनयनेऽनपनयने च किमिति प्रायश्चित्तमुक्तं ॥ यथा, लूताकोलिगजालगकोत्थलकारा य उवरिगेहे य ॥ साडिंत-
मसाडिंते लहुगा गुरुगा अ भत्तीएत्ति ॥ अवश्यं हि तत्रगतास्तत्स्थं तन्त्वादिकचवरं द्रष्टुमशक्नुवन्तोऽपनयन्ति ॥ न अपनयंति

वा तृतीयप्रकारस्य अभावात् ॥ तथा च यद् उभयथा प्रायश्चित्तमुक्तम् तेन ज्ञायते उत्सर्गेण अगम्यमेव, एतद् गमने चासति कथं वन्दनं समवसरणपूरणं चेति, एतेन यत्केनापि उक्तं यथा भक्तिचैत्यमनिश्राकृतं निश्राकृतं वा वन्द्यमेव समवसरणपूरणं तु अनिश्राचैत्ये एव, उत्सर्गतो, न निश्राचैत्ये तथाचोक्तं

"वंदणमहिगिच्च पुणो भत्तिकयं वंदणिज्जमविसेसं । पक्खाणमनिस्सकडे उस्सग्गेण सुए भणियं ॥

अववाएणं निस्साकडे वि कायव्वय तयं भणियं बवखाण मंडवाइ आहाकम्माइ जं तत्थेति ॥ तदपि अपास्तमवगन्तव्यं, नहि निश्राचैत्ये आधाकर्मिकव्याख्यानमण्डपादियुक्तत्वात् समवसरणं न पूर्यते, किं तर्हि मानपातकारणपार्श्वस्थायनीतिदर्शन-हेतुत्वात्, अन्यथा चैत्यवन्दनाया अप्यत्रा करणं, आधाकर्मिकादिदोषप्रसङ्गभयात् तत्र गमनस्यापि उत्सर्गतोऽसंभवात्, किंच यावन्ति निश्राचैत्यानि तावन्ति सर्वाण्यपि आधाकर्मिकमण्डपादियुक्तान्येवेति, व्याप्तिस्तावन्नास्ति, अनेकेषां तद् रहितानामपि तेषां दृश्यमानत्वात्, तथाच त्वदुक्तोपाध्यभावात् उत्सर्गतोऽपि तत्र समवसरणपूरणप्रसङ्गः, नच तत्र तत्पूर्यते, अनिश्राचैत्या-भावे एव सति, निश्राचैत्यगोष्ठिकलोकानुवृत्त्या एव तत्र तत्पूरणस्यानुज्ञातत्वात्, तथाहि

पूरिंति समोसरणं अन्नासइ निस्सचेइएसुंपि ॥ इहरा लोगविरुद्धो सद्धाभंगो य सड्ढाणं ति"

तस्माद् गमनं वन्दनम्, अवस्थानं समवसरणपूरणं, च सर्वमपि निश्राचैत्ये आपवादिकमेवेति, सिद्धं निश्राचैत्यवन्दनमापवा-दिकमिति ॥ ननु भवतु अनायतनं वर्ज्यं, निश्राचैत्यगमनमपि आपवादिकं, तथापि तत्रस्था जिनप्रतिमा वन्द्या एव, आयतन-

५

अविषयत्वात् सिद्धं ? इति त्वात्, सुमाधुवत्, आयतनत्वं च तासामधिकारिप्रतिष्ठितत्वे अव्यङ्गत्वे च सति द्रव्यलिङ्गिवासस्यापि
चेत् मैवं नहि द्रव्यलिङ्गिवसनमेव केवलम् अनायतनत्वे हेतुः ॥ किन्तु अशुद्धत्वमपि, अविधिमत्त्वमपि, च ? तथाहि अविशुद्धम्
अविधिना च ध्रियमाणं साधूपकरणमपि अनायतनं भवति ॥ यदुक्तम् ओघनिर्युक्तौ वृत्तौ च "एवमिणं उवगरणं धारेमाणो वि-
हीइ परिसुद्धं होइ गुणाणायतणं" अविहिअसुद्धं अणाययणं,, एवमुक्तेन न्यायेनोपकरणं धारयन् विधिना परिशुद्धं सर्वदोषविवर्जितं,
किं भवति गुणानाम् आयतनं भवति, अथ पूर्वोक्तविपरीतं क्रियते यदुत अविधिना धारयति, अविशुद्धं च तदुपकरणं, तदा अवि-
धिना अविशुद्धं ध्रियमाणं तदेवोपकरणम् ॥ अनायतनं अस्थानं भवतीति ॥ अनायतनस्थाश्च प्रतिमा लिङ्गिभिः परिगृहीताः स्वयं
करणकारापणादिदोषदुष्टत्वेन चाऽशुद्धाः ॥ आगमोपघातकाचारवत्त्वाद्, अविधिमत्त्वाच्च, ततोऽनायतनं ॥ तथाच प्रयोगः—
विवादाध्यासिताः प्रतिमा अनायतनम्, अशुद्धत्वाद्, अविधिमत्त्वाद्वा, यदेवं तदेवं यथा उभयसंप्रतिपन्नं रजोहरणादि, तथा
चेदं, तस्मात्तथेति, ॥ किंच कल्पभाष्ये सम्यग्दृष्टिभाविता एव प्रतिमा भावग्रामो भवन्ति, नेतरा मिथ्यादृष्टिभाविता इत्युक्त-
मस्ति, यथा जा सम्मभावियाओ पडिमा इयरा न भावगामाओ ॥ भावो जइ नत्थि तहिं न णु कारणकज्जमुवयारा ॥ एवं खु भा-
वगामो निण्हयमाई वि जह मयं तुब्भं ॥ एय मवच्चं कोणु हुवअ विवरीओ वइज्जाहिं जइ वि हु कुसुमुप्पाओ कस्सवि दट्ठूण निण्हवे
हुज्जा । मिछत्तहतसईया तहावि ते वज्जनिज्जाओत्ति" एवं च सम्यग्दृष्टिभावितप्रतिमा एव ज्ञानदर्शनचारित्ररूपभावहेतुत्वाद्
आयतनं नेतरा इत्यायातम् ॥ द्रव्यलिङ्गिपरिगृहीतास्तु प्रतिमाः न सम्यग्दृष्टिभाविताः, द्रव्यलिङ्गिनां मिथ्यादृष्टित्वात् ॥

एतच किंचित् साधितं, साधयिष्यते च, इति कथम् आयतनं स्युरिति ॥ ननु 'दव्वम्मि जिणहराइ' इत्यनेन ओघनिर्युक्तिवाक्येन
प्रतिमानां द्रव्यायतनत्वमेवोक्तम्? इति चेत् सत्य किंतु सम्यग्दृष्टिभावितानामेव नेतरासाम् इत्यवधार्यम् ॥ अन्यथा दिगम्ब-
रसंबन्धिजिनगृहप्रतिमानामपि द्रव्यायतनत्व स्यात्? नन्वेवं तर्हि संगमकप्रायमहामिथ्यादृष्टिदेवविमानस्थसिद्धायतनप्रतिमा
अपि न आयतनम्? इति चेत् न नित्यचैत्येषु हि संगमकवद् अभव्या अपि देवा मदीयमिति बहुमानात् कल्पस्थितव्यवस्थानु-
रोधात् तदद्भुतप्रभावाद् वा न कदाचिद् असमञ्जसक्रियाः प्रारभन्ते, यदुक्तमागमे "देवहरयम्मि देवा विसयविसविमोहिया
वि न कया वि। अच्छरसाहिंपि समं हासं कीडाई वि करिंति" किञ्च चतुष्षष्टिरपि इन्द्रा देवाधिपतित्वेन महासम्यग्दृष्टित्वेन च
शश्वत्प्रतिबद्धसर्वसिद्धायतनशुद्धिविधानैकप्रवणा एवेति, एतेषु विजयमानेषु को नाम आत्महितैषी नित्यचैत्येषु आत्मविमान-
स्थत्वेन नीत्यतिक्रमम् आरभ्यते, मिथ्यादृष्टिभावितत्वं च चैत्यानां तत्प्रतिष्ठितासमंजसाचारकलुषितत्वं ॥ तच शाश्वतप्रतिमानां
नास्तीति, ता भावग्रामत्वं न व्यतिचरन्त्येव, तथाच आयतनमेव ॥ आयतनभावग्रामयोरेकार्थत्वात् ॥ किञ्च अत्यन्तमसंव-
द्धाचार्यो भवान् यद् भक्तिचैत्यविचारम् आरभ्य नित्यचैत्यैर्व्यभिचारम् उद्भावितवान् ॥ परं सोऽपि आगमनीत्याऽस्माभिर्नि-
राकृत इति" द्रव्यलिङ्गिपरिगृहीतानि तु चैत्यानि मिथ्यात्वकारणाचारकलुषितत्वाद् अनायतनमेव, तथाच सति निह्नवेष्विव तेषु
दृष्टेषु यदि कस्यापि सम्यक्त्वम् उत्पद्यते, उत्पद्यतां नाम, तथापि मिथ्यात्वभावितत्वात् तानि अनायतनम् एव निह्नवत्, यदुक्तं
"जइ वि हु समुप्पाओ कस्स वि दट्ठूण निन्हवे होज्जा। मिच्छत्ताहयं सइंया तहा वि ते वज्जणिज्जाओ।

इति" ननु अनायतनत्वे सति किं जातं तासाम् ? उच्यते असेव्यत्वं ? यदुक्तमावश्यके "खणमवि न खमं काउं अणायण-
सेवणं सुविहियाणं ॥ जग्गंधं होइ वणं तग्गंधो मारुओ वाइ त्ति" तथा च प्रयोगः-विवादाध्यासितं, परतीर्थिकाऽपरिगृहीत-
मपि, श्वेताम्बरयतिप्रतिष्ठितमपि, अव्यङ्गमपि, अर्हद्बिम्बं, सुविहितानाम्, अवन्द्यम्, अनधिकारिपरिगृहीतत्वात्, यदेवं तदेवं,
यथा मातङ्गपाटकान्तर्गतजिनगृहजैनमातङ्गपरिगृहीताऽर्हच्चैत्यं ॥ नहि परतीर्थिकाऽपरिगृहीतमपि, श्वेताम्बरयतिप्रतिष्ठितमपि, अव्य-
ङ्गमपि मातङ्गपरिगृहीताऽर्हच्चैत्यं, चतुर्मासिकादिपर्वस्वपि कैश्चिदपि मातङ्गव्यतिरिक्तैर्वन्द्यते, अथ मातङ्गैर्वन्द्यमानत्वाद् वन्द्य-
मेव चेत् ? न एवं हि बोटिकादिभिर्वन्द्यमानत्वाद् अन्यतीर्थिकपरिगृहीताऽर्हच्चैत्यस्यापि वन्द्यत्वप्रसङ्गः, सर्वसङ्गपरित्यागित्वेन च
यतीनां प्रतिमापरिग्रहेऽनधिकारित्वमेव, तथाच तत्परिगृहीताः प्रतिमा अवन्द्या एवेति सिद्धम् ॥ अत्र च विस्तरः प्रद्युम्नाचार्य-
पक्षतक्षकश्रीजिनपतिसूरिकृतवादस्थलेभ्योऽवसेयः ॥ उक्तं च द्रव्यधर्मस्य लक्षणं, संप्रति भावधर्मस्य, आह—

"सुद्धो धम्मो बीओ महिओ पडिसोयगामीहिं" ॥ ७ ॥

स एव जिनगृहकारापणादिः शुद्धः, सूत्रसूत्रितविविधविधिपवित्रितत्वान्निर्मलः, यदुक्तं मिथ्यादृष्टिनीत्यमिश्रितत्वात् केन-
लश्च, कथमेवंविध इत्यत आह 'महिअत्ति' महितः पूजित आदृत इत्यर्थः ॥ कैरित्याह प्रतिश्रोतोगामिभिः, न पुनः प्रवाह-
पतितैः, प्रतिश्रोतः संसारोत्तारमार्गः, यदुक्तम् 'अणुसोओ संसारो पडिसोहो तस्स उत्तारोत्ति' तेन गच्छन्तीत्येवं शीलाः प्रतिश्रोतो-
गामिनः, तैः संसारोत्तारमार्गप्रस्थितैः मोक्षार्थिभिरित्यर्थः ॥ एवंविधश्च धर्म्मः, किमुच्यते इत्यत आह 'बीओ धम्मोत्ति' द्वितीयो

धर्मः भावधर्म इत्यर्थः, द्वितीयत्वमस्य द्रव्यधर्मापेक्षया, तत्र भक्तिचैत्यभेदमध्ये विधिचैत्यमेव भावधर्मः तस्यहि जिनधर्मभवनपञ्चाशकादिसूत्रप्रतिपादितविधिपूर्वकत्वात्, नच आवश्यकचूर्णौ जीवाभिगमे च 'दो जक्खपडिमाओ, दो भूयपडिमाओ, दो नागपडिमाओ, दो कुंडधरपडिमाओ, दो चमरहारपडिमाओ, एगा छत्तधरपडिमा, विणओणयाओ पंजलिउडाओ, अभिमुहाओ जिणपञ्जुवासंतीओ चिट्ठंति ॥ इत्येवंरूपपरिवारान्विता प्रतिमा श्रूयते, विधिचैत्ये तु एवंरूपा न दृश्यते ॥ किन्तु अन्यादृशी, तत्कथमस्य सूत्रैकमूत्रितविधिसंपन्नत्वेन भावधर्मत्वम् ? इति चेत् सत्यं किन्तु या जीवत्स्वामिनीत्येन प्रसिद्धा दृश्यन्ते, याश्च श्रीकालिकाचार्यादियुगप्रधानाचार्यप्रतिष्ठिताश्चिरंतनप्रतिमा दृश्यन्ते, ताश्च यादृक् परिवाराः, तादृक् परिवारास्ता विधिचैत्येऽपि विद्यन्ते एवेति, कथम् अनागमिकत्वम् ॥ एवंविधानां हि प्रतिमानां विधाने अविगीताचारपरम्परैव प्रमाणं, सा च सिद्धान्तसमैवेति भावः ॥ इदानीं प्रतिश्रोतोगामिस्वरूपं वक्तुकामस्तत्र प्रतिपक्षज्ञानेषु बोधं भवतीति तत्प्रतिपक्षभूतानुश्रोतोगामिस्वरूपमाह—

जेण कएणं जीवो निवडइ संसारसागरे घोरे ॥ तं चेव कुणइ कज्जं इह सो अणुसोयगामी उ" ॥ ८ ॥

व्याख्या—येन प्रवाहपतितेन अविचारितरमणीयेन कर्मणा कृतेन, मकारोलाक्षणिकः ॥ अनुष्ठितेन जीवः प्राणी निपतति, बुडति, संसारसागरे भवसमुद्रे, घोरे भीष्मे, तदेवं करोति विधत्ते, य इत्यध्याहार्यम् ॥ यत्तदोर्नित्याभिसंबन्धात् कार्यम् अनुष्ठानम्, इह प्रवचने, सोऽनुश्रोतोगाम्येव, संसाराभिनन्दी एव. तुशब्द एवकारार्थ इति ॥ ८ ॥ अथ प्रतिश्रोतोगामिलक्षणम् आह ॥

जो किर नेओ पडिसोयगामी सो ॥ ९ ॥

जेणाणुट्ठाणेणं खविय भवं जंति निव्वुइं जीवा ॥ तक्करणरुई जो किर नेओ पडिसोयगामी सो ॥ ९ ॥

व्याख्या—येन जिनोक्तत्वात् पुण्यानुबन्धिपुण्यहेतुना अनुष्ठानेन, द्रव्यस्तवरूपेण, भावस्तवरूपेण वा कृत्स्नेन, क्षपयित्वा निस्तीर्य, भवं भवोदधिम्, उदधिशब्दोऽनुक्तोऽपि अत्र ज्ञेयो, रूपकनिर्वाहाय ॥ यान्ति गच्छन्ति, निर्वृत्तिं निर्वाणं, जीवा भविक लोकाः, तस्य करणं विधानं ॥ तत्र रुचिरभिलाषो यस्य स तत्करणरुचिः, यः किलेति आप्तवादे, ज्ञेयो बोद्धव्यः ॥ प्रतिश्रोतोगामी स इत्यर्थः । उक्तं प्रासङ्गिकम् ॥ अधुना यस्मिन् गुणस्थानके वर्त्तमानानां जन्तूनां द्रव्यधर्मः संभवति, तत्प्रतिपादनपुरस्सरं द्रव्यधर्मस्य यथार्थ नामान्तरम् आह—

होइ इह दव्वधम्मो अविसुद्धो वीयनामेणं ॥ १० ॥

पढमगुणट्ठाणे जे जीवा चिट्ठंति तेसिं सो पढमो ॥ होइ इह दव्वधम्मो अविसुद्धो वीयनामेणं ॥ १० ॥

व्याख्या—गुणस्थानकानि चतुर्दश भवन्ति, तद्यथा—मिथ्यादृष्टिगुणस्थानं ॥ १ ॥ सासादनसम्यग्दृष्टिगुणस्थानम् ॥ २ ॥ सम्यग्मिथ्यादृष्टिगुणस्थानं ॥ ३ ॥ अविरतसम्यग्दृष्टिगुणस्थानं ॥ ४ ॥ देशविरतिगुणस्थानं ॥ ५ ॥ प्रमत्तसंयतगुणस्थानं ॥ ६ ॥ अप्रमत्तसंयतगुणस्थानम् ॥ ७ ॥ अपूर्वकरणगुणस्थानम् ॥ ८ ॥ अनिवृत्तिबादरसंपरायगुणस्थानं ॥ ९ ॥ सूक्ष्मसंपरायगुणस्थानम् ॥ १० ॥ उपशान्तकषायवीतरागछद्मस्थगुणस्थानं ॥ ११ ॥ क्षीणकषायवीतरागछद्मस्थगुणस्थानं ॥ १२ ॥ सयोगिकेवलिगुणस्थानम् ॥ १३ ॥ अयोगिकेवलिगुणस्थानम् ॥ १४ ॥ इति ॥ उक्तं च—मिच्छे सासणमीसे अविरयदेसे पमत्त अपमत्ते य ॥ नियट्टि अनियट्टिसुहुमउवसम खीण सजोगि अजोगिगुणा इति ॥ तत्र प्रथमम् आद्यं गुणानां ज्ञानादीनां स्थानम् आवासो गुण-

स्थान प्रथम च तद् गुणस्थान च प्रथमगुणस्थानम् ॥ मिथ्यादृष्टिनामकम्, अत्र च गुणस्थानत्व, केवलज्ञानानन्ततमभागसद् भावात् तस्मिन् य कचन जीवा दहिन तिष्ठन्ति, वर्त्तन्त तथा स उक्तस्वरूप प्रथम आदिमो भवति विधत ॥ इह अन योर्द्रव्यधर्मभावधर्मयोर्मध्य किं नाम इत्यत आह—'दव्वधम्मोत्ति ॥ द्रव्यधर्मसज्ञ, स च अविशुद्ध इति पदैकदेशेपदसमु दायोपचाराद् अविशुद्धधम इति, मिथ्यात्वकलुषितत्वाद्, द्वितीयनाम्ना द्वैतीयीकपर्यायेण प्रसिद्ध इति शेष इत्यर्थ ॥ १० ॥ उक्त द्रव्यधर्मसभवस्वरूप ॥ सांप्रत भावधर्मस्य त प्राह

अविरयगुणट्ठाणाईंसु जे य ठिया तेसि भावओ बीओ ॥ तेण जुया ते जीवा हुंति सबीया अओ सुद्धो ॥ ११

व्याख्या—अविरतगुणस्थानमिति पदैकदेश पदसमुदायोपचारात् अविरतसम्यग्दृष्टिगुणस्थान, तद् आदिर्येषा, देशविरतगु णस्थानादीनां तेऽविरतसम्यग्दृष्टिगुणस्थानादय तषु य पुनर्भव्या च पुनरर्थो, स्थिता आरूढा, तेषा भावतो वस्तुवृत्त्या द्विती यो भावधर्म इत्यर्थ भवतीति क्रियाऽध्याहार्या, तेन भावधर्मेण युता युक्तास्त अविरतगुणस्थानादिस्था जीवा', भवन्ति, जायन्ते, सबीजा इति, बीज कारण तच्च प्रस्तावाद् अत्र बोधिरेव सह बीजेन वर्त्तन्ते इति सबीजा, बोधिबीजवन्त, भेत्यापि ते जिनधर्म लप्स्यन्ते इत्यर्थ ॥ अतो मिथ्यात्वकालुष्यापगमलक्षणकारणात् शुद्धो निर्मल इत्यर्थ ॥ ११ ॥ द्रव्यधर्मभावधर्मयो स्वरूपसभ वाधुक्तौ, अधुना फल दर्शयति तत्रापि प्रथमम् आद्यस्याह

"पढमम्मि आउबन्धो दुक्करकिरियाउ होइ देवेसु ॥ तत्तो बहुदुक्खपरंपराओ नरतिरियजाईसु ॥ १२ ॥

व्याख्या—प्रथमे आद्ये द्रव्यधर्मइत्यर्थः, क्रियमाणे इति शेषः, आयुर्बन्ध आयुः कर्मण उपार्जना, 'दुष्करक्रिया इति' दुष्करा
दुरनुष्ठेयाः क्रिया द्रव्यस्तवभावस्तवसमाचारीपरिशीलनरूपा, अनुष्ठानविशेषाः, दुष्कराश्च ताः क्रियाश्च दुष्करक्रियाः, तत्र द्रव्य-
स्तवे जिनगृहजिनयात्रादयः क्रियाः, प्रभूतद्रव्यव्ययपूर्वकत्वाद् दुष्कराः, भावस्तवे यथोक्ताः, सामायिकादिविधयो योगनिग्रहा-
त्मकत्वाद् दुष्कराः, ताभ्यो भवति, संपद्यते, देवेषु, सुरेषु, ततो देवेभ्यश्च्युतस्य द्रव्यधर्मरतस्य जीवस्य भगवदाज्ञाविराधकत्वेन
बहवः प्रभूताः, दुःखपरम्पराः, कष्टश्रेणयः, बहुदुःखपरम्पराः, नराश्च तिर्यंचश्च नरतिर्यंचः, तेषु जातयो जन्मानि, नरतिर्यग्जा-
तयः, तासु नरजातौ तिर्यग्जातौ उपलक्षणत्वात् नैरयिकजातावपि इत्यर्थः ॥ पापानुबन्धिपुण्यनिबन्धत्वाद् द्रव्यधर्मस्य ॥ तथाहि
अप्रासुकानेषणीयान्नादिदानस्य, फलं, यद् भोगसामग्र्यां सकलायामपि सत्यां नवे एव वयसि केचिन् म्रियन्ते, यदुक्तं भगवत्यां ॥
कहं णं भंते, जीवा अप्पाउयत्ताए कम्मं पकरिंति, गोयमा, पाणे अइवाइत्ता मुसं वाइत्ता तहा रूवं समणं वा माहणं वा अफा-
सुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाहित्ता ॥ एवं खलु जीवा अप्पाउयत्ताए कम्मं पकरिंतित्ति ॥
तहारूवं इति प्रधानमित्यर्थः ॥ १२ ॥ उक्तं द्रव्यधर्मस्य फलम् अथ भावधर्मस्याह—

वीए विमाणवज्जो आउयवन्धो न विज्जए पायं ॥ सुखित्तकुले नरजम्म सिवगमो होइ अचिरेण ॥ १३ ॥

व्याख्या—द्वितीये भावधर्मे इत्यर्थः॥ अनुष्ठीयमाने इतिशेषः, विमानं वैमानिकदेवनिलयः तद् वर्जयति परिहरति विमानवर्जः,
आयुर्बन्धः न विद्यते न भवति, अयमाशयः भावधर्मप्रसक्तः कालादिवैगुण्याद् यदि तस्मिन्नेव भवे मोक्षं न गच्छति, तथापि वैमानि

कदेवेषु एवोत्पद्यते नान्यत्र, यदुक्तं "सम्मद्दिट्ठी जीवो विमाणवज्जं न बंधए आउं ॥ जइवि न सम्मत्तजढो अहवा बद्धाउओ पुव्विं ति" प्रायो बाहुल्येन मानधर्मलीनेनापि स्कन्दकाचार्येण भवनपत्यायुर्बद्ध, प्रसन्नचन्द्रराजर्षिणा तु नरकायुरास्कन्दित-मिति ॥ तादृशव्यभिचारो माभूदिति प्रायोग्रहणं, ततश्च्युतस्य च यद् भवति तदाह 'सुखित्तत्ति' क्षेत्रम् आर्यदेशादि, कुलं वंशः, शोभनार्थः, सुशब्दः प्रत्येकम् अभिसम्बध्यते, ततः सुक्षेत्रं सुकुलं चेत्यर्थः ॥ सुक्षेत्रं धार्मिकलोकसंकुलो देशः, सुकुलं सदाचारनिरतोऽन्वयः, एवंविधेऽपि अत्र कदाचिद् गवाश्वादिरूपतया संभवेदिति ॥ आह 'नरजन्म' मनुष्यभवः मानुषो जायते इत्यर्थः ॥ ततश्च किमित्यत, आह, शिव मोक्षः, तत्र गमो गमनं, शिवगमः, भवति, अचिरेण, शीघ्रम् ॥ इदमाकूतं सुक्षेत्रे सुकुले च जातो नरः पूर्वभवपरिशीलितभावधर्मवासितात्मा पुनरपि कुतोऽपि निमित्ताद् धर्मकर्मसु प्रवर्त्तते ॥ प्रवर्त्तमानश्च शुभ-शुभतरादिपरिणामानुसारेण कश्चित्तस्मिन्नेव भवे मोक्षे गच्छति ॥ कश्चिद् द्वितीये, कश्चित् तृतीये, यावत् सप्तमे अष्टमे नातिक्रा-मतीत्यर्थः ॥ यदुक्तं—पर्युषणाकल्पे, 'जो एयं संवच्छरियं थेरकप्पं जाव आणाए अणुपालित्ता अत्थेगइया तेणेव भवग्गहणेणं सिज्झंति, जाव सव्वदुक्खाणं अंतं करिंति ॥ अत्थे गइया दुच्चेणं भवग्गहणेणं अत्थेगइया तच्चेणं, जाव सत्तट्ठभवग्गहणाइं नाइ-क्कमंतीति ॥ सांवत्सरिकस्थविरकल्पशुभभावधर्म एवेति भावः ॥ १३ ॥ यथा प्रवृत्तानां धर्मो भवति, तथा सप्रपञ्चं प्रतिपादि-तम् ॥ संप्रति यथाप्रवृत्तानाम् अधर्मो भवति तदाह—

पाणिवहाई पावट्ठाणाणट्ठारसेव जं हुंति ॥ होइ अहम्मो तेसु य पवट्टमाणस्स जीवस्स ॥ १४ ॥

व्याख्या—प्राणिनां देहिनां, वधो विनाशः, प्राणिवधः, स आदिर्येषां तानि प्राणिवधादीनि, विभक्तिलोपो दीर्घत्वं च प्राकृ-
तत्वात् ॥ पापस्य स्थानानि पदानि पापस्थानानि, अष्टादशैव, अष्टादशसंख्यान्येव, नाधिकानि नापि न्यूनानि, यत् यस्मात् भवन्ति,
सन्ति तानि चामूनि, यथा—पाणाइवाय ।१। मलियं ।२। चोरिक्कं ॥ ३ ॥ मेहुणं ॥ ४ ॥ दविणमुच्छा ॥ ५ ॥ कोहं
॥ ६ ॥ माणं ॥ ७ ॥ माया ॥ ८ ॥ लोहं ॥ ९ ॥ रागं च ॥ १० ॥ दोसं च ॥ ११ ॥ कलहं ॥ १२ ॥ अब्भक्खाणं ॥ १३ ॥
पेसुन्नं । १४ । अरइरइसमाउत्तं । १५ । परपरिवायं । १६ । मायामोसं । १७ । मिच्छादंसणसल्लं १८ ॥ इति भवति जायते,
अधर्मः पातकं, तेषु पापस्थानेषु, पुनः चः पुनरर्थे प्रवर्त्तमानस्य आकुट्टिप्रमाददर्पैः, प्रसज्जतः जीवस्य प्राणिनः भगवत्प्रतिपि-
द्धार्थकारित्वादिति भावः ॥ १४ ॥

उक्तः कारणद्वारेणाधर्मस्य संभवः

संप्रतिपापस्थानपरिजिहीर्षोत्पादनार्थम् अस्यैव फलमाह

“तत्तो तिरिअनरयगई अट्टं रुद्दं च दुन्निज्झाणाइं ॥ सग्गापवग्गसुहसंगमो कहं तस्स सुमिणे पि ॥ १५ ॥

व्याख्या—ततः पापस्थानप्रसक्त्युपार्जिताधर्मतः, तिर्यञ्चश्च नरकाश्च, तिर्यङ्नरकास्तेषु गतिर्गमनं तिर्यग्गतिर्नरकगतिर्वा तथावि-
धाऽरत्यतिशयात् आर्त्तं रौद्रं च द्वे ध्याने च, चः समुच्चयार्थोऽनुक्तोऽपि अत्र द्रष्टव्यः, भवतीति क्रियाऽध्याहार्या, तथा च तत उद्भू-
तोऽपि आर्त्तरौद्रध्यानाक्रान्ततया पुनः पुररधर्मकर्माण्येव समाचरतीति, कथमसौ स्वर्गस्याऽपि सुखमनुभवेद्, दूरे मोक्षस्येति, अत

एव आह 'सग्गेत्ति' स्वर्गो देवलोकः, अपवर्गो मोक्षस्तयोः सुखानि आनन्दविशेषाः, स्वर्गापवर्गसुखानि तेषां संगमः संबन्धः, स्वर्गापवर्गसुखसंगमः, कथं न कथंचिद् इत्यर्थः ॥ तस्य पापस्थानप्रवृत्तिसंचितपाप्मनः, स्वप्नेऽपि, ज्ञानविशेषेऽपि॥ यदुक्तं "निवृत्तेन्द्रियसंघस्य लीनचित्तस्य मृद्गिनः ॥ अक्षद्वारमिव ज्ञानं यत्तत् स्वप्नमिति स्मृतम्" स्वप्नं हि असंभाव्यवस्तुविषयमपि भवति, अदृष्टवशात्, यदुक्तम्—अणुभूयदिट्ठचिंतियसुयपगइविगारदेवयाणूया ॥ सुमिणस्स निमित्ताइं पुण्णं पावं च ना भावोत्ति" पापध्यानरतस्य तु तादृगदृष्टलेशस्यापि अभावात् कथं स्वर्गादिविषयं स्वप्नं स्यात् इति भावः ॥ १५ ॥ धर्माधर्मपरिज्ञानस्य सुगुरुदर्शनमेव उपाय इति, यदुक्तं—तदुपसंहरन् संप्रति येषां सुगुरुदर्शनं भवति तानाह—

"तम्हा कयसुकयाणं सुगुरूणं दंसणं फुडं होइ॥ कत्तो निप्पुण्णाणं गिहम्मि कप्पद्दुमुप्पत्ती ॥ १६ ॥

व्याख्या-यस्माद् गीतार्थानां गुरूणां दर्शनं विना धर्माधर्मयोः स्वरूपमपि नोपलक्ष्यते, दूरे तत्र प्रवृत्तिनिवृत्ती, तस्मात् कृतम् अनुष्ठितं सुकृतं धर्मो यैस्ते, तथा, तेषाम् एव इत्यध्याहार्यं, सुगुरूणां शोभनधर्माचार्याणां, दर्शनं मेलापकः, स्फुटं, व्यक्तं, साक्षादिति यावत्, भवति एतमेव अर्थं समर्थयितुं व्यतिरेकदृष्टान्तमाह 'कत्तोत्ति' कुतो निपुण्यानां निर्भाग्यानां गृहे, वेश्मनि कल्पद्रुमोत्पत्तिः न कुतोपीत्यर्थः ॥ अत एवोक्तम्="कहिं मायंगगेहे एरावणो हत्थी, कहिं दारिद्दगेहे रयणाण वुट्ठी, कहिं तिमिस्सगुहाए रयणप्पईवो, कहिं मरुत्थलीए कप्पपायवो, कहिं अम्हारिसा, कहिं एयारिसाणं सुगुरूणं संजोगोत्ति ॥ इत्यर्थः ॥ ननु सुगुरुदर्शनं यदमीषां कथमपि न भवति, तत्किम् अमी अभव्या एव, इत्याशङ्क्य ॥ आह—

भव्वा वि केइ नियकम्मपयडिपडिकूलयाइ संभूया ॥ जत्थ सुसाहुविहारो संभवइ न सिद्धिसुक्खकरो ॥१७॥

व्याख्या—भव्या अपि न केवलम् अभव्याः, केचित् न पुनः सर्वेऽपि, निजकर्मप्रकृतिप्रतिकूलतया, स्वकीयक्रूरकर्मप्रातिलोम्येन तत्र इत्यध्याहार्यं, यत्तदोर्नित्याभिसंबन्धात् तत्र प्रान्तप्राये देशे, संभूता उत्पन्नाः, यत्र सुसाधुविहारः सुविहितागमनं, न संभवति, असंयमक्षेत्रादिकारणात् न घटते, सिद्धिसौख्यकरः मोक्षसुखहेतुः साधवो हि संयमक्षेत्रे एव विहरन्ति, तत्र निशीथचतुर्थोद्दे-शके एवंविधं भणितं, यथा,—उन्नियवासा कप्पो लाओ पायं च लब्भइ जत्थ, सज्झाएसणसोही वरिसइ काले य तं खित्तं ॥ जत्थ खित्ते उन्निया वासाकप्पा लब्भंति ॥ जत्थ य लाउ य पाया चाउक्कालओ य सुज्झए सज्झाओ ॥ जत्थ य भत्ताइयं सव्वं एसणासुद्धं लब्भइ विविहं धम्मसाहणोवगरणं जत्थ लहइ कालवरिसीनामराओ वासइ "न दिवा अहवा भिक्खावेलं सन्ना-भूमिगमणवेलं, मुत्तुं वासइ" "अहवा वासासु वासइ नोओदुवद्धे एस कालवरिसी एयं संजमखित्तं" भव्याः पुनः ॥ न य वसइ साहुजणविरहियम्मि देसे बहुगुणो वि" इत्यादि श्रावकसमाचारीं जानानाः कथम् अन्यत्र वस्तुं वाञ्छन्ति" परं प्रतिलोमकर्मणां वलात् वास्यन्ते, यदुक्तं—कम्माइं नूणघणचिक्कणाइं अइनिविडवज्जसाराइं ॥ नाणड्ढियं पि पुरिसं पंथाओ उप्पहं निंतीति भावः ॥ १७ ॥ अथ प्रतिकूलकर्मणां वलिष्ठत्वाद् अवष्टम्भे सुगुरुसंगमेऽसति, भव्यानां यद् भवति तदाह—

"पयईएऽवि हु तेसिं सद्धम्मपसाहणुज्जयमणाणं। सुगुरूणं अदंसणओ संदेहसयाणि जायंति" ॥ १८ ॥

व्याख्या—प्रकृत्यैव चोक्तमूलद्रव्यत्वाद् धर्माभिलाषिस्वभावेनैव, अपि रेवार्थः दुर्निश्चयार्थः क्रियया योऽस्यते, तेषां सुसाधुवि-

रहितदेशवासिभव्यानां सद्धर्मप्रसाधनोद्यतमनसां सम्यग्धर्मानुष्ठानकरणप्रसक्तचित्तानां सतां, किमित्यत आह सुगुरूणां अदर्शनात् संदेहशतानि जायन्ते, किं साधव एकेन क्षमाश्रमणेन वन्द्यन्ते, द्वाभ्यां वा ॥ १ ॥ श्राविका अपि ऊर्ध्वस्थिता एव साधून् वन्दन्ते, पञ्चाङ्गप्रणिपातेन वा ॥ २ ॥ प्रथमे क्षमाश्रमणे सुखरात्रिकादि पृच्छ्यते द्वितीये वा ॥ ३ ॥ नमस्कारान्त्यपदे पढमं हवइ मंगलमिति, पठ्यते होइ मगलमिति वा ॥ ४ ॥ गुर्वभावे स्थापनाचार्यस्य अग्रे षड्विधम् आवश्यकं क्रियते, यत्र तत्र वा ॥५॥ अहोरात्रमध्ये द्वयोरेव संध्ययोः सामायिकं गृह्यते बहुशो वा ॥ ६ ॥ पोषधमपि पर्वण्येव गृह्यते सर्वदा वा ॥ ७ ॥ पोषधं च चतुर्विधाहारप्रत्याख्यानेनैव भवति अन्यथापि वा ॥ ८ ॥ मुखवस्त्रिकया वन्दनकं दीयते अञ्चलेन वा ॥ ९ ॥ वन्दनकक्षणे श्राविका ऊर्ध्वस्था एव आवर्त्तान् कुर्वन्ति उपविश्य श्रावकवद्वा ॥ १० ॥ वन्दनकं च श्राद्धैर्मुखानन्तकोपरि दीयते औपग्रहिकरजोहरणोपरि वा ॥ ११ ॥ मुखवस्त्रिकाया अपि संकलिताया उपरि विस्तारिताया वा ॥ १२ ॥ द्वितीयवन्दनावर्त्तकरणानन्तरम् उत्थीयते न वा ॥ १३ ॥ आलोचनक्षामणकप्रत्याख्यानक्रमेण प्रभातवत्सन्ध्यायामपि वन्दनकं दीयतेऽन्यथा वा ॥ १४ ॥ श्रावकैराचार्यादिपदस्थानामेव आद्यं वन्दनकं दीयते सर्वसाधूनां वा ॥ १५ ॥ गृहस्थैरीर्यापथिकीप्रतिक्रमणरूपमेव प्रतिक्रमणं क्रियते, यतिवत्, संपूर्णदैवसिकादिरूपमपि वा ॥ १६ ॥ द्व्याशनकसार्द्धपौरुषीअपार्धपौरुषीप्रत्याख्यानानि क्रियन्ते न वा ॥१७॥ पानकागारान् श्राद्ध उच्चरति न वा ॥१८॥ चतुर्दश्यां पाक्षिकप्रतिक्रमणं पञ्चदश्यां वा ॥१९॥ औदयिक्यामेव चतुर्दश्यादितिथौ प्रत्याख्यानचैत्यपूजादिकं क्रियते, अनन्तरतिथौ वा ॥ २० ॥ यतिप्रतिष्ठिताः प्रतिमा वन्द्यन्ते श्रावकप्रतिष्ठिता वा ॥ २१ ॥

यतिपरिगृहीताः प्रतिमा वन्द्यन्ते न वा ॥ २२ ॥ चैत्ये प्रदक्षिणात्रयं दीयते न वा ॥ २३ ॥ बिम्बस्याग्रे कुसुमाञ्जलिः प्रक्षिप्यते न वा ॥ २४ ॥ धूप उद्ग्राह्यते न वा ॥ २५ ॥ बलिर्दीयते न वा ॥ २६ ॥ श्राद्धैः शक्रस्तवेनैव चैत्यवन्दनं क्रियते, अर्हच्चैत्यादिदण्डकैरपि वा ॥ २७ ॥ चैत्यवन्दनकायोत्सर्गान्ते श्लोकादिरूपाः स्तुतयो दीयन्ते न वा ॥ २८ ॥ चैत्ये-बिम्बस्याग्रे ईर्यापथिकी प्रतिक्रम्यते, स्थापनाचार्यस्य अग्रे वा ॥ २९ ॥ चैत्यवन्दनान्तराले पुष्पादिसंघट्टे पुनरैर्यापथिकी प्रतिक्रम्यते न वा ॥ ३० ॥ गृहीतार्हत्पूजोपकरणैर्गृहस्थैः साधवो वन्द्यन्ते न वा ॥ ३१ ॥ जिनबिम्बस्य पश्चाऽमृतस्नानं क्रियते न वा ॥ ३२ ॥ चतुर्विंशतिपट्टादौ सर्वबिम्बस्नात्रं क्रियते न वा ॥ ३३ ॥ अम्बिकादयः पूज्यन्ते न वा ॥ ३४ ॥ इत्यादयः संशयाः शतसंख्या निश्चयेनोत्पद्यन्ते, तत्कारणस्य परस्परविरुद्धप्रवादद्वयस्य श्रूयमाणत्वात्, उभयथा प्रवृत्तेश्च दृश्यमानत्वादिति भावः ॥ १८ ॥ ततश्च किं कार्यमित्यत आह—

ते संदेहा सव्वे, गुरुणो विहरंति जत्थ गीयत्था । गंतुं पुच्छव्वा तत्थ इहरहा होइ मिच्छत्तं ॥ १९ ॥

व्याख्या—ते परस्परविरुद्धसमाचारीदर्शनश्रवणसमुत्थाः संदेहाः, सर्वे समस्ताः, गुरवः तत्त्वोपदेशकाः, विहरन्ति—विचरन्ति, यत्र देशे, गीतार्था आगमरहस्यवेदिनः, तत्र गत्वा पृष्टव्याः "प्रच्छनीयाः" यथा भगवन् ? परमगुरो ? एतेषु सन्देहपदेषु किं तत्त्वमिति "प्रसद्य प्रतिपाद्यतामिति" ननु—यदि न पृच्छ्यन्ते, तदा को दोषः ? इत्यत आह—'इहरहा होइ मिच्छत्तं, इतरथा यदि न पृच्छ्यन्ते, तदा भवति मिथ्यात्वं विपरीतावबोधः, ते हि संशया अभग्नप्रसरत्वाद् उपचीयमानमिथ्या-

रस्वरूपतया परिणमन्ते इत्यर्थः ॥ १९ ॥ ननु—मिथ्यात्वं पञ्चविधं भवति, यथा—आभिग्रहिकम् ॥ १ ॥ अनाभिग्रहिकम् ॥ २ ॥ आभिनिवेशिकं ॥ ३ ॥ सांशयिकम् ॥ ४ ॥ अनाभोगिकं च ॥ ५ ॥ यदुक्तम्—

"आभिग्गहियं अणाभिग्गहियं च तह अभिनिवेसियं चेव ॥ संसइयमणाभोगं मिच्छत्तं पंचहा होइ"

इति तत्र अभिग्रहेण इदमेव दर्शनं शोभनं न अन्यद् इत्येवं रूपेण कुदर्शनविषयेण निर्वृत्तमाभिग्रहिकम् ॥ यद् वशाद् बोटिकादिकुदर्शनानाम् अन्यतमदर्शनं गृह्णाति ॥१॥ एतद् विपरीतमनाभिग्रहिकं, यद् वशाद् सर्वाण्यपि दर्शनानि शोभनानि इत्येवम्, ईषद् माध्यस्थ्यम् उपजायते ॥ २ ॥ आभिनिवेशिकं यदभिनिवेशेन निर्वृत्तम्, यथा गोष्ठामाहिलादीनाम् ॥ ३ ॥ सांशयिकं यद् वशाद् भगवदर्हदुपदिष्टेषु अपि जीवादितत्त्वेषु संशय उपजायते, यथा न जाने किमिदं भगवद् उक्तम् धर्मास्तिकायादि सत्यम् उत अन्यथेति, ॥ ४ ॥ अनाभोगिकं, यद् अनाभोगेन निर्वृत्तं, तच्च एकेन्द्रियाणामिति ॥ ५ ॥ तदत्र किं नामकं कतिथं च मिथ्यात्वं भवति ? इत्यत आह—

'संसइयमिह चउत्थंति'

सांशयिकं, सांशयिकनामकम् इह एषु, मिथ्यात्वभेदेषु चतुर्थं तुर्यं ॥ ननु—यदि पृच्छयन्ते तदा को गुणः? इत्यत आह—

निस्संदेहाण होइ सम्मत्तं ॥ जुगपवरागमगुरुलिहियवयणदंसणसुहंतो त्ति ॥ २० ॥

व्याख्या—निस्संदेहानाम् अपगतसंशयानां, भवति सम्यक्त्वं तत्त्वश्रद्धानं, युगं वर्त्तमानकालः, तत्र प्रवरः शेषजनापेक्षया

उत्कृष्टो, बहुत्वाद्, आगमो येषां, ते युगप्रवरागमाः, ते च ते गुरवश्च युगप्रवरागमगुरवः, तै-र्लिखितानि ग्रन्थेषु निबद्धानि,
तानि च तानि वचनानि च प्रत्युत संदेहापहारकवाक्यानि च, युगप्रवरागमगुरुलिखितवचनानि तेषां दर्शनं स्वदृष्ट्या निरू-
पणं, श्रुतिश्च कर्णाभ्याम् आकर्णनं, ताभ्याम् ॥ अयम् अभिप्रायः गुरवो हि प्रच्छानन्तरम् अतिप्रसन्नमनसो भणन्ति, यथा—
आयुष्मन् ? साधवो द्वाभ्यामेव क्षमाश्रमणाभ्यां वन्द्यन्ते ॥ यदुक्तम्–आवश्यकनिर्युक्तौ–"जह दूओ रायाणं नमिउं कज्जं निवेइउं
पच्छा । वीसज्जिओ वि वंदिय गच्छइ एमेव साहू वि त्ति" एवं च भद्रबाहुस्वामिवाक्ये दृष्टे श्रुते वा संदेहो विलीयते ॥ यथा
भद्र श्राविकया श्राद्धवत् पञ्चाङ्गप्रणिपातेन छोभानन्दनेन साधवो वन्द्याः" अन्यस्य तद्विधेरश्रवणात् ॥ किं च उत्तराध्ययनेषु चित्र-
संभूतीयाध्ययने ब्रह्मदत्तचक्रवर्त्तिकथानके सनत्कुमारचक्रिस्त्रीरत्नेन पञ्चाङ्गप्रणिपातेनैव संभूतमुनिर्ववन्दे, इति ज्ञायते तथा
हि–"सणं कुमारो वि तेसिं चित्तसंभूयाणं वंदणत्थं संतेउरो गओ, तमुज्जाणे, वंदिया, ते भत्तिबहुमाणपुव्वं, अंतेउरसहिएणं ॥
तओ इत्थीरयणसुणंदाए पाएसु पडंतीए साइसयं अलयफासमणुहवंतेणं, काउमारद्धं नियाणं संभूयेण त्ति ॥ अलका हि
चूर्णकुन्तलाः ते च भालान्ते भवन्ति ॥ तेषां च स्पर्शः तदैव भवति ॥ यदि वन्द्यपादप्रत्यासन्नं वन्दकशिरो भवति, तच्च तथा
पञ्चाङ्गप्रणिपातेन वन्दमानाया एव घटते, न तु ऊर्ध्वस्थिताया इति ॥ तथा महानिशीथेऽपि एवमेव, यथा—
"तओ भणियं सुज्जसिरीए जहा मज्झं सामिणी एएसिं मुणीणं महया भक्खरागाणएणं पच्चभरणं ।
करिय, तओ हट्ठतुट्ठमाणसा उत्तमंगेण चलणग्गे पणमयंती, ता मए अज्ज एएसिं दंसणेणं सासंभरियत्ति"

तथाऽन्यत्रापि आगमे भणितं यथा—समणं भगवं महावीरं तिक्खुत्तो आयाहिणं, पयाहिणं करेंति वंदंति नमंसंति स्तुवंति प्रणमन्तीत्यर्थः ॥ कोणियं रायं पुरओ कट्टु उद्धट्ठियाओ चेव ॥ कोऽर्थः ॥ ऊर्ध्वकायेन ॥ सपरिवाराओ अभिमुहाओ विणएणं पंजलिं उडाओ पज्जुवासंति त्ति ॥ अत्र ऊर्ध्वस्थानां स्त्रीणां पर्युपास्तिमात्रमेव भणितं, यदि चैता ऊर्ध्वस्था एव अवन्दिष्यन्त तदा पर्युपासनवत् वन्दननमस्करणे अपि उद्धट्ठियाओ चेव इत्यादि पदपद्धतेः पुरस्तादेव न्यवेशयिष्येतां, न चैवं तस्माद् ऊर्ध्वस्थस्त्रीवन्दनम् अयुक्तमेव प्रतिभाति, विधिवादाभावे चरितानुवादस्यैव प्रामाणिकत्वात् ॥ किं च आचार्यपरम्परागतस्य स्त्रीणां पश्चात्प्रणिपातेन साधुवन्दनस्य निषेधनं मिथ्यात्वहेतुः ॥ यदुक्तम्—आयरियपरंपरएणं आगयं जो उच्छेयबुद्धीए को वय इछेयवाई जमालिनारसं स नासिहि इति ॥ तथा आयुष्मन् ? प्रथमक्षमाश्रमणदानानन्तरं सुखरात्रिकादि प्रष्टव्यम् ॥ यतः साधूनां वन्दनम् उत्कृष्टमध्यमजघन्यभेदात् त्रिधा भवति ॥ तत्राद्यं द्वादशावर्त्तरूपं, द्वितीयं छोभावन्दनं, तृतीयम् आलोके स्मृतौ वा शिरो नमनमात्रं, शिरसि हस्तयोजनमात्रं वा ॥ तत्र द्वादशावर्त्ते प्रथमवेलायाम् अल्पक्लान्तानां बहुशुभेन भवतां रात्रिर्व्यतिक्रान्ता इत्यादि प्रष्टव्यम् ॥ अतश्छोभावन्दनकेऽपि प्रथमवेलायामेव सुखरात्रिकादि प्रष्टव्यम्, समानयोगक्षेमत्वात् ॥ लोकेऽपि च नीतिनिपुणाः पूज्यपादानां मिलिताः सन्तः प्रथमं प्रणमन्ति, पश्चाद् भद्राः स्था इत्यादि सुखवार्त्ता पृच्छन्ति ॥ गन्तुकामास्तु निरोधो भवतीति प्रणामः, पुनः प्रणम्य व्रजन्तीत्येवम् अत्रापि ज्ञेयं ॥ यदुक्तम्—"आवश्यके "जह-दूओ रायाणं, इत्यादि तथा जघन्यभेदेऽपि मार्गे गच्छताम् सुगुरूणां मिलितः शिरो नमयति, क यूयं व्रजथ इति च पृच्छति, लब्धोत्तरः

इति लोकलोकोत्तरास्थितिश्रवणे संशयो नश्यतीति ॥ तथा
सन् पादोऽवधार्यताम् इति ब्रुवाणः पुनः शिरो नमयित्वा व्रजति, इति च पाठे श्लोको न अधिकाऽक्षरो
सौम्य ? यद्यपि, हवइ, होइ, इत्येतयोः पाठयोरर्थं प्रति न कश्चिद् विशेषः 'होइ मंगलं' इति च पाठे श्लोको न अधिकाऽक्षरो
भवति, तथापि 'हवइ मंगलं,' इत्येवं पठनीयं, महानिशीथाद्यनेकागमेषु अस्यैव पाठस्य प्रतिपादितत्वात् ॥ नमस्कारपटलनम-
स्कारपञ्जिकादिग्रन्थेषु चेत्थमेव श्रेयोहेतुत्वेन समर्थितत्वात् ॥ बहुश्रुतैरादृतत्वात् ॥ तथा च प्रयोगः होइ मंगलमिति पाठो
मिथ्या, विसंवादवत्त्वाद्, यथा शुक्तिकाशकले रजतज्ञानं ननु—आवश्यके नमस्कारनिर्युक्तौ 'पढमं होइ मंगलमिति' पाठेन संवा-
दसद् भावाद् विसंवादवत्त्वात् इति असिद्धं, ? चेत् सत्यं, किन्तु अयं, नमस्कारनिर्युक्तिपाठो न नमस्कारपाठनियामको व्यभिचा-
रात्, तथाहि तत्रैव 'बीयं हवइ मंगलं' इत्युक्तम् ? ॥ ननु 'पढमं हवइ मंगलं,' इति पाठो न युक्तः छन्दोभङ्गहेतुत्वात् छन्दो
ह्यत्र श्लोकः, स च अष्टाक्षरप्रमाणपाद एव भवति नान्यथा, अयं च नवाऽक्षरपादः ? इति चेद् सत्यं ॥ किन्तु आर्षे श्लोकेषु
बहुशो नवाक्षरस्यापि पादस्य दर्शनात्, तथाहि दशवैकालिके 'भमरो आवियइ रसं' तथा 'न य कोइ उवहम्मइ' तथा 'छत्तस्स
य धारणट्ठाए' इत्यादि ॥ अयमपि चूलिकारूप आर्ष एव गणधरप्रणीतत्वादिति, न कश्चिद् विरोधः ॥ किंच 'इअ अट्ठसट्ठि अ-
क्खरपरिमाणो होइ नवकारो' इत्यादि पूर्वश्रुतधरवचनानुयायित्वात् हवइ मंगलं इत्ययमेव पाठः, सताम् उपादेय इति
॥ अन्येषां च केषांचित् सन्देहानामुत्तराणि यथाऽवसरं लिखिष्यन्ते, केषांचित्तु स्थानान्तरतो बोद्धव्यानि ॥ इत्थं युग-
प्रधानागमश्रीभद्रबाहुस्वामिप्रमुखवाक्यानां दर्शनेन श्रवणेन च क्षीणेषु संदेहेषु क्षणादेव तत्त्वप्रतिपत्तिरूपं सम्यक्त्वम् उल्ल-
स्थितम् ॥

गति ॥ तच अतीवदुर्लभं महोपकारी च यदुक्तम् ॥ १ ॥ मिच्छत्तमहामोहंधकारमूढाणं इत्थ जीवाणं ॥ पुन्नेहिं कहवि जायइ दुल्लहो सम्मत्तपरिणामो ॥ १ ॥ अंतो मुहुत्तमित्तं पि फासियं जेहिं हुज संमत्तं ॥ तेसिं अवड्ढपुग्गलपरियट्टो होइ संसारो ॥ २ ॥ सुलहो विमाणवासो एगच्छत्ता य मेयणी सुलहा ॥ एकं पुण जिणभणियं सम्मत्तं दुल्लहं लोए ॥ ३ ॥ सम्मत्तम्मि उ लद्धे ठइयाइं नरयतिरियदाराइं दिव्वाणि माणुसाणि य मुक्खसुहाइं सहीणाइंत्ति" एवं च महान् गुण इत्यर्थः ॥ आह—यद्येवम् अशुभविपाकः संशयस्तर्हि येन यथाशिक्षितम् अनुष्ठानं स तथा करोतु तत्त्वबुद्ध्या, किं परकीयक्रियाकलापचर्चया तस्याः संशयहेतुत्वात्, संशयस्य च मिथ्यात्वजनकत्वेन परिणतिविरसत्वात् ॥ यदि वा भवतु कथञ्चिद् असौ परिणामरमणीयः, तथापि जिनगृहकारापणादिविषय एव एष युक्तो न षडावश्यकादिविषयः, जिनगृहकारापणादिद्रव्यस्तवस्य षड्जीवनिकायविराधनात्मकत्वेन सूत्रसूत्रितविध्याराधनाम् अन्तरेण संसारं प्रत्यपि हेतुत्वात्, षडावश्यकं तु सावद्यव्यापारपरिहारात्मकत्वेन संयमक्रिया एवेति ॥ विशिष्टनिर्जराकारणम् एव तत् ॥ यदुक्तम्—"सामाइएणं भंते जीवे किं जणइ, गोयमा ? सामाइएणं सावज्जजोगविरइं जणइ ॥ चउवीसत्थएणं भंते जीवे किं जणइ, गोयमा ? चउवीसत्थएणं दंसणविसोहिं जणइ ॥२॥ वंदणएणं भंते जीवे किं जणइ, गोयमा ? वंदणएणं नियागोयं कम्मं खवेइ ॥ उच्चागोयं कम्मं निबद्धइ ॥ सोहग्गं च णं अप्पडिहयं आणाफलं निव्वत्तेइ दाहिणभावं च जणइ, पडिकमणेणं भंते जीवे किं जणइ, गोयमा ? पडिकमणेणं वयछिद्दाइं पिहेइ, पिहियवयछिद्दे पुण जीवे निरुद्धासवे असबलचरित्ते अट्ठसु पवयणमायासु उवउत्ते अप्पमत्ते सुप्पणिहिए विहरइ ॥ ४ ॥ काउ-

सग्गेणं भंते जीवे किं जणइ, गोयमा ? काउसग्गेणं तीयपडुपन्नं पायच्छित्तं विसोधति, विसुद्ध पायच्छित्ते जीवे निव्वुयहियए ओ-
हरियभरुव्व भारवहे पसत्थज्झाणोवगए सुहं सुहेणं विहरइ ॥ ५ ॥ पच्चक्खाणेणं भंते जीवे किंजणइ गोयमा, पच्चक्खाणेणं
आसवनिरोहं जणइ ॥ पच्चक्खाणेणं इच्छानिरोहं जणइ, इच्छानिरोहं गए जीवे सव्वदव्वेसु विणीयतण्हे सीयलभूए विहरइ,
पच्चक्खाणेण आसवदाराइं निरुंभइ त्ति" किं च मोक्षो ज्ञानक्रियाभ्यामेव भवति, नान्यतः ॥ आवश्यकं तु सदनुष्ठानत्वेन
ज्ञानक्रियामयमेव, यदुक्तम्—विशेषावश्यके—'नाणकिरियाहिं मुक्खो तम्मयमावस्सयं ? इत्यादि ॥ इति मोक्षहेतुतया
प्रसिद्धे आवश्यके संशयः कर्तुम् अनुचितमेव, सम्यग्दृष्टीनां सम्यक्त्वातिचारत्वाद्, इत्याशंक्य संशयकारकान् उपश्लोकयन्नाह—
"तो ते भव्वा जेसिं होइ सडावस्सए वि इयबुद्धी । कह सिद्धंते वुत्तं भवसिवदुहसुहकरं गयं ॥ २१ ॥
व्याख्या—अयम् आशयः धर्मचर्चा धर्मविचार एव, तस्यां च क्रियमाणायां यदि कस्यापि संशय उत्पद्यते ॥ उत्पद्यतां नाम,
तस्य तत्त्वजिज्ञासोत्पादनद्वारेण परीक्षाङ्गत्वात्, अकृतायां च परीक्षायां कदाचित् कश्चिद् अनुष्ठानमपि अनुष्ठीयेत, तच्च तत्त्वबुद्ध्यापि
अनुष्ठीयमानं केवलम् अनर्थायैव जायते, न हि विषम् अमृतबुद्ध्या भक्षितमपि अनर्थाय न जायते, ततो विचित्रम् अत्राभिप्रायः
चर्चाजनितसंशयातिरेकात् तत्त्वनिर्णयार्थपरीक्षायां प्रवर्तन्ते धर्मार्थिनः ॥ परीक्षमाणाश्च सुगुरून् अनुसृत्य यदागमिकत्वेन
सम्यग् अवबुध्यन्ते, तच्च तत्त्वमिति प्रतिपद्यन्ते, ततश्च तत्त्वप्रतिपत्तिहेतुतया संशयः सम्यक्त्वाङ्गम्, इति परिपाकसुन्दर एव असौ ॥
तथा आवश्यकमपि द्विधा भवति, द्रव्यावश्यकं भावावश्यकं च तत्राद्यं भावशून्यं विधिविकलम् अनवस्थितिरूपं लोकरञ्जनादिनिमि-

त्तकं ॥ द्वितीयं तु एतद् विपरीतं यदुक्तम्–अनुयोगद्वारे "आवस्सयं दुविहं दव्वओ भावओ य तत्थ दव्वओ जं संजुत्ताजुत्तीए अणुवउत्तो करेइ, एय दव्वावस्सयं, भावावस्सयं पुण जं समणो वा समणी वा सावगो वा साविगा वा तच्चित्ते तम्मणे तल्लेसे तदज्झवसिए तत्तिव्वज्झवसाणे तदट्ठोवउत्तए तदप्पियकरणे तब्भावणभाविए एगग्गमणे जिणवयणधम्माणुरागरत्ते उभओ कालं आवस्सयं करिंति, तं भावावस्सयं ति ॥ द्रव्यावश्यकं भवहेतुः, द्रव्यधर्मत्वेन पापानुबन्धिपुण्यहेतुत्वात्, भावावश्यकं तु मोक्षहेतुः, भावधर्मत्वेन विशिष्टनिर्जराकारणत्वात् ॥ ततोऽत्रापि अनेकरूपता सद्भावात् संशयोऽत्यन्तम् उचितमेव, यस्मात् ॥ 'ते' तस्मात्, ते धार्मिकाः भव्याः विवेकप्रियत्वात् कल्याणपात्रं भविष्यन्ति ॥ येषां भवति–उत्पद्यते, षडावश्यकेऽपि सामायिकचतुर्विंशतिस्तववन्दनप्रतिक्रमणकायोत्सर्गप्रत्याख्यानरूपभावस्तवेऽपि, न केवलं जिनगृहकारापणादिद्रव्यस्तवे इत्यपेरर्थः ॥ इति वक्ष्यमाणस्वरूपा बुद्धिः सांशयिकी मतिः, सैव प्रकाश्यते, कथं केन प्रकारेण, कया युक्त्या, सिद्धान्ते आगमे, उक्तं—मणितम्, उक्तस्थाने 'विपण्णोक्तवर्त्मनो 'बुभ्रुत्त बुद्ध' इत्यनेन बुतादेशः, भवः संसारः शिवं परमपदं, तयोर्यथाक्रमं दुःखःसुखे ते करोति इत्येवं शीलं भवशिवदुःखसुखकरं ॥ भवदुःखकरं शिवसुखकरम् इत्यर्थः ॥ एतद् षडावश्यकम् इदं हि मूलाऽनुष्ठानं ततो यथा क्रियमाणम् इदं मोक्षहेतुर्भवति ॥ तथा यदि सम्यग् ज्ञायते, तदा तथैव क्रियते नान्यथा, संसारदुःखस्य अनभिलपणीयत्वात्, प्रवृत्तिमार्गेणाऽपि साध्यत्वाच्च इत्यभिप्रायः, तेषामिति भावः ॥ आवश्यकं भावस्तवस्य उपलक्षणं ततो भावस्तवविषया वक्ष्यमाणाः संशयाः सर्वेऽपि उचिता एवेति व्यवस्थापितम् इत्यर्थः ॥ २१ ॥

अथ श्रावकान्तरपरिगृहीतपरिग्रहपरिमाणम् उपलभ्य कश्चिद् असंभाव्यसाधुदर्शनदेशवासितया तदेव प्रतिपत्तुम् इच्छति,
ततस्तस्य तद् गृहीतुं कल्पते न वा इत्याकारं संदेहम् आह—

एसो किर संदेहो, जायइ केसिं पि इत्थ भव्वाणं ॥ परिग्गहपरिमाणं सावगेण एगेण जं गहियं ॥ २२ ॥
तं अन्नो वि हु भव्वो घित्तूणं पालए पयत्तेणं ॥ जइ ता जुत्तं किमजुत्तमित्थ तत्थुत्तरं एयं ॥ २३ ॥

व्याख्या—एष वक्ष्यमाणः, किलेति सत्ये, संदेहः जायते उत्पद्यते, केषामपि, गुरुविरहितदेशवासिनां, नतु अन्येषाम् ॥
अत्र प्रवचने, भव्यानां विमर्षकत्वाद् विवेकिनां, तमेव दर्शयति—परिग्रहो धनधान्यादिना नव विधः ॥ तस्य परिमाणं, नियति-
करणं, परिग्रहपरिमाणम्, उपलक्षणत्वाद् द्वादशव्रताभिग्रहणं, श्रावकेण, एकेन केनापि, यद् अनिर्दिष्टनामकं गृहीतं, गुरुपार्श्वे
श्रावकधर्मारोपणविधिना प्रतिपन्नं, तद् अन्योऽपि अपरोऽपि, हुः पूरणे, भव्यो धर्मार्थी, गृहीत्वा, स्वसाक्षीकम् अङ्गीकृत्य, पाल-
यति, रक्षति, प्रयत्नेन आदरेण, यदीति अपवादलक्षणं, पक्षान्तरम्, आह—गुरुसाक्षिकगृहीतपरिग्रहपरिमाणपालनपक्षः तावत्
औत्सर्गिक एव ॥ यदि तद् उक्तयुक्त्या पालयति, तदा युक्तं विहितं, किम् अयुक्तम् अविहितम्, अत्र जिनधर्मे ॥ अथोत्तर-
दानप्रस्तावनम् आह—'तत्थुत्तरं एयं, इति ॥ तत्र संदेहे उत्तरं प्रतिवचनम्, एतद् वक्ष्यमाणमिति ॥ २३ ॥ तदेवाह—

"भवभीरू संविग्गो सुगुरूणं दंसणम्मि असमत्थो ॥ ता तं पवज्जिऊणं पालइ आराहगो सो वि" ॥ २४ ॥

व्याख्या—भवभीरुः संसारोद्विग्नः, संविग्नो मोक्षाभिलाषी, सुगुरूणां सुविहिताचार्याणां, दर्शने ऽवलोकने, ऽसमर्थो, मार्ग-

वैषम्यादिकारणेन अशक्तो, यदि भवतीति शेषः 'ता' तदा तादृग् वेलायां, तत् परिग्रहपरिमाणं, प्रतिपद्य, आत्मसाक्षिकम् अङ्गीकृत्य, पालयति, उक्तमर्यादया निर्वाहयति, आराधको भगवदाज्ञावर्ती, यदुक्तम्—"अचंति याव वाएण किं पि कत्थइ जं पियं गीयत्थो ॥ तारिसयप्प कारणं न करेइ यत्ति" सोऽपि न केवलं गुरुसाक्षिकगृहीतपरिग्रहपरिमाणपालक आराधक इत्य-पेरर्थः ॥ २४ ॥ अथ अतिप्रसङ्गनिवारणार्थम् आह—

"जइ तं गीयत्थेहिं सुगुरूहिं दिट्ठमत्थि सत्थोत्तं ॥ ता तं परो वि गिण्हउ तग्गहणं नन्नहा जुत्तं ॥ २५ ॥

व्याख्या—यदीति, पक्षान्तरे, तत् परिग्रहपरिमाणं गीतार्थैः—बहुश्रुतैः—सुगुरुभिः-शुद्धप्ररूपकैः दृष्टम् अवलोकितम् अस्ति, भवति शास्त्रोक्त च, चः समुच्चयार्थोऽनुक्तोऽपि द्रष्टव्यः, शास्त्रे आवश्यकनिर्युक्त्युपासकदशादौ, उक्तं भणितं, शास्त्रोक्तम् उक्तम् यत्र तत् शास्त्रोक्तम्, एकस्य उक्तशब्दस्य लोपे मध्यमपदलोपी समासः ॥ शास्त्रसंवादी इत्यर्थः ॥ अत्र गुरुदृष्टं शास्त्रोक्तं चेति पदद्वयेन, चतुर्भङ्गी सूचिता, यथा गुरुदृष्टं शास्त्रोक्तं चेति एको भङ्गः ॥ १ ॥ गुरुदृष्टं न शास्त्रोक्तम् इति द्वितीयः ॥ २ ॥ न गुरुदृष्टं, शास्त्रोक्तम् इति तृतीयः ॥ ३ ॥ न गुरुदृष्टं न शास्त्रोक्तम् इति चतुर्थः ॥ ४ ॥ तथा प्रथमभङ्ग एव श्रेयान् तृतीयस्तु गुरुभि—रदृष्टत्वात् निश्चेतुम् अशक्यः एव, शेषौ अनिष्टफलाविति, प्रथमे एव भङ्गके यदि परिग्रहपरिमाणं भवति ॥ ता तदा-परोऽपि पूर्वप्रतिपन्नाद् अन्योऽपि, गृह्णातु प्रपद्यतां, न कश्चिद्दोषः, तस्य परिग्रहपरिमाणस्य ग्रहणं स्वीकरणं न, नैव अन्यथा द्विती-यादिभङ्गकत्रयरूपेण प्रकारेण युक्तं न्याय्यम्, अविधेयस्यापि करणसंभवेन तद्ग्रहणस्य सदोषत्वादिति भावः ॥ २५ ॥ अथ केचित्

आह—श्राविकाप्रतिलेखितस्थापनाचार्यस्याग्रे श्राविका एव वन्दनाद्यनुष्ठानं कुर्वन्ति, न श्रावकाः, श्राविका हि स्त्री स्त्रीणां
चतुर्थपात्रत्वेन लौकिकेऽपि विशिष्टे कार्ये न प्राधान्यं, किं पुनर्लोकोत्तरे ॥ यदुक्तम्—धम्मो पुरिसप्पभवो पुरिसवरदेसिओ
पुरिसजिट्ठो ॥ लोए वि पहू पुरिसो किं पुण लोगुत्तमे धम्मे" ॥ १ ॥ यत्रापि च प्रेक्षणकादिकार्ये स्त्रीणां प्राधान्यं, तत्रापि
पुरुषहेतुकमेव, तत् न सहजं, विधवानां तत्र अनधिकारात् तथा च किं स्त्रीकृता प्रतिलेखना नमस्कारावलीवत् श्राद्धैः बहुम-
न्यते उत द्विचत्वारिंशद् दोषविशुद्धाथिकालाभवन्नेति, संशयवान् पृच्छति ॥
"ठवणायरिए पडिलेहियम्मि इह साविगाइ वंदणयं ॥ किं सावगस्स कप्पइ सामाइय-माइकरणं च ॥२६॥
व्याख्या—स्थापनाचार्ये अक्षकपर्दककाष्ठदण्डादिरूपे, प्रतिलेखिते प्रत्युपेक्षिते, इह जिनशासने, श्राविकया श्राद्धिकया वन्द-
नकं द्वादशावर्त्तरूपं, किंशब्दः प्रश्ने श्रावकस्य कल्पते—संगच्छते, दातुम् इति शेषः ॥ वन्दनकशब्देन अत्र वन्दनकमात्रविषय
एव संशय उक्तः ॥ इति मुग्धबुद्धिरुपलक्षणानभिज्ञो, मा ज्ञासीद् इति, तद् भ्रमनिरासार्थं वन्दनकशब्दोपलक्षितम् अपि साक्षा-
देव सामायिकादि आह—'सामाइयमाइत्ति' सामायिकं समभावलक्षणं यदुक्तम् "जो समो सव्वभूएसु तसेसु थावरेसु य ॥
तस्स सामाइयं होइ इइ केवलिभासियं" तद् आदिर्यस्य तत् सामायिकादि तस्य करणम् अनुष्ठानं सामायिकादि करणं, मका-
रोऽलाक्षणिकः, आदिशब्दात् पोषधचैत्यवन्दनप्रतिक्रमणकायोत्सर्गप्रत्याख्यानानां ग्रहणम्, सामायिकादि अपि कर्तुं कल्पते
इत्यर्थः, चः समुच्चये, इत्थं स्थापनाचार्यविषयायां पृच्छायां प्रतिपादितायां कश्चिदाह—अनुपपन्ना इयं पृच्छा, असिद्धधर्मिक-

त्वात् , काकदन्तपरीक्षावत् , न च अयम् असिद्धो हेतुः, गृहमेधिनाम् अनुष्ठानालम्बनत्वेन स्थापनाचार्यस्य धर्मिणोऽभावात् , अभावश्च सिद्धान्तसिन्धौ आनन्दकामदेवाद्यनेकमविंकश्रमणोपासकवक्तव्यतामध्येऽन्यत्र वा क्वापि स्थापनाचार्यगोचरस्य विधिवादस्य चरितानुवादस्य च अनुपलभ्यमानत्वाद्, अनुमीयते ॥ न च अनागमिकं मोक्षार्थिभि—राद्रियते, तस्माद् यदा गुरवः प्रत्यासन्ना भवन्ति ॥ तदा तत्पादमूले सर्वम् अनुष्ठान क्रियते, गुरुसाक्षिकस्य तस्य बहुतमफलत्वात् ॥ तदभावे तु स्वसाक्षिकमव, प्रत्याख्यानवत् , प्रत्याख्यान हि गुरोरभावे स्वसाक्षिकम् अपि क्रियते, तद्यदि सामायिकाद्यपि तथैव क्रियते तदा को दोषः, ॥ न हि सामायिकादि आवश्यक प्रत्याख्यान तु नेति ॥ अथवा सामायिकादि परमं मोक्षाङ्गं, प्रत्याख्यानं तु न ॥ यदि वा सामायिकादिसूत्र गणधरप्रणीत प्रत्याख्यानं तु न ॥ तस्मात् प्रत्याख्यानात् अविशेषाद् निरालम्बनेऽपि क्रियमाणे सामायिकादौ दोषाभाव एवति ॥ किम् अन्तर्गड्डुनास्थापनाचार्येणेति ? अत्रोच्यते असिद्धधर्मिकत्वाद् इति हेतुरसिद्धः ॥ धर्मी हि अत्र स्थापनाचार्यो भवता विवक्षितः, स च किं सर्वथैव असिद्धः ॥ अथ साधूनां, किं वा श्रावकाणां ॥ न आद्यः आचार्यनिक्षेपकाले तस्यापि आवश्यके "नामं ठवणा दविए भावे य चउव्विहो य आयरिओ"इत्यादिना स्थापितत्वात् दण्डकस्य स्थापनाचार्यत्वेन तत्र तत्र श्रूयमाणत्वात् च ॥ किं च लौकिका अपि गुरुपारोक्ष्ये निजगुरुपादुका आराधयन्ति, तस्माद् अस्त्येव, नापि द्वितीयः, पूर्वमहर्षिभि—राद्दतत्वात्, तथा च आवश्यके "भरुयच्छम्मि य विजए नडपिडए वासवासनागघरे ठवणा आयरियस्स सामायारी पउंजणया" इति गाथायां भरुयच्छे इक्को आयरिओ तेण विजओ नाम सीसो उज्जेणिं पट्ठविओ कज्जेण

सो अंतरा वासावासेण रुद्धो नडपिडए गामे वासावासं नागघरे ठिओ, तस्स ठवणा आयरियस्स"इत्यादि तच्चूर्णौ चेति, तथा
च विजयसाधुदृष्टान्तेन आधुनिकमुनिभि—रपि गुरुविरहे स्थापनाचार्यसाक्षिक एव आवश्यकादि सामाचारीप्रयोगः कार्यः,
इति व्यवस्थापितं॥ चरितानुवादस्यापि आगमकत्वेन व्यवस्थापकत्वात् ॥ नापि तृतीयः सिंहश्रावकेण स्थापनाचार्यसाक्षिकस्यैव
पोषधस्य गृहीतत्वात्, तथा हि विवाहचूलिकायाम् "दिवबुद्धि कुसुमसेहर सुव्वइ दव्वाहिगारमज्झंमि ठवणायरियं
ठविउं पोसहसालाइ पुण सीहो ।१। उम्मुकभूसणो सो ईरियाइपुरस्सरं च मुहपुत्तिं । पडिलेहिय तो पच्छा
चउव्विहं पोसहं कुणइ त्ति" ननु—विवाहचूलिका सांप्रतं न वर्त्तते, तत्कथं ज्ञायते गाथाद्वयमपि एतत् तन्मध्यवर्त्तीति ?
उच्यते संप्रदायात्, किं व्यवच्छिन्नेषु अपि पूर्वेषु तद्गता एता गाथा इति संप्रदायाद् अधुनापि न ज्ञायते" ननु ज्ञायते एव
तासां संप्रदायस्य आप्तपुरुषप्रवर्त्तितत्वात्, अयं च आप्तैः प्रवर्त्तितोऽनाप्तै—र्वेति सम्यग् निर्णेतुं न शक्यते ? नैवं, अस्यापि आप्तै-
रेव प्रवर्त्तितत्वात्, कथमिदं निश्चीयते ? इति चेद् उच्यते संवादकप्रमाणान्तरदर्शनात् तथाहि आवश्यकवृत्तौ, सामायिकस्यभन्ते
पदचालनाऽवसरे, भाष्यकारसंवाददर्शनपूर्वकं, श्रीमलयगिरिणा उत्सर्गतो गुरुसन्निधौ एव आवश्यकं विधेयं, गुर्वभावे तु
स्थापनाचार्याग्रे एव, न तु प्रकारान्तरेण इत्युक्तं, यथा, अथ सामायिकस्यादौ एव गुरो—रामन्त्रणवचनं किमर्थम् ? उच्यते गुरु-
कुलवासोपसंग्रहार्थं ? यथा सर्वदा एव हि शिष्यो गुणार्थी सन् गुरुकुलवासी भवेत्, गुरुकुलवासे च वसतां प्रतिक्षणं ज्ञाना-
दिगुणोत्सर्पणात् ॥ उक्तं—च भाष्यकृता ॥ १ ॥ आमंतेइ करेमि भंते सामाइयंति सीसो यं, आहामंतणवयणं गुरुणो किं कार-

णमिमंति भण्णइ गुरुकुलवासोवसंगहत्थं, जहा गुणत्थीह निच्चं गुरुकुलवासी हविज सीसो जओऽभिहियं नाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य, धन्ना जाव कहाए गुरुकुलवासं न मुञ्चंति" ॥ १ ॥ अन्यच्च सामायिकस्यादौ गुर्वामन्त्रणम् अभिदधान एवं ज्ञापयति, सर्वकाल गुरुपादमूले प्रतिक्रमणं कार्यं, वसत्यन्तरेऽपि पृथक् कारणवशतः संवस्तुकामो गुरुपादमूले प्रतिक्रान्त्वा वसति ॥ तथा च कल्पाध्ययनोक्ता एवं सामाचारी॥ यदि लघ्वी वसतिस्ततोऽन्यत्र कतिपये साधवः संवस्तुकामा आचार्यसमीपे प्रतिक्रम्य प्रादोषिककालग्रहणोत्तरकालं सूत्रपौरुषीं अर्थपौरुषीं च कृत्वा, अन्यस्यां वसतौ गच्छन्ति ॥ अथ अन्तरा श्वापदादिभयं, ततोऽर्थपौरुषीं हापयन्ति, ततः सूत्रपौरुषीमपि ॥ तथा चरम कायोत्सर्गे द्वितीयम् आद्यं यावत् तिष्ठति अपि सहस्ररश्मौ तत्र यान्तीति ॥ तथा एतदपि ज्ञापयति, यतिना सर्वाण्यपि कार्याणि गुरुना पृच्छयैव कर्त्तव्यानि, नान्यथा, सामायिकप्रतिपत्तेरपि गुर्वामन्त्रणपूर्वकत्वात् उक्तं च "आवस्सयं पि निच्चं गुरुपायमूलम्मि देसियं होइ ॥ वीसुं पि हु संवसतो कारणओ जइ भिसज्जाए" एवं चिय सव्वावस्सयाइं आपुच्छिऊण कज्जाइं ॥ जाणा चिय मामंतणवयणाओ जेण सव्वेसिं ॥ सामाइयमादिमयं ॥ भदंत सद्दो य तदादीये तेणाणुवत्तइ तओ करेमि भंतेत्ति सव्वेसु नते, विनयप्रतिपत्तिश्च शिष्येण, एवं कृता भवति, भगवदाज्ञा च आराधिता स्यात्, तथाहि भगवताम् इयम् आज्ञा, उच्छ्वासादि प्रमुच्य शेषं गुर्वनापृच्छया न किमपि कल्पते कर्तुमिति ॥ उक्तं च—

"किच्चाकिच्चं गुरवो विदंति विणयपडिवत्तिहेउं च ॥ उस्सासादि पत्तुत्तुं तदणापुच्छाइ पडिसिद्धं"
"गुरुविरहम्मि य ठव-
अथ यत्र गुरुर्न भवति, तत्र कथं कर्त्तव्यमिति चेद् प्रतिसमाहितम् अत्र भाष्यकारेण
णा गुरुवदेसोवदंसणत्थं च ॥ जिणविरहम्मि य जिणबिंबं सेवणामंतणं सहलं ॥ रण्णोव परुक्खस्स वि जह
सेवामंतदेवया एव। तह चेव परुक्खस्स वि गुरुणो सेवा विणयहेउं त्ति" एवं च यथा अर्हति परोक्षे अर्हद् बिम्बं,
राज्ञि परोक्षे राजप्रतिबिम्बं, सारस्वतादिमन्त्रदेवतायां परोक्षायां सारस्वत्यादिमूर्त्ति—राराध्यते, स्वेष्टसिद्धौ, तदा—राधनामन्त्रणादि च
सर्वं सफलमपि भवति ॥ तथा गुरोरपि परोक्षे विनयप्रतिपत्तिहेतुं गुरुस्थापना आराध्या श्रेयोऽर्थिभिर्यथा तदा—मन्त्रणादि
सर्वमपि सार्थकं स्यात् ॥ यदि पुनः परोक्षे गुरौ स्वसाक्षिकम् अपि आवश्यकम् अकरिष्यत् तदा तथापि अभणिष्यत्, न च
भणितं तस्माद् ज्ञायते, न स्वसाक्षिकम् आवश्यकं विधानम्, इति सिद्धः स्थापनाचार्यः ॥ ननु—असौ भवतु तेषां, ये गुरुणा
परिगृहीताः, तेहि गुरुपरतन्त्रत्वात् गुरुणा हि सह प्रतिक्रामन्ति, तदभावे स्थापनाचार्यस्याग्रे एव ॥ गुरुणा च परिगृहीता-
स्तावत् साधव एव न श्राद्धा असंयतत्वादिति, ते निकटस्था अपि, न गुरुणा सह प्रतिक्रामन्ति किं पुनः दूरस्थाः, ततः किं तेषां
स्थापनाचार्येणेति चेद् ? तत्किं ये गुरुणा परिगृहीतास्ते एव, सति सामीप्ये गुरुणा सह प्रतिक्रामन्ति ॥ १ ॥ उत ते गुरुणैव
सह प्रतिक्रामन्ति ॥ २ ॥ अथ गुरुणा सहैव प्रतिक्रामन्ति ॥ ३ ॥ यदि वा गुरुणा सह प्रतिक्रामन्त्येवेति ॥ ४ ॥ चत्वारो विक-
ल्पाः ॥ तत्र न आद्यः गच्छान्तरीयप्राघूर्णकसांभोगिकयतिभि—र्व्यभिचारात्, ते हि अदीक्षितत्वेन-अनुत्थापितत्वेन-अदत्तो-

देशप्रदेशत्वेन—अगीतार्थत्वेन गुरुपरिगृहीता अपि सांभोगिकगच्छान्तरगुरुणा सह प्रतिक्रामन्त्येव, प्रतिक्रमणसामाचार्याः प्राप्तत्वात्, नापि द्वितीय साध्वीभि—र्व्यभिचारात्, ता हि गुरुणा परिगृहीता अपि निकटस्था अपि न सह प्रतिक्रामन्ति, यतो एकत्र साधुसाध्वीनाम् अवस्थानप्रसङ्गात् ॥ नापि तृतीयः, प्रादोषिककालग्राहिभिर्व्यभिचारात् तेहि प्रादोषिककालग्रहणाय साधो गुरोः प्रथम प्रतिक्रामन्ति ॥ नापि चतुर्थः, ग्लानप्रतिजागरकै–र्व्यभिचारात्, ते हि ग्लानार्थं गुरुभ्यः पूर्वमपि पश्चादपि ग्लानेन सह नापि प्रतिक्रामन्ति ॥ तस्मान्न गुरुपरिगृहीतत्व सह प्रतिक्रामणे हेतुः ॥ किं तर्हि गुर्वादेशापेक्षिप्रतिक्रमणविध्यन्यथा–नुपपत्ति, गुर्वादेशापेक्षी प्रतिक्रमणविधिश्च श्राद्धानामपि समान एवेति, तेऽपि गुरुणा सह प्रतिक्रामन्त्येव, किं च साधूनामेव एष विधिरुक्त इति, यदि श्राद्धान आद्रियन्ते तर्हि सकलस्यापि आवश्यकस्य अनादरप्रसङ्गः,॥ तदङ्गानां वन्दनप्रतिक्रमणकायोत्सर्गादीनां विधेः साधुम् एव उद्दिश्य आवश्यकनिर्युक्त्यादौ उक्तत्वात्, तथाहि—

"पंच महव्वयजुत्तो अणलस्समाणपरिवज्जियमईओ ॥ संविग्गनिज्जरट्ठी किइ कम्मकरो हवइ साहू ॥ १ ॥

जीवो उ पडिक्कमओ असुहाणं पावकम्मजोगाणं ॥ झाणपसत्था जोगा, जे ते न पडिक्कमे साहू ॥ २ ॥

चउरंगुलमुहपुत्ती उज्जुयडुक्कहत्थरयहरणं ॥ वोसट्ठचत्तदेहो काउस्सग्गं करिज्जाहि ॥ ३ ॥ इत्यादि एवं च समणेण सावएण य अवस्स कायव्वयं हवइ जम्हा ॥ इत्यादिना विरोधः ॥ यद्यदि पूर्वापरविरोधस्य परिहरणार्थं साध्वाश्रितमपि वन्दनादिकं श्राद्धैराद्रियते, तर्हि तद्विधिरपि सर्वोऽपि आद्रियतां, नहि विधिमन्तरेण विधेयं विधातुम् उचितम्, अनर्थप्रस-

ज्ञात् ॥ ननु—एवं स्थापनाचार्यवद् रजोहरणस्यापि आदरप्रसङ्गः, ? साधवो हि आवश्यकवेलायाम् असति गुरौ यथा
स्थापनाचार्यं स्थापयन्ति, तथा रजोहरणेन स्वपादौ भुवं च प्रतिलिखन्ति ॥ वन्द्यपादावपि तत्रैव स्थापयन्ति ॥ तद्यदि यतिवद्
गृहस्थैरपि आवश्यकं विधेयं, तदा रजोहरणस्यापि ग्रहणप्रसङ्गः ? इति चेन्न एकादशप्रतिमाप्रतिपत्तौ एव गृहस्थस्य तत्राधिका-
रात् ? ननु—अर्वागपि औपग्रहिकरजोहरणं गृहस्थस्य उक्तम् अस्ति, इति तेनासौ स्वपादौ भुवं च प्रतिलिखतु, वन्द्यपादावपि
तत्रैव स्थापयति ? इति चेद् न पूर्वाचार्यप्रवर्त्तितसमाचार्यतिक्रमणप्रसङ्गात् ? ननु—पूर्वाचार्यैरेवंविधा सामाचारी किमिति न
प्रवर्त्तिता ? उच्यते गृहस्थस्य औघिकोपकरणत्वेन मुखवस्त्रिकारजोहरणयो-रभावात्, औघिकं ह्युपकरणं यद्यस्मिन् कार्ये व्यापार्य-
तया उक्तं, तत् तत्रैव व्यापार्यं नान्यत्र, अन्यथा आज्ञाभङ्गादयो दोषाः ॥ अत एव साधवो मुखवस्त्रिकया ऊर्ध्वकायम् एव प्रति-
लिखन्ति नाधः कायं कदाचिदपि, गृहस्थानां तु मुखवस्त्रिका न औघिकोपकरणं असार्वदिकत्वात् किं तर्हि औपग्रहिकमेव, सामा-
यिकग्रहणादिके कारणे एव उपस्थिते तस्या गृह्यमाणत्वात् परिभुज्यमानत्वाच्च, यदुक्तम् ओहेण जस्स गहणं भोगो पुण कारण ।
सतो होही ॥ जस्स उ दुगं पि नियमा कारणओ सो उवग्गहिओत्ति ॥ अत एव ते वृद्धपरम्परागतविधिना तया एव ऊर्ध्वका-
यमपि अधःकायमपि भूमिमपि परिमितत्वेन प्रतिलिखन्ति, तस्या एव च मध्यभागे वन्द्यपादावपि स्थापयन्ति ॥ औपग्रहिकस्य
कार्यनैयत्याभावात् तथाच किं तेषां रजोहरणेन तत्साध्यस्य अन्यथापि सिद्धत्वात् ॥ केवलं यदा ते रात्रिपोषधं गृह्णन्ति, तदा
उच्चारप्रस्रवणादिकार्येण पोषधशालाया बहिर्निर्गच्छन्तः प्रविशन्तश्च चक्षुरविषयभूताया आक्रम्य भूमेः प्रचुरत्वेन प्रत्युपेक्षणं

मुखवस्त्रिकया कटीभङ्गाद्यनेकदोषसंभावनया कर्तुम् अनुत्सहमानास्तदर्थं रजोहरणमपि औपग्रहिकम् गृह्णन्ति ॥ अन्यथा निर्घृ-
णत्वेन जीवविराधनाप्रसङ्गः ॥ एवं च आवश्यकविधौ न गृहस्थानां रजोहरणस्य अपेक्षा, तत्साध्यविधीनां मुखवस्त्रिकयाऽपि
औपग्रहिकत्वेन पूर्वाचार्यानुमतत्वेन च साध्यमानत्वात्, किं च नायं नियमो यदूर्ध्वकायो मुखानन्तकेनैव, अधःकायश्च रजो-
हरणेनैव प्रतिलिख्यते, कायोत्सर्गे पारिते बाहुलक्षणस्य ऊर्ध्वकायस्य रजोहरणेनापि, अध्यारूढसूक्ष्मजन्तूत्तारणार्थं कण्डूयना-
द्यर्थं च अधःकायस्य मुखानन्तकेनापि प्रतिलिख्यमानत्वात् ॥ छोभावन्दनकवेलायां द्वयस्यापि अस्य केवलेनैव प्रच्छादिकाञ्च-
लेन श्रावकेण प्रतिलिख्यमानत्वाच्च ॥ ततो यथा छोभावन्दनक्षणे एकेनैव प्रच्छादिकाञ्चलेन मुखवस्त्रिकाकार्यं रजोहरणकार्यं च
गृहस्थाः कुर्वन्ति, तथा यदि एकया मुखवस्त्रिकया कृतिकर्मारम्भे द्वयमपि अदः कुर्वन्ति तदा किं दूषणं, ननु—'एवं' रजोह-
रणस्यापि मुखवस्त्रिकाकार्यकरणप्रसङ्गः, अशक्यत्वात् ॥ नहि मुखवस्त्रिकासाध्यं संपातिमजीवरक्षा नासामुखबन्धादिकं रजोह-
रणेन कर्तुं शक्यते ॥ यदि पुनर्नियमः स्यात्, तदा छोभावन्दनके गृहस्थोऽपि मुनिवन्मुखवस्त्रिका-रजोहरणाभ्याम् एव कायं
प्रतिलिखेत् नचैवम् ॥ अथेदम् अल्पकालम् इत्यत्र उत्तरीयाञ्चलमात्रेणैव कायं प्रतिलिख्यते ? एवं तर्हि मुनिरपि अत्र उत्तरी-
याञ्चलेनैव कायं प्रतिलिखेत्, नचैवं तस्मान्न नियमः ॥ यत्तु आगमे मुखानन्तकेन पादादिप्रमार्जने साधूनां प्रायश्चित्तम् उक्तम् ॥
तदतिप्रसङ्गनिवारणार्थम् अन्यथा पूर्वपुरुषप्रदर्शितमर्यादातिक्रमणेन अनन्तसंसारिणस्ते स्युरिति ॥ स्थापनाचार्यस्य तु अवश्यं
भावेन अपेक्षा, तदभावे हि गुर्वादेशापेक्षकावश्यकविधयो-निरालम्बनत्वेन आकाशप्रहारा इव सर्वेऽपि निरर्थकाः स्युः, साधक-

तमान्तराभावात् ॥ न च रजोहरणस्थापनाचार्ययोः कश्चित् प्रतिबन्धोऽस्ति, येन एकस्मिन् गृह्यमाणेऽन्यस्यापि ग्रहणप्रसङ्गः ॥
अथ च एकस्मिन् त्यज्यमाने परस्यापि त्यजनप्रसङ्ग इति ॥ एतेन यत् केचिद् ब्रुवते, प्रतिक्रामन्तो गृहस्थाः पादप्रतिलेखनादि
विधिसाधनार्थं चिलवलयं गृह्णन्तीति, तद् अनागमिकं वेदितव्यं, तत्साधकस्य विधिवादस्य चरितानुवादस्य च अभावात् ॥
युक्तिवादस्य च निषिद्धत्वात् ॥ किञ्च सामायिकाद्यनुष्ठानार्थं यदि श्राद्धो रजोहरणम् अग्रहीष्यत्, तदा नेदं साधूनां लिङ्गम् अभ-
विष्यत्, साधारणत्वात्, लिङ्गं चेदम् इष्यते, तस्मान्न गृह्णन्ति ॥ स्थापनाचार्यस्तु न कस्यापि लिङ्गमिति, सर्वसाधारण एव ॥
ननु—यदि लिङ्गत्वाद् रजोहरणग्रहणं श्राद्धस्य न युक्तं, तर्हि मुखपोत्तिकाया अपि ग्रहणं न युक्तं तुल्ययोगक्षेमत्वात्? इति चेत्
न, केवलाया मुखवस्त्रिकाया लिङ्गत्वायोगात्, रजोहरणयुक्ता एव एषा लिङ्गं, यदुक्तं पिण्डनिर्युक्तौ "लिंगे रयहरणमुहपोत्ती-
त्ति" रजोहरणं तु केवलमपि लिङ्गं, यदुक्तम् ओघनिर्युक्तौ 'लिंगट्ठा चेव रयहरणमिति' किन्तु रजोहरणे सति अवश्यतया मुखव
स्त्रिका भवतीति? सापि लिङ्गत्वेन उक्ता, किं नोक्तं, स्वावभासित्वम् अप्रमाणेपि मिथ्याज्ञाने भावादलक्षणमपि अवश्यं भावितया
प्रमाणलक्षणत्वेन यथा प्रमाणं स्वपरावभासिज्ञानं बाधविवर्जितम् इति ॥ किंच स्यादपि एषा केवलाऽपि लिङ्गं यदि, रजोहरणमिव
साधूनामेव स्यात्, न चैवम् उत्कटनाम्नां मातङ्गभिक्षूणामपि अस्या भावात्, न च ते साधवो धर्मानधिकारित्वे सति अतिशय-
ज्ञानिना अदीक्षितत्वात् शासनलाघवकारित्वाच्च ऋषिघातकवत् ॥ अपि च यदि ते साधवः स्युः, तदा लिङ्गत्वेन रजोहरणमपि
गृह्णीयुः ॥ नच गृह्णन्ति तस्मान्न साधवः ॥ अपि च यदि एकाकिनी अपि मुखपोत्तिका साधोर्लिङ्गं स्यात्, तदा श्रीधनगिरि-

स्तस्यां राजसभायां वज्रस्वामिनो व्रताभिलाषोत्पादनार्थम् असाधारणत्वेन "गिण्हलद्धुं रयहरणं कम्मरयपमज्जणं धीरोत्तिवत् 'गिण्हइ मुहपुत्तिं धम्मरयपमाहणं धीरो' इत्यपि अभणिष्यत्" ॥ न च भणितवान् तस्मान् ज्ञायते न लिङ्गम्, इति कथं तुल्ययोगक्षेमत्वम्, तस्माद् अलिङ्गत्वेन साधारणा मुखपोत्तिका धर्मोपकरणत्वाद् गृह्णाति एव क्रियाकाले श्राद्धः ॥ तथा च गृहीतायामपि अस्यां न लिङ्गतः साधर्मिकत्वं श्राद्धस्य, दशमप्रतिमावहनं यावत्, यदुक्तं "दसगसिहागा सावय पवयण साहम्मिया न लिंगेण त्ति" श्राद्धा हि दर्शनव्रताद्येकादशप्रतिमाप्रतिपत्तिभेदेन एकादशधा भवन्ति ॥ तत्र आद्या दश प्रवचनत एव साधर्मिकाः, न लिङ्गतः, लिङ्गस्य रजोहरणस्य एकादश्यामेव प्रतिमायां ग्राह्यत्वेन उक्तत्वात् ॥ यदुक्तम् "खुरमुंडो लोयेण च, रयहरणं उग्गहं च घेत्तूण । समणभूओ विहरइ धम्मं काएण फासंतो त्ति" यदि पुनर्मुखपोत्तिकाऽपि लिङ्गं स्यात्, तदा तद्ग्रहणमपि अत्रोच्येत, लिङ्गतः साधर्मिकत्वं प्रतिहेतुत्वात्, न चोक्तं तस्मान्न लिङ्गं, किं तर्हि रजोहरणस्य सहचारिणी पोषधस्य इव सामायिकं, ततो यथा पोषधे गृहीतेऽवश्यं गृह्यमाणमपि सामायिकं पोषधमन्तरेणापि गृह्यते, एवं रजोहरणेन सह गृह्यमाणाऽपि मुखपोत्तिका रजोहरणम् अन्तरेणापि गृह्यते एव, अतश्चान्तरीयत्वात् ॥ यदि वा भवतु लिङ्गं तथापि सामायिके गृहीते सति, साहूणं सगासाओ रयहरणं निसिज्जं वा मग्गइ ॥ अह घरे तो से उवग्गहियं अत्थि, तस्स असइ पुत्तस्स अंतेणं पडिलेहित्ता ॥ इत्याद्यावश्यकचूर्णिप्रमाण्यादौपग्रहिकं रजोहरणमपि श्राद्धस्तावत् गृह्णाति ॥ तद्यदि मुखपोत्तिकामपि औपग्रहिकीं गृह्णाति तदा को दोषः ॥ नहि रजोहरणं जीवरक्षाहेतुर्मुखवस्त्रिका न ॥ अथवा रजोहरणं साधूपकरणं मुखवस्त्रिका न, यदि वा रजोहरणं साधुलिङ्गं मुख-

साधोर्लिङ्गेऽपि रजोहरणमुखवस्त्रिके क्रियासाधनत्वात् गृहस्थः स्वीकरोति, तदा किं वक्तव्यम् अलि-
वस्त्रिका न, इति ततो यथा साधोर्लिङ्गेऽपि रजोहरणमुखवस्त्रिके तदा सामायिकस्यसर्वशब्दभणनम् इव ॥
ङ्गस्य स्थापनाचार्यस्य स्वीकरणे ॥ किं च यदि स्थापनाचार्यो अस्य अविहितः स्यात्, तदा "सव्वं ति भाणिऊणं विरई खलु जस्स सव्विया नत्थि, सो सव्वविरइवाई चुक्कइ, देसं च सव्वं च" इत्यादाविव दोषं दर्शयित्वा
सव्वंति भाणिऊणं विरई खलु जस्स सव्विया नत्थि, सो सव्वविरइवाई चुक्कइ, देसं च सव्वं च" इत्यादाविव दोषं दर्शयित्वा
कापि निर्वार्येत ॥ ननु निवारितः, नापि तदग्रेऽनुष्ठानम् अनुतिष्ठतां श्राद्धानां कश्चिद् दोषः, प्रत्युत गुर्वामन्त्रणाऽवग्रहयाचना-
दिपदसफलतालक्षणो गुण एव ॥ अन्यथा ऐर्यापथिक्याम् आदेशमार्गणं,, सामायिके भदंतेति गुर्वामन्त्रणं २ वन्दनके च क्षमा-
श्रमणेति गुरुसंबोधनं ॥ ३ ॥ अवग्रहाधःकायसंस्पर्शनानुज्ञा च ॥ ४ ॥ वहुशुभेन रात्रिव्यतिक्रमणादि पृच्छा ॥ ५ ॥ इत्यादि
सर्वनिरालम्बनत्वेन असंबद्धमेव स्यात् ॥ तथा च आवश्यककर्तुरुन्मत्ताद् अविशेषः ॥ अथ दूरस्थमपि गुरुम् अधिकृत्य आवश्यकं
क्रियते इति न कश्चिद् दोषः ? इति चेद् न अमितावधिकत्वेन अवग्रहप्रवेशस्य, उच्छेदनकवर्जनस्य च दुर्घटत्वात् ॥ किं च साध-
वोऽपि एवमेव कुर्वन्तु, किम् एषामपि स्थापनाचार्येण ॥ नहि एते श्राद्धेभ्यः केनाऽपि गुणेन हीनाः, येन निरालम्बनमनुष्ठानं
कर्तुम् न शक्नुयुः ॥ किं च एषामेव स्तोकोपधित्वम् अधिको गुणो भविष्यति ॥ अथ एषामेव भणितोऽस्ति सामायिकसूत्रस्यभन्ते
पदविचारावसरे ? तर्हि श्राद्धानामपि भणितोऽस्ति सामायिकसूत्रस्यभन्तेपदस्य उभयसाधारणत्वात् ॥ अपि च सर्वेष्वपि धर्मगच्छेषु
साधुभिः श्राद्धैश्च अविशेषेण स्वं स्वम् अनुष्ठानं स्थापनाचार्यस्याग्रे क्रियमाणम् अविगानेन च आचार्यपरम्परायाम् आगच्छत्सा-
क्षाद् ईक्ष्यते ॥ आचार्यपरम्परागतं चातिक्रमितुं न युज्यते मिथ्यात्वहेतुत्वात्, यदुक्तम् "आयरियपरंपरएण आगयं जो उ छेय

पूर्वीए ॥ को नेह छेयराई जमालिनासं म नासिही त्ति" तस्माद् अनुक्तविशेषान्तरम् आवश्यकं साधुभिः श्राद्धैश्च समानेनैव विधिना विधेयम्, साधारणानुष्ठानत्वात्, यद् यथा साधारणमनुष्ठानं तत्तैरनुक्तविशेषान्तरं सत् समानेनैव विधिना विधेयं, यथा उपधिप्रतिलेखनं, साधारणानुष्ठानं चेद् "समणेण सावएण य अवस्स कायव्वयं हवइ जम्हा ॥ अंतो अहो निसिस्सा तम्हा आवस्सयं नाम" इति वचनात्, तस्मादनुक्तविशेषान्तरं समानेनैव विधिना विधेयमिति ॥ यच्च साधुभ्यः श्राद्धस्य आवश्यकविधौ विशेषोऽस्ति, यथा साधु रेकवारमेव सामायिकं गृह्णाति, श्राद्धस्तु अनेकवारम् इत्यादिकः, स सर्वोऽपि "सामाइयंमि उ कए, समणो इव सावओ हवइ जम्हा ॥ एएण कारणेणं, बहुसो सामाइयं कुज्जा" इत्यादिग्रन्थेन उक्तत्वात् तथैव कार्यः ॥ ननु— एवं तर्हि साधुवत् श्राद्धस्यापि रजोहरणेनैव पादप्रतिलेखनादि प्रसजति, मुखानन्तकेन तस्य क्वापि अनुक्तत्वात्? न, तस्य तथा वृद्धपरम्परागतत्वात्, वृद्धपरम्परागतं हि सिद्धान्तोक्तम् इव मन्यते, अन्यथा साध्व्योऽपि वन्दनकाद्यारम्भे साधुवत् मुखानन्तकेन पञ्चविंशतिधा स्वाङ्गं प्रतिलिखेयुः ॥ प्रकारान्तरेण प्रतिलेखनस्य अप्रतिलेखनस्य वा शास्त्रेऽनुक्तत्वात् ॥ यच्चोक्तं गुर्वभावे स्थापितस्यैव क्रियते, प्रत्याख्यानवदिति, तत्रोच्यते-प्रत्याख्यानमपि न स्वसाक्षिकम् "जाणंतो जाणंतगस्स सगासे करेइ" इत्यादि चतुर्भङ्गीरचनावैयर्थ्यप्रसङ्गात् ॥ भवतु वा कथमपि तत्तथा, अभिग्रहणमात्ररूपत्वात्, भदन्त क्षमाश्रमणेत्यादि गुर्वपेक्षिपदरहितसूत्रत्वाच्च, तथापि न दृष्टान्तेन सामायिकादावपि तथैव कर्तुं लभ्यते ॥ एवं हि तीर्थकृद् इव 'भंते' पदरहितं सामायिकसूत्रम् उच्चरेत्, क्षमाश्रमण अनुजानीतमितोऽवग्रहम्, इत्यादि गुर्वाश्रितवाक्यविकलं च वन्दनकसूत्रं क्षामणासूत्रं च सकल-

मपि नोच्चरेत् ॥ निर्विषयत्वात्, तथा च साधुरश्रुतवरसमाचार्याराधनम्, अथ अखण्डमेव सूत्रम् उच्चारणीयं ? न, सर्वपदर-
हितस्य सामायिकसूत्रस्य श्राद्धैरुच्चार्यमाणत्वात् ॥ अथ सर्वमितिपदं तैरेव भगवद्भिर्निवारितम् ? एवं तर्हि यत्तैः-निवारितं
तन्मुच्यतां, स्थापनाचार्यस्तु कथं मुच्यते, नहि असौ तैः-र्निवारितः ॥ किंच यदि आवश्यकं स्वसाक्षिकं क्रियते, तदा चैत्यवन्दना-
ऽपि तथैव क्रियतां, क्रियत एव, किं न कृताजिनजन्मकाले शक्रेण सुधर्मायां सभायामिति ? चेद् अहो आगमज्ञता यदेवम् असंबद्धं
प्रलपितुं प्रवृत्तोऽसि, शक्रेण हि तदानीम् उत्पन्नमात्रं भावार्हन्तमेव अवधिज्ञानेन साक्षात्कृतम्, अवलक्ष्य सा प्रारब्धा इति
भावार्हद् विषयत्वात्, स्थापनार्हद् विषया च असौ इष्टा, चैत्यस्य कथम् आत्मसाक्षिकी ॥ किं च इयं चैत्यवन्दनाऽपि न भवति, भावार्हद् विषयत्वात्, स्थापनार्हद् विषया च असौ इष्टा, इति स्वचेतसि
स्थापनार्हदर्थत्वेन व्याख्यातत्वात् ॥ तथा किं नाम देवानामपूर्यमाणम् अस्ति येन आत्मसाक्षिकीं करिष्यन्ति, यदि चासौ
विमृश्यतां, श्रूयन्ते च सिद्धायतनेषु स्थापनार्हतो वन्दमाना देवा, जीवाभिगमादिषु नन्दीश्वरवक्तव्यता मध्ये ॥ यदि चासौ
स्वसाक्षिकी एव स्यात्, तदा स्थापनार्हद्भिः न किंचित्, तेषां नाकिंचित् करत्वे को नाम जिनभवनादि-निर्मापणे प्रवर्तते,
कश्च वा श्रीशत्रुञ्जयादितीर्थस्थितस्थापनार्हद्वन्दनार्थम् उत्सहिष्यते, अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति श्रुतेः ॥ एवं च
सम्यक्त्वशुद्धिनिबन्धनानां जिनभवनबिम्बयात्राकारापणादीनाम् उत्सर्पणानाम् उच्छित्त्या प्रवृत्तिः ॥ तथा च लाभम् इच्छतो
मूलनाशः संजातः ॥ अथ स्थापनार्हन्तोऽवश्यं कार्यन्ते एव चैत्यपूजा अन्यथाऽनुपपत्तेः, आवश्यक चैत्यपूजादौ एव मनसः

१ अर्के इत्यपि पाठान्तरम् अर्के गृहकोणके ॥

यदुक्तम् "अरहंतचेइयाणं सुसाहुपूयारओ दढायारो सुस्सावगो वरतरं" इति ततो न पूर्वोक्तदोषाऽवकाशः ? इति चेद् एवं तर्हि स्थापनाचार्योऽपि कार्यते एव ? नहि असौ न पूज्यते यदि न पूज्येत् तदागमे साधर्मिकचैत्यं न प्रत्यपादयिष्यत, वारत्तकावन्तीसुकुमालपुत्रैश्च नाकारयिष्यत ॥ प्रतिपादितं चागमे, कारितं च अवन्तीसुकुमालवारत्तकपुत्रैस्तत्, ततो ज्ञायतेऽवश्यं स्थापनाचार्यः पूज्यते एव श्राद्धैः ॥ ननु पूजयन्तु यथा कामं परमावश्यकम् असाग्रे न कुर्वन्ति, तस्यायोगोलकल्पत्वेन तेषां गुरुणा स्वायत्ततायाम् अकृतत्वादिति ? चेन्न एवं हि स्थापनार्हदग्रेऽपि चैत्यवन्दनस्य अकरणप्रसङ्गः ॥ नहि तेऽर्हताऽपि स्वायत्ततायां कृताः सन्ति, अथ तैरर्हन् देवत्वेन प्रतिपन्न इति तत्स्थापनाग्रे चैत्यवन्दनं कुर्वन्त्येव ? तर्हि धर्माचार्योऽपि तैर्गुरुत्वेन प्रतिपन्न एवेति, तत्र स्थापनाग्रेऽपि आवश्यकं कुर्वन्तु ? ॥ किंच गुरोरनायत्तत्वाद् यदि तत्स्थापनाग्रे आवश्यकं न कुर्वन्ति ॥ तदा साक्षाद् गुरोरग्रे विशेषतो मा कार्षुः, नहि यद्यद्स्थापनाया अपि अग्रे न विधीयते तत्तदग्रे विधीयते, स्थापनापेक्षया स्थाप्यस्य अभीष्टतमत्वात्, ॥ अथ चैत्यानां वन्दनं चैत्यवन्दनम् इत्यन्वर्थवशाद् इदं स्थापनाऽग्रे एव क्रियते, ? यदुक्तं 'वंदइ उभओकालंपि चेइयाइं थयथुइपरमोत्ति, आवश्यकं तु नित्यकृत्यम्, अवश्यं हि क्रियते इत्यावश्यकम् इति व्युत्पत्तेः, नित्यकृत्यं तु निरपेक्षमेव भवति, सापेक्षत्वे हि कुतोऽपि अभवति अपेक्षणीये अकरणप्रसङ्गः ॥ तथा च नित्यकृत्यत्वव्याघातः ॥ अत इदं समाधिकमेवेति ? चेन्न, आवश्यकनिर्युक्तिभाष्यचूर्णिकल्पाद्यागमविरोधात्, एषु हि गुरुणा सहैव प्रतिक्रमणं कार्यमित्युक्तम् ॥ यथाहि आवश्यकनिर्युक्तौ "जइ पुण निव्वाघाओ आवासं तो करिंति सव्वे वि ॥ सड्ढाइकहणवाघायययाइ पच्छा गुरू ठंति सेसा उ

जहासत्ति ॥ आपुच्छिताण ठंति सट्ठाणे सुतत्थसरणहेउं आयरियठियम्मि देवसियं ति ॥ एतच्चूर्णिरपि ईदृश्येव स्वयं परि-
भाव्या ॥ भाष्यकल्पौ तु प्रागुक्तावेव सरणीयौ, किंच इदमपि चूर्णावुक्तमस्ति यथा—जइ नत्थि अइयारो ताहे संदिसहेति
भणिए पडिक्कमहत्ति भणियव्वं ॥ अह अइआरो तो पायच्छित्तं पुरिमड्ढाइ दाहिंति ॥ इदं च गुरुकृत्यकार्यभणनम् अनर्थकमेव
समपश्यत ॥ यदि स्वसाक्षिकम् आवश्यकम् अभविष्यत्, अथैते आगमाः साधून् आश्रित्य प्रवृत्ताः ? इति चेत् प्रवर्त्तन्तां नाम
तथापि नित्यकृत्यं निरपेक्षमेव भवतीत्येवंरूपा भावत्की व्याप्ति–र्भग्ना एव, साध्वावश्यकस्य नित्यकृत्यस्यापि भावाचार्यस्थाप-
नाचार्यान्यतराऽपेक्षित्वात् ॥ तद्यदि श्राद्धानामपि तथा स्यात्, तदा को दोषः ॥ नहि एते 'वन्दइ उभओकालं पि चेइयाइं'
इत्यक्षरप्रामाण्यात् नित्यकृत्यमपि चैत्यवन्दनं चैत्यस्याग्रे न कुर्वन्ति ॥ जिणविरहम्मि वि जिणबिंबसेवणा, इत्यादि दृष्टान्तस्य
साध्यविकलताप्रसक्तेः ॥ ननु आवश्यकचूर्णौ प्राभातिकप्रतिक्रमणविधौ स्तुतित्रयदानकालनिवेदनानन्तरम् उक्तम् "जइ चेइ-
याणि अत्थि तो वन्दंति त्ति" तथा व्यवहारचूर्णावपि उक्तम्, अत्यन्तापवाददशायां 'जइ चेइयघरे ठिया वेयालियं कालं पडि-
कंता, अकए आवस्सए, गोसे य कए आवस्सए, जइ चेइए न वंदइ मासलहू, इति ॥ सांप्रतं तु यूयं सदापि प्राभातिकस्य
प्रतिक्रमणस्यान्ते सान्ध्यस्य चादौ, असत्सु अपि चैत्येषु चैत्यवन्दनां कुर्वन्तो दृश्यध्वे, इति चैत्यवन्दनाऽपि मनोमात्रानुयायिनी
एव ? इति चेद् न अक्षकपर्दककाष्ठादौ हि पञ्चपरमेष्ठिनां स्थापनात् ॥ तथा च आवश्यकादिकरणकाले स स्थापनाचार्य इति
व्यपदिश्यते, चैत्यवन्दनवेलायां तु स्थापनार्हन्निति ॥ ततस्तदग्रे क्रियमाणासौ कथम् आत्मसाक्षिकी इति ॥ ननु–एकत्रैव अर्ह-

न्यपदेश आचार्यव्यपदेशश्च विरुध्यते ? इति चेन्न तन्निबन्धनयो—र्लघुगुरुत्वयोरेकत्र सद्भावस्य आगमे संस्थापितत्वात्? एतच्च अग्रे व्यवहारभाष्यीय 'आयरियगहणेणं, इत्यादिगाथादिभि—र्दर्शयिष्यते, तस्मात् सामायिकदण्डके यद् गुर्वामन्त्रणार्थं भंते इति पदम् उपन्यस्तं, तदिदं ज्ञापयति, यथा सामायिकं गुरुसन्निधावेव गृह्यते, न दूरे, दूरस्थस्याभिमुखीकर्तुमशक्यत्वेन आमन्त्रणाविषयत्वादिति ॥ अनेन च गुरुसाक्षिकानुष्ठानत्वं चास्य निर्धारितं, तथाच यदा गुरुः प्रत्यासन्नो न भवति, तदा सामायिकस्य अग्रहणं मा प्रसांक्षीत् इति गुरुविरहम्मि य ठवणे, त्यनेन स्थापनाचार्याग्रे तद्ग्रहणमुक्तं, प्रमाणान्तरोपपन्नमपि इदं, तथा हि—विवादाध्यासितं सामायिकग्रहणं, गुरुपारोक्ष्ये गुरुस्थापनाग्रे विधीयते, गुरुसाक्षिककार्यत्वात्, यद् गुरुपारोक्ष्ये, गुरुस्थापनाग्रे न विधीयते, तद् गुरुसाक्षिककार्यमपि न भवति, यथा उच्छ्वासादि ॥ नचेदं गुरुसाक्षिकं कार्यं न भवति, भंते पदस्य वैफल्यप्रसङ्गात् ॥ तस्माद् गुरुपारोक्ष्ये स्थापनाचार्यस्यैव अग्रे विधीयते, इति व्यतिरेकानुमानम् ॥

एवं शेषाण्यपि आवश्यकानि गुरुणा पृच्छयैव कर्तव्यानीति ज्ञापितम् ॥ अनेनैव आमन्त्रणवचनेन, यतः षण्णामपि आवश्यकानाम् आदिभूतं सामायिकं, तस्य च आदौ न्यस्तं, भंते पदं, शेषेष्वपि अनुवर्तते, यदुक्तम् "एवं चिय सव्वावस्सयाइं आपुच्छिऊण कज्जाइं आणाविणयमामंतणवयणाओ जेण सव्वेसिं सामाइयमाइमयं भदंत सद्दो य जं तदादीये, तेणाणुवत्तइ तओ करेमि भंते त्ति सव्वेसु त्ति, ततस्तान्यपि गुरुपारोक्ष्ये स्थापनाचार्यस्याग्रे एव कार्याणि ॥ तथाच प्रयोगो–यद् यस्य अग्रे विधीयते, तद् तदभावे तत्स्थापनाग्रे विधेयं, यथा देववन्दनं, विधीयते च आवश्यकं गुरोरग्रे, इति सिद्धः श्राद्धानामपि

च साधिते ॥

स्थापनाचार्यः ॥ तत्प्रसङ्गेन चिलवलयग्रहणनिषेधमुखानन्तकग्रहणे च साधिते ॥ न लघुतरो महत्तरो वा, तावत्
अपरः आह—भवतु श्राद्धानामपि स्थापनाचार्यः, परमसौ स्थाप्यप्रमाण एव कर्तुमुचितः, कृतपुण्य इति तत्पुत्रैः ॥
प्रमाणे हि तस्मिन् दृष्टे सोऽयम् इत्यध्यवस्यन्ति, तद्भक्ताः ॥ किं नाध्यवसितः कृतपुण्यप्रतिनिधिः, कृतपुण्य इति तत्पुत्रैः ॥
आगमेऽपि दण्डक एवासौ स्थापितो दृश्यते ॥ तथाहि—आवश्यकचूर्णौ शीतलाचार्येण भागिनेयमुन्यधिष्ठितदेवकुलिकायां दण्डकं
स्थापयित्वा तदग्रे प्रतिक्रमणालोचने कृते ? इति चेद् न, स्थापनाकल्पस्य अनियतमानस्यैव आगमे प्रतिपादितत्वात् ॥ तथाह्याव-
श्यके "अक्खे वराडए वा कट्ठे पुत्ते य चित्तकम्मे य ॥ सब्भावमसब्भावं ठवणाकप्पं वियाणाहीति"
अक्षवराटकानां स्वभावत एव लघुत्वात्, काष्ठादीनां यादृच्छिकत्वेन अनियतत्वात् ॥ किं च स्थाप्यप्रमाणैव स्थापना यदि अभ-
विष्यत् तदाऽर्हत्स्थापनापि तादृश्येव अकारयिष्यत्" अर्हन् चोत्कृष्टतः पञ्चधनुःशतप्रमाण एव, जघन्यतस्तु सप्तहस्तप्रमाण एव,
भवति, ततो लघुतराश्च अर्हत्प्रतिमाः सर्वा एव अप्रामाणिक्यः स्युः ॥ सांप्रतं च लघुतरा एव दृश्यन्ते, तथा च तासाम् आरा-
धनम् अफलमेव स्यात् ॥ नच अफलं भवति, संविग्नश्रुतधरैरादृतत्वात्, तस्माद् यथा स्थाप्यमानात् लघ्व्यो लघुतरा लघुतमा
अपि तीर्थकृत्प्रतिमा आराध्यन्ते ॥ तथा स्थापनाचार्योऽपि स्थाप्याचार्यात् लघुरपि आराध्य एवेति ॥
अथ राकापक्षीयाः संगिरन्ते—भवतु असौ यावांस्तावांस्तथापि चैत्यवन्दनां कर्तुकामः साधुः श्राद्धो वा, चैत्येऽपि स्थापना-

---

[1] तथाहि आवश्यक एवासौ दृश्यते इति पुस्तकान्तरे अधिकपाठोऽस्ति तच्चिन्त्यम् ।

चार्यस्यैव अग्रे ऐर्यापथिकीं प्रतिक्रामति, न देवस्याग्रे, स्थापनार्हत्वात्? ऐर्यापथिकी हि गमनागमनाद्यतिचारविशोधनार्थमेव प्रतिक्रम्यते ॥ अतिचारविशुद्धिश्च गुरोरेवाग्रे क्रियते, यदुक्तम् ओघनिर्युक्तौ, गन्तूण गुरुसगासं काऊण य अंजलिं विणयमूलं ॥ भव्वेण अत्तसोही कायव्वा एस उवएसोत्ति ॥ गुरोरभावे तु गुरुस्थापनाग्रे, इति युक्तमेव, देवगृहेऽपि स्थापनाचार्यस्थापनमिति? ॥

अत्रोच्यते स्यादेव इदं युक्तं यदि तीर्थकरे गुरुत्वं न स्यात्; सदपि वा यदि श्रुतधरैराद्दतं न स्यात् ॥ न चैतद् अस्ति द्वितीयस्यापि अस्य आगमे व्यवस्थापितत्वात्, तथाहि-व्यवहारदशमोद्देशकप्रान्तभाष्ये "दसविहवेयावच्चं इमं समासेण होइ विन्नेयं। आयरियउवज्झाए थेरेय तवस्सि सेहेयं ॥१॥ अतरंतकुलगणे या, संघे साहम्मि वेयावच्चेय। एएसिं तु दसण्हं कायव्वं तेरसपएहिं ॥ २ ॥ इति गाथाभ्यां दशविधवैयावृत्त्ये उक्ते परः प्राह तित्थयरवेयावच्चं न भणियमित्थं तु किं न कायव्वं ॥ किं वा न होइ निज्जर तहियं अह चेइयायरिओ ॥ १ ॥ आयरियग्गहणेणं तित्थयरो तत्थ होइ गहिओ उ। किं च महोपायरिओ आयारं उवदिसंतो य निदरिसणत्थ जह खंदएण पुट्ठो य, गोयमो भयवं केण उ तुम्हं सिट्ठं धम्मायरिएण पव्वाहेत्ति ॥ तथा भगवत्यामपि कूणिकसंग्रामे गाढप्रहारजर्जरिताङ्गो नागपौत्रो वरुणनामा पर्यन्ताराधनाभिमुखः प्राह-"नमोत्थुणं समणस्स भगवओ महावीरस्स आइगरस्स जाव संपाविउकामस्स मम धम्मायरियस्स त्ति" तदेतैः सिद्धान्ताक्षरैः श्रीमहावीरस्य धर्माचार्यत्वे "ठवणा वि य नियगुरुणो गुत्ते भंते त्ति जेण

गुरु" इति विशेषावश्यकगाथया 'आयरियभत्तिराओ कस्स सुनक्खत्तम-
गणहारी ॥ आमंतइ तित्थयरं, सेसा अप्पप्पणा य गुरुत्वे च व्यवस्थापिते, निश्री-
हरिसी सरिसो ॥ अवि जीविअं ववसिअं न चेव गुरुपरिभवो सहिओ' इत्युपदेशमालागाथया च गुरुत्वे च व्यवस्थापिते, निश्री-
यते तीर्थकरत्वगुरुत्वयोर्नैकत्र विरोधः ॥ १३ ॥ ततो यथा प्रत्यक्षस्य अर्हतोऽग्रे भावार्हत्त्वसद्भावात् शक्रस्तवादिभणनं, गुरुत्व-
सद्भावात् सामायिकादिग्रहश्च क्रियते ॥ तथा परोक्षस्य तस्यैव स्थापनाया अग्रे शक्रस्तवादिभणनमिव इर्यापथिकी प्रतिक्रमणमपि
क्रियते एव ॥ यदि स्वकीयो धर्माचार्यस्तत्र प्रत्यक्षो न स्यात्, प्रत्यक्षे च गुरौ गुरोरेव अग्रे प्रतिक्रम्यते, नार्हद्बिम्बस्याग्रे ॥
गुरुविरहम्मि य ठवणा त्ति, वचनात् नहि अर्हति साक्षाद्दृश्यमाने तं विहाय तद् बिम्बं वन्द्यते ॥ एवं हि पुरिमतालनगरशकट-
मुखोद्यानान्तराले समवसृतं श्रीमहावीरम् अतिक्रम्य श्रीमल्लिनाथचैत्यार्चनिकानिमित्तं गच्छन् वागुरुश्रेष्ठी शक्रेण यन्निवारित-
तद् असमीचीनम् एव स्यात्, न चासमीचीनम्, आवश्यकचूर्णावुक्तत्वादिति, चैत्ये पृथग्स्थापनाचार्यस्थापननिषेधः ॥
इति चतुर्विधस्यापि संघस्य अनुष्ठानालम्बनत्वेन साधिते स्थापनाचार्ये कश्चिदाह—न श्राविकाभिरसौ संघट्टनीयः, चारि-
त्रित्वेन अध्यवसितत्वात्, साक्षाद् गुरुवदिति ॥ तास्तं स्पृशन्त्येव न कथं प्रत्युपेक्षिष्यन्ते येन तद् विषया पृच्छा क्रियते इति?
अत्रोच्यते, यद्येवं तर्हि तासां वन्दनकमपि दातुं नोचितं, मुखानन्तके त्वन्मतेऽञ्चले वा, वन्द्यपादद्वयं संस्थाप्य वन्दनकस्य
दीयमानत्वेन गुरुसंघट्टनस्य अवश्यंभावेन जायमानत्वात् ॥ अन्यथा अधःकायस्पर्शनस्य अभावात् तदनुज्ञापनं स्वकायस्पर्श-
वशोद्भूतवन्द्याधःकायक्रमक्षामणं चासमीचीनमेव स्यात् ॥ अथ अञ्चलोपरि प्रवर्त्तिनीपादौ स्थापयित्वा वन्दनकं ता ददति, न

एवंहि सर्वथैव गुरुवन्द्य एव तासां प्रसजति ॥ नहि प्रवर्तिनीवन्दनकेन स वन्दितो भवति ॥ नापि प्रवर्तिनीगुणराशिव्यतिक्रमणादिपृच्छया स पृष्टो भवति, तदाहि अन्येन भुक्ते अन्यस्य तृप्तिः स्यात् ॥ किं च त्वन्मते व्रतिनीनामपि अग्रे श्राद्धा वन्दनकं ददति ॥ तच्च अत्यन्तमनुचितमेव स्यात् ॥ आर्यिकासंघट्टनस्य विशेषतस्तेषां परिहार्यत्वात् ॥ अथ कल्पितस्य तदधःकायस्पर्शेऽपि न दोष', पारमार्थिकस्यैव तस्याऽस्पृश्यत्वात्, एवं तर्हि श्राविकाभिरपि स्थापनाचार्यः संघट्टनीय एव स्यात् कल्पिताचार्यत्वात् ॥ कल्पितगुर्वधःकायवत् ॥ अपि च एता भवन्मते पूजाक्षणेऽर्हत्प्रतिमां स्वहस्तेन स्पृशन्त्येव, तथा च हेतोरनेकान्तिकता, चारित्रित्वेन अध्यवसितस्यापि अर्हद्बिम्बस्य स्त्रीभिः संघट्टयमानत्वात् ॥ किं च स्थाप्ये इव स्थापनायां वर्ज्यते इति स्थितिः ॥ स्थाप्यश्चात्र ब्रह्मचारी गुरुः, तस्य च व्रतमालिन्यहेतुत्वात् श्राविकाभिः स्वसंघट्टो वर्ज्यते एवेति ॥ ततः स्थापनायामपि असौ वर्ज्यते एवेति, संघट्टकवर्जनार्थम् आसां स्थापनाचार्यो निषिध्यते इति ॥

यदि तदा व्रतिनीनाम् असौ विशेषतो निषिध्यतां, ताभिः स्थाप्येऽपि च व्रतमालिन्यहेतुत्वेन, तत्र स्वसंघट्टस्यातिशयेन वर्ज्यमानत्वात्, नच आर्यिकाः स्थापनाचार्यं न संघट्टन्ते, त्वन्मतेऽपि ताभिस्तस्यैव अग्रेऽनुष्ठानस्य समाचर्यमाणत्वात्, तदर्थं प्रतिलिख्यमानत्वाच्च, अन्यथा 'गुरुविरहम्मिय ठवणा' इत्यस्य व्याघातः, ततश्च न संयतीभिः स्थापनाचार्यः संघट्टनीयः चारित्रित्वेन अध्यवसितत्वाद्, साक्षाद्गुरुवद् इत्यनेन यः पुरुषत्वेन अध्यवसितः सोऽचेतनोऽपि ब्रह्मव्रतगुप्त्यर्थं संयतीभिर्न संघट्टनीयः, यथा, सुप्तमदमूर्च्छितमृतपुरुषकायः ॥ तथा च स्थापनाचार्य इत्यनेन, वा प्रसङ्गानुमानेन बाधितत्वात् भवदीयम् अनुमानं न स्वसाध्यं

साधयितुम् अलम् ॥ ततस्तस्य प्रतिलेखनस्थापनादिकालेस्पर्शनेऽपि न कश्चिद् दोषः ॥ नापिहेतु-
अथ आर्यिकास्तत्र निजमहत्तरां स्थापयन्ति, तथाकरणप्रसङ्गात् च, तस्माद्यथा चारित्रित्वेन
र्वाधितइति ? चेद् न स्थापनाचार्यव्यपदेशव्याघातप्रसङ्गात् ॥ श्राविकानामपि
अध्यवसितमपि स्थापनार्हंतं पूजाद्यर्थं स्पृशन्ति, श्राविकास्तथा स्थापनाचार्यम् अपि ॥ यथा चैनम् आर्यिकाः प्रत्युपेक्षन्ते
तथा श्राविका अपीति सिद्धः श्राविकाणामपि स्थापनाचार्यः ॥ एवं च श्राविकाप्रतिलेखितस्थापनाचार्याग्रे वन्दनकाद्यनुष्ठानं
कर्तुं श्राद्धस्य कल्पते नवेति यत्पृष्टं तत्रोत्तरम् आह—
कप्पइ न एगकालं, वंदणसामाइयादि काउं जे ॥ एगस्स पुरो ठवणायरियस्स य सड्ढसड्ढीणं ॥ २७ ॥
व्याख्या—कल्पते संगच्छते श्राविकाप्रतिलेखितस्थापनाचार्यस्यापि अग्रे सामायिकाद्यनुष्ठानं कर्तुं, श्रावकस्य, वृद्धानुमत-
त्वात्, सधवस्त्रीप्रोंखिताहर्द्बिम्बाग्रे चैत्यवन्दनमिव, यदि पुनः स्त्रीकृत इति प्रतिलेखनाप्रमार्जने पुरुषस्य अकल्प्ये स्यातां तदा त-
द्दिनदीक्षितस्योपाश्रयागतस्य द्रमकसाधो—रुपवेशनार्थं भगवती आर्यचन्दना स्वकीयम् अनुपभुक्तमासनं न अदापयिष्यत्,
साध्वीप्रतिलेखितत्वेन तस्य साध्वनुपभोग्यत्वात्, दापितं चेदं तया, तस्माद् ज्ञायते स्त्रीकृते अपि प्रतिलेखनाप्रमार्जने पुरुषस्य
कल्पे एव ॥ अत एव, स्त्रीप्रमार्जितेऽपि स्थाने स्त्रीप्रतिलेखितैरपि, मुखानन्तककाष्ठासनाद्युपकरणै—रावश्यकं समाचरन्ति श्राद्धाः ॥
गृहीते च सामायिके शीतार्त्ताः स्त्रीप्रतिलेखितामपि प्रच्छादिकां प्रावृण्वन्तीति भावः ॥ न पुनः कल्पते एककालं समकालं

वन्दनसामायिकादीति, उभयपदोपादाने कारणं प्रागेव उक्तं, समासस्तु सुगम एव, कर्तुम् अनुष्ठातुं जे इतिपादपूर्त्तौ, इजेराषाद-पूरणे ॥ २ ॥ २१७ ॥ इति वचनात् एकस्य स्थापनाचार्यस्य पुरः चः पुनरर्थो यथास्थानं योजित एव श्राद्धश्राद्धिकानां श्रावकेषु प्रारभ्य वन्दनाद्यनुष्ठानं कृत्वा प्रभूतेषु एव श्राविकाः प्रारभन्ते ॥ श्राविकासु वा प्रारब्धम् अनुष्ठानं कृत्वा प्रभूतासु एव श्राद्धाः प्रारभन्ते, न पुनरेकेषु कुर्वत्सु अपरे युगपद् वा द्वयेऽपि प्रारभन्ते इत्यर्थः ॥

अयमभिप्रायः यथा गुरोरग्रत एकं श्राद्धं पुरस्कृत्य तत्पृष्ठलग्नाः श्राद्धाः श्राद्धिकाश्च मिलिता एव, पुरस्थश्राद्धानुसारेण वन्दनकाद्यनुष्ठानं कुर्वन्ति तथा गुर्वभावे पोषधशालायां स्वगृहेऽन्यत्र वा क्वापि मिलित्वा एकस्यैव स्थापनाचार्यस्य अग्रे सहैव न कुर्वन्ति ॥ अनेकदोषोद्भवसंभावनया वृद्धानाम् असंमतत्वात् ॥ यदि पुनरिदं वृद्धानां संमतम् अभविष्यत्, तदा स्थापनाचार्यस्य इव देवगृहे देवस्यापि अग्रे गुरुणा इव वृहत्तरश्रावकेणापि समं श्राविकाश्चैत्यवन्दनाम् अकरिष्यन्, नच कुर्वन्ति, तथा प्रवृत्तेरनागतत्वात् ॥ ततो ज्ञायते वृद्धानाम् असंमतमिदम्, इति ॥ नच वाच्यम् एवं तर्हि गुरुप्रेषितलेखस्यापि अग्रे उभयेऽपि अमी मिलित्वा वन्दनकं ददत्येवेति ॥ तस्य कदाचित्कत्वेन ॥ तथा दीयमाने वन्दने दोषाभावात् ॥ किंच नित्येष्वेव कृत्येषु विध्यतिक्रमो दोषाय, न नैमित्तिकेषु, तेषां क्वचित्कथंचिन् क्रियमाणत्वात्, तथाहि शान्तिपर्वणि शान्तिदेववन्दनं श्राद्धैरपि समं श्राविकाः कुर्वन्त्येव, पृथगस्तुतिस्तोत्रभणनात् लेखाग्रे वन्दनकमपि नैमित्तिकमेव, ततः शान्तिदेववन्दनम् इव, इदमपि श्राद्धैः सहैव कुर्वन्ति ॥ अपि च प्राघूर्णकगुरोरिव गुरुप्रेषितलेखस्याग्रे श्राद्धैः सह वन्दनं ददतीषु स्त्रीषु प्रायः शुभ एव भावो

भवति ॥ तदाऽऽगमनोच्छलितापूर्वानन्दपूरैकव्यासान्तःकरणत्वाद्, उभयेषां, लोकोऽपि च तादृशीं गुरुभक्तिम् आलोक्य प्रायः प्रशंसन् बोधिबीजम् अर्जयतीति भावः ॥ २७ ॥

निर्गुणेऽपि व्याख्यातरि श्रोतव्य एव, किम् अमेध्यात् न गृह्यते काञ्चनमपि, जिनधम्मो हि श्रूयमाणः परमपदहेतुरतोऽसौ कस्यापि मतम् आकर्ण्य संशयानः पृच्छति ॥

**उस्सुत्तभासगाणं चेइयहरवासिदव्वलिंगीणं ॥ जुत्तं किं सावयसावियाणं वक्खाणसवणं त्ति ॥ २८ ॥**

व्याख्या—उत्सूत्रभाषकाणाम् आगमोत्तीर्णवादिनां, चैत्यगृहवासिनो मठपतयः, उपलक्षणत्वाद् अचैत्यगृहवासिनश्च, ते च ते द्रव्यलिङ्गिनश्च, वेषमात्रोपजीवका—स्तेषां चैत्यगृहवासिद्रव्यलिङ्गिनां, युक्तं संगतं, किं, प्रश्ने, श्रावकश्राविकाणां व्याख्यानश्रवणम्, उपदेशाकर्णनम्, इति पृच्छासमाप्तौ, इदमाकूतं, पार्श्वस्थादिभिर्व्याख्यायमानानि, धर्मशास्त्राणि श्रोतुं कल्पन्ते नवा इत्यर्थः ॥ २८ ॥ तत्रोत्तरं

**तित्थे सुत्तत्थाणं, सवणं तित्थं तु इत्थ णाणाई ॥ गुणगणजुओ गुरू खलु, सेससमीवे न तग्गहणं ॥ २९ ॥**

व्याख्या—तीर्यते संसारसमुद्रोऽनेनेति तीर्थं, तस्मिन् सूत्रं सिद्धान्तः, अर्थस्तदभिधेयं, सूत्रं च अर्थश्च सूत्रार्थौ तयोः प्राकृतत्वात् बहुवचनं, श्रवणम् आकर्णनं, ग्रहणमिति यावत् युक्तमिति शेषः, तीर्थंपुनरत्र जगति, ज्ञानादिगुणगणयुतः, ज्ञानदर्शनचारित्रादिगुणयुक्तः ॥ एवंविधस्यैव, संसारसमुद्रतरणकारणत्वात्, गुरुः यथावस्थितवस्तुवादी खलु, निश्चयेन, यत उक्तम्—

अङ्गंडिगयारित्तो वयग्गहणाओ य जो भवे तित्थं ॥ तस्स सगासे दंसणवयग्गहणं तह य सोहीय ॥

तथा, उओयओ व्व सूरो, फलओ कप्पदुमुव्व, आयरिओ चिंतामणिव्व, सुहओ जंगमतित्थं पणिवयामि ॥ इति शेषस्य द्रव्यलिङ्गिनः ज्ञानादिगुणविकलत्वेन परिग्रहारम्भमग्नत्वेन च मनोदधिपातहेतुतया अतीर्थत्वात्, यदुक्तं,

परिग्रहारम्भमग्ना–स्तारयेयुः कथं परान् ॥ स्वयं दरिद्रो न परमीश्वरीकर्तुम् ईश्वरः ॥ १ ॥

समीपे पार्श्वे, नो निषेधे, तद्ग्रहणं सूत्रार्थग्रहणं, युक्तमिति शेषः ॥ ननु पार्श्वस्थादीनां तदैव अतीर्थत्वं यदा एषां मिथ्यादृष्टित्वं सेत्स्यति ॥ तदेव च दुःसाध्यमस्ति, तथाहि किम् एषां मिथ्यादृष्टित्वं निश्चयनयावलम्बनेन अभिधीयते, व्यवहारनयावलम्बेन वा, नाद्यः निश्चयतस्तस्य सतोऽपि छद्मस्थैर्दुरधिगमत्वात् ॥ अदेवागुर्वतत्त्वेषु हि देवगुरुतत्त्वबुद्धि–र्मिथ्यादृष्टित्वं तस्याश्च क्वापि क्रियाहीनेषु अपि असंभवात्, क्वापि क्रियायुक्तेष्वपि संभवात्, अर्वाग्दर्शिभिर्निश्चेतुम् अशक्यत्वात् ॥ ततः कथं पार्श्वस्थादयो मिथ्यादृष्टितयाऽभिधातुं शक्याः ॥ नापि द्वितीयः व्यवहारतस्तेषु मिथ्यादृष्टित्वस्य अप्रसिद्धेः, तथाहि प्रयोगः विवादास्पदीभूताः साधवः, सम्यग्दृष्टितया व्यवहर्तव्याः, सुसाधूनामपि आपवादिकवन्दनादिव्यवहारयोग्यत्वात्, ये तु तथा व्यवहिपन्ते, न ते तथा, वन्दनादिव्यवहारयोग्याः, यथा दिग्वाससः ॥ न च न तथा अमी, तस्मान्न तथा ॥ एते न. व्यवह-

१ मिथ्यादृष्टितया व्यवह्रियन्ते ॥ २ सुसाधूनामापवादिकवन्दनादिव्यवहारविषया न इति न च, किन्तु आपवादिकवन्दनादिव्यवहारयोग्या एव ॥ ३ न मिथ्यादृष्टि व्यतिरेकात् ॥

र्त्तव्या इति ॥ वन्दनादिव्यवहारो हि गुणवतामेव तावदुत्सर्गतः क्रियते, गुणवत्परिज्ञानं च निश्चयतः केवलज्ञानादिप्रत्यक्षज्ञानात्,
व्यवहारतस्तु सिद्धान्तोक्तलक्षणयुक्तेः, यतः "गुणाहिए वन्दणयं, छउमत्थो गुणागुणे अयाणंतो । वंदिज्ज च
गुणहीणं गुणाहियं वावि नो वंदे ॥ १ ॥ इति पूर्वपक्षम् आशंक्य उक्तं" निच्छयओ दुन्नेयं कोभावे कम्मि वट्टइ
समणो । ववहारओ उ कीरइ, जो पुव्वट्ठिओ चरित्तंम्मि ॥ २ ॥ आलोएणं विहारेणं ठाणे चंकमणेण य ।
सक्का सुविहिओ नाउं, भासा वेणइएण य ॥ ३ ॥ इत्युत्सर्गतस्तावद् गुणवद्भ्य एव वन्दनादिव्यवहारः, अपवादतस्तु
निर्गुणानामपि लिङ्गप्रवचनसाधर्मिकाणां, पार्श्वस्थादीनामपि क्रियते एव । तथा च । आवश्यके जगुर्जगत्पूज्याः श्रीभद्रबाहुस्वा-
मिपादाः "मुक्कधुरासंपागडसेवी चरणकरण पब्भट्ठो । लिंगावसेसमित्ते जं कीरइ तं पुणो वुच्छं" अत्र धूः शब्देन
संयमधुरा परिगृह्यते, तथा च मुक्तसंयमधुरश्चासौ संप्रकटसेवी चेति विग्रहः शेषं सुगमं "वायाए नमोक्कारो हत्थुस्सेहो
य सीसनमणं च । संपुच्छणं छणं छोभवंदणं वावि" सुगमा एतच्च नमस्कारादि नाऽविशेषेण क्रियते किं तर्हि "परिया-
यपरिसपुरिसं खित्तं कालं च आयमं नाउं । कारणजाए जाए जहारिहं जस्स जं जुग्गं" एतदेव विवृणोति

'परियाओ बंभचेरं, परिसविणीया से पुरिस नच्चा वा । कुलकज्जा दायत्ता, आघवओ गुणागमसुयं वा ॥ १ ॥

अस्या व्याख्या—पर्यायो ब्रह्मचर्यम् उच्यते, तत् प्रभूतं कालम् अनुपालितं येन, परिषद् विनीता तत्प्रतिबद्धासाधुसंहतिः
शोभना 'से' अस्स पुरिसनच्चावत्ति, पुरुषं ज्ञात्वा चाऽनुस्वारोऽत्र द्रष्टव्यः । कथं ज्ञात्वा कुलकार्यादीनि अनेन आयत्तानि आदि

शब्दात् गणमंथकार्यपरिग्रहः आयरओत्ति आख्यातस्तस्मिन् क्षेत्रे प्रसिद्धस्तद् बलेन तत्रास्ते इति क्षेत्रद्वारार्थः 'गुणागमसुयंरत्ति, गुणा ओमप्रतिजागरणादय इति कालद्वारार्थः आगमः सूत्रार्थोभयरूपः, श्रुतं सूत्रमेव गुणाश्च आगमश्च श्रुतं चेति एकवद्भावः, तइ रा यस्य विद्यते इत्येव ज्ञात्वा इति । एतदर्थमेव गाथाद्वयम् आह—

"खित्तम्मि मरमिज्जइ, तस्स पभावेण निरुवसग्गं तु । ओमम्मि य परिनप्पइ साहूणं आगमट्ठ य ॥ १ ॥
एवं निस्स कुज्जा उप्पन्ने कारणप्पगारम्मि । कलिऊण जहाजोग्गं वायाईणि समग्गाणि ॥ २ ॥
(निगदसिद्धं) एयाइ अकुव्वंतो, जहा रिहं अरिहदेसिए मग्गे । न भवइ पवयण भत्ति अभत्तिमंतादयो दोसा ३

व्याख्या—एतानि वाक् नमस्कारादीनि रोपोत्कटतया अकुर्वतोऽनुस्वारोऽत्र लाक्षणिकः, यथार्हं, यथा योग्यम्, अर्हद् दर्शिते मार्गे, न भवति प्रवचनभक्तिः, ततः किम् इत्याह 'अभत्तिमंतादयो दोसा, प्राकृतशैल्याऽभक्त्यादयो दोषाः, आदिशब्दा-त्स्वार्थभ्रंशबन्धनादय इति गाथार्थः ॥ इत्यावश्यके पार्श्वस्थादिभिः समम् अपवादतो वन्दनादिव्यवहार उक्तः, तस्माद् आप-वादिकोऽपि वन्दनादिव्यवहारो नान्यै-मिथ्यादृष्टिभिः सह विहितः, पार्श्वस्थादिभिस्तु सह विहित इति कृत्वा 'निच्छयनयस्स चरणस्सुवघाए नाणदंसणवहोऽवि ववहारस्स उ चरणे हयम्मि भयणाओ सेसाणं । इत्यागमादपि अमी व्यवहारतः सम्यग् दृष्टित्वेनैव व्यवहर्तव्याः इति ? ॥ अत्र समाधीयते, व्यवहाराम एव सम्यग्दृष्टितया पार्श्वस्थादीन् यदि आगमे भणितं स्यात् । नहि अस्माकम् एतदुपरि कश्चिद् द्वेषोऽस्ति, येन अमीषां गुणं मन्तमपि अपलपिष्यामः । किन्तु आगमे 'जो जह वायं न कुणइ

मिच्छादिट्ठी तओ हु को अन्नो । वड्ढइ य मिच्छत्तं परस्स संकं जणेमाणो, इत्यादिना मिथ्यादृष्टितया एव एते व्यवहर्त्तव्या इत्युक्तम् अस्ति, तत्किं कुर्मः, यच्च तेषां मिथ्यादृष्टित्वं किं निश्चयतो व्यवहारतो वेत्यादिना विकल्पद्वयेन आशङ्क्य, नाद्यो, निश्चयतस्तस्य छद्मस्थैर्दुरधिगमत्वाद्, इत्यादिना दूषितं, तत्रोच्यते अर्हन्मतबाह्यलोकानां मिथ्यादृष्टित्वं निश्चयनयेन ज्ञातुं न शक्यते शक्यते वा, यदि आद्यस्तर्हि तेऽपि मिथ्यादृष्टित्वेन न व्यवहर्त्तव्याः ॥ अथ द्वितीयः तर्हि कथं तज्ज्ञातुं शक्यते ? जिनोक्तजीवाजीवादिपदार्थानाम् अश्रद्धानाद् वा, विपरीतप्ररूपनाद् वा, संशयकरणाद्वा, अनादरणाद्वा, इतिचेद्, एवं तर्हि यद्येतानि अश्रद्धानादीनि द्रव्यलिङ्गिष्वपि भवन्ति तदा तेऽपि निश्चयतोऽपि मिथ्यादृष्टितया ज्ञातुं शक्यन्ते एव, अथ एतानि तेषु न भवन्त्येव, किमराज्ञाम् आज्ञा, आगमे हि जमालिप्रभृतिषु तत्सद् भावस्य उक्तत्वात् ॥ अथ एतानि एतेषु भवन्ति, परं ज्ञातुं न शक्यन्ते, तर्हि लौकिकेषु कथं ज्ञातुं शक्यन्ते, येन ते मिथ्यादृष्टितया व्यपदिश्यन्ते । प्रत्यक्षादि प्रमाणादितिचेद् हन्त! इदं प्रमाणं लिङ्गिष्वपि प्रवर्तते एव । किं न ज्ञातं विजयसेनसूरिशिष्यै रात्रौ स्थण्डिलविप्रकीर्णाङ्गारनिर्दयमर्दनरूपतच्चेष्टितदर्शनेन रुद्रदेवाचार्यस्य जीवाद्यश्रद्धानम्, एवम् अधुनाऽपि प्रत्यक्षादिप्रमाणवशात् लिङ्गिष्वपि अश्रद्धानादीनि निश्चीयन्ते एव । तथाहि सचित्तविराधनादि प्रतिषेद्यार्थनिःशङ्कप्रवृत्त्याऽश्रद्धानं, सुविहिताचार्यपरम्परागतसामाचार्यादिव्यतिक्रमकरणेन विपरीतश्रद्धानं, देवप्रतिबद्धस्थावरप्रायोग्यकूपवाटिकादिजिनमतविरुद्धार्थप्रवर्त्तकत्वेन, विपरीतप्ररूपणं, स्वमतपरमतसमतादर्शनेन संशयकरणं, प्रतिलेखनाप्रमार्जनादिक्रियाशैथिल्याद् अनादरणं चेति, ततो निश्चयतोऽपि मिथ्यादृष्टय एव

एते। अत एव आवश्यके उन्मार्गप्रवर्तकत्वेन ज्ञानदर्शनचारित्रापगमे जाते, लिङ्गिनाम् अवलोकनमात्रमपि संसारकारणम्, इति न कर्त्तव्यमेव इदम् इत्युक्त, यथा "उम्मग्गदेसणाए चरणं नासिंति जिणवरिंदाणं। वावन्नदंसणा खलु, नहु लब्भा तारिमा दट्ठु ॥ १ ॥ जिनवरेन्द्राणां सम्बन्धिभूतं चरणं नाशयन्ति, आत्मनः, व्यापन्नदर्शना विनष्टसम्यग्दर्शनास्ता-दृशा द्रष्टुमपि न लभ्या न कल्पन्ते इत्यर्थः ॥ किं पुनस्तैः सह संवासादयः, खलु शब्दात् यद्यपि केचित् तदन्तःपातिनस्ताहग् अभिनिवेशाभावात् भगवत्प्रतिपादिततत्त्वश्रद्धालुतया निश्चयनयेन अव्यापन्नदर्शनास्तथापि व्यापन्नदर्शना इव द्रष्टव्याः। अतस्तेऽपि तदङ्गपङ्कविलुण्ठनपङ्किलतया 'पक्कणकुलेवसंतो' इत्यादि आगमन्यायेन मातङ्गसङ्गदूषितद्विजाङ्गजवत् द्रष्टुमपि न कल्पन्ते तथा च आवश्यकचूर्णिः "दट्ठुमपि न कप्पंति किमंग पुण संवासो, संभुंजणा संथवो वा, खलु सद्दा जेवि केइ निच्छयवि-हीए अवावन्नदंसणा, तहवि वावन्नदंसणा इव दट्ठव्वा। ते य दट्ठुं पि न लब्भा न कप्पंति ॥ एवं च यदा निश्चयनयेन केचि-त्सम्यग्दृशोऽपि तदन्तर्वर्गिपातुलतया मिथ्यादृष्टिदेशीयतया उपपादितास्तदा केव कथा उन्मार्गदेशिनां, व्यवहारतो 'मिथ्यादृ-ष्टित्वप्रसादनाविधौ, यदपि व्यवहारतो लिङ्गिनां सम्यग्दृष्टित्वसाधनाय, विवादास्पदीभूताः साधवः सम्यग्दृष्टितया व्यवहर्त-व्या इत्यादि व्यतिरेकानुमानम् उपन्यस्तं, तदपि न चारु, साध्यविपर्ययव्याप्तत्वेन हेतोर्विरुद्धत्वात् तथाहि अत्र साध्यं पार्श्व-स्थादीनां सम्यग्दृष्टितया व्यवहर्त्तव्यत्वं, तस्य च विपर्ययः सम्यग्दृष्टितया अव्यवहर्त्तव्यत्वं, तेन च व्याप्तः प्रकृतो हेतुः, निश्चितातिशयग्रन्थार्थं हि परतीर्थिकोऽपि तद्वेदित्वात् उपचर्यते सुविहितैः, स च सम्यग्दृष्टितया अव्यवह्रियमाण एव, सुगा-

निमित्तं हि तावत् प्रवचनप्रभावनाहेतु-रिति, सुविहिताः शिक्षन्ते एव, केवलम्
धूनाम् आपवादिकवन्दनादिव्यवहारयोग्यः, यदि पुनः भूताधिकरणत्वात्, तपःक्षय-
आजीवकाद्यर्थं गृहस्थानाम् अग्रे न कथयन्ति, भूताधिकरणत्वात्, तपःक्षयहेतुत्वाच्च, "अइसेसदेवया वा निमित्तग्गहणं सयं च सीसो च" इत्यादि
हेतुत्वाच्च, इदमंशिक्षणीयं स्यात्, तदा यद्, उक्तम् ओघनिर्युक्तौ 'अहवा आयरिएणं सुत्तत्थेसु निम्मा-
गाथाविवरणे अतिशयोऽवध्यादिस्तदभावे क्षपकादिगुणाकृष्टा देवता कथयति सीसो गहणधारणसंपन्नो निव्वि-
एणं सयमेव निमित्तं घित्तव्वं ॥ अहवा आयरिएणं सुत्तत्थेसु निम्माएणं सीसस्स, देइ, जाहे सो न
कारी जो सो गिण्हाविज्जइ जदा आयरिओ वुड्ढो हवइ, तया अविकारिस्स, सीसस्स, देइ, जाहे सो न
होज्जा, ताहे अन्नो कोइ पुच्छिज्जाहिइ त्ति ॥ तदसमीचीनमेव स्यात्। तस्मात् शिक्षन्ते एव, केवलं यदा तद् वेदिनः
स्वतीर्थ्या न लभ्यन्ते, तदा मनाक् लाघवसंभवेऽपि परतीर्थिकानामपि पार्श्वे शिक्षन्ते एव, यदि पुनः प्रवचनलाघवहेतुत्वाद्
अन्यतीर्थिकानां पार्श्वे इदम् अशिक्षणीयम् अभविष्यत्। तदा श्रीकालिकाचार्य आजीवकानां पार्श्वे न अशिक्षिष्यत निमित्तं
युगप्रधानत्वात्, शिक्षितं च तत्तेन यदुक्तं पञ्चकल्पभाष्ये

मेहावी सीसम्मीओ हामिएकालगज्जथेराणं। सज्झंतिएण अह सो रिवं भंतेणं इमं भणिओ ॥

संज्झंतिएण ॥ प्रातिवेश्मिकेनेति, अइ वहुयं मेधीयं नयनाओ तारिसो मुहुत्तो उ। जत्थ थिरो होइ, सेहो, निक्खंतो अहो
हु वोदत्तं ॥ २ ॥ वोद्रत्वं मूर्खत्वं, तो एव स ओमत्थं, भणिओ, अहं गंतु सो पइट्ठाणं । आजीविसगासम्मी, सिक्खइ ताहे

निमित्तं तु ॥ ३ ॥ मओ मत्थंति मागमार्थं सनन्दमित्यर्थः तस्मात् ज्ञायतेऽन्यतीर्थिकानामपि पार्श्वेऽतिशायिन्यो विद्याः शिक्ष्यन्ते एव । नच वाच्यं ताः शिक्ष्यन्त एव, केवलं वन्दनाद्युपचारस्तेषां न क्रियते असंयतत्वात् । प्रवचनप्रत्यनीकत्वाच्चेति ? तमन्तरेण तल्लाभस्य असंभवात्, विद्या हि विनयेन धनेन विद्यया वा लभ्यते, नान्यथा, यदुक्तम्

विनयेन विद्या ग्राह्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नैव कारणम् ॥

इति तत्र साधुभि-र्विनयेनैव केवलेन विद्या गृह्यते, न धनेन निर्ग्रन्थत्वेन तस्य अभावात् । नच निजविद्यया अधिकरणहेतुत्वेन तद्दानस्य साधूनाम् अनुचितत्वात् । यद्वा दीयतां कथमपि धनं स्वविद्या वा, तथापि तदनपेक्षित्वात् प्रतिपत्तिमात्रप्रियत्वाद्वा कश्चिद्विनयवृत्तिमन्तरेण नार्पयति स्वविद्यां, तदा सापि निस्सागारिके किंचित् क्रियते, अतिशायिविद्यालाभस्य महागुणत्वात्, यदि पुनः सम्यक्त्वहानिहेतुत्वात्, प्रवचनमालिन्यकारित्वाच्च, तद्विद्याग्रहणकालेऽपि अन्यतीर्थिकानां वन्दनाद्युपचारो विधेयो न अभविष्यत्, तदा तद्विधिरपि आगमे न अभणिष्यत । भणितश्चायं तथाहि-पञ्चकल्पभाष्ये 'थूभपणामे जिणपणामं, इति अस्यायम् अर्थः—बौद्धपार्श्वे प्रवचनोन्नत्यर्थं विद्यां गृह्णन्तः साधवस्तदनुवृत्त्या तत्स्तूपं प्रणमन्तो जिनप्रणाममेव मनसा कुर्वन्तीति, तस्मान्निश्चितं विधेय एव असौ, अन्यथा विद्याग्रहणासंभवात् । तथा च अयं हेतुः पार्श्वस्थादीनां मिथ्यादृष्टित्वमेव साधयति, तथाहि-विवादाध्यासिता, मिथ्यादृष्टयः, सुसाधूनामपि आपन्नादिकवन्दनादिव्यवहारयोग्यत्वात् ॥ परतीर्थिकस्तूपादिवत् ॥ यदि वा यो मिथ्यादृष्टिर्न भवति, स साधूनाम् आपन्नादिकवन्दनादिकयोग्यो न भवति, यथा सुश्रावकः,

सुमुनिर्वा । न च अमी न तथा, तस्मान्मिथ्यादृष्टय एवेति । यदपि एषाम् आपवादिकवन्दनादिसमर्थनार्थं 'मुक्कधुरा संपागडसेवी' इत्यादिना आवश्यकसूत्रवृत्त्योरनुवादोऽकारि, तेनापि न व्यवहारिकसम्यग्दृष्टितया, नापि चारित्रितया, तेषां तत्समर्थ्यते । अपि तु अनुवृत्तिं विना तेषाम् उपसर्गवर्गकारित्वादिति कारणेन इति सिद्धं मिथ्यादृष्टित्वम् एतेषां, तत्सिद्धौ चा तीर्थत्वमपीति न युक्तं लिङ्गिनां पार्श्वे सूत्रार्थग्रहणं, यदुक्तम्

आवल्गमानशिरसो यथाहि मातुःस्तनात् पिबतः ॥ १ ॥
क्षीरं भाजनसंस्थं न तथा वत्सस्य पुष्टिमावहति । न तथा पुष्टिं जनयति, यथा गुणवतो मुखात्पीतम् ॥ २ ॥
तद्वत् सुभाषितमयं, क्षीरं दुःशीलभाजनगतं तु । शीलविपन्नस्य वचः पथ्यमपि न गृह्यते तद्वत् ॥ ३ ॥
शीतेऽपि यत्र लब्धो, न सेव्यतेऽग्नि-र्यथा श्मशानस्थः ॥ शीतलजलसंपूर्णः कुलजैश्चाण्डालकूप इव ॥ ४ ॥
चारित्रेण विहीनः श्रुतवानपि नोपजीव्यते सद्भिः ॥

इत्यतः पार्श्वस्थादीनां पार्श्वे निजबालका अपि सूत्रादि पाठयितुं न कल्पन्ते श्रमणोपासकानां, किं पुन-र्धर्मश्रवणम् इत्याशय इत्यर्थः ॥

संप्रतिसूत्रकारः स्वदत्तोत्तरस्य सैद्धान्तिकतां दर्शयितुं पूर्वाचार्यसंमतिमाह—भणितं च दर्शनसप्ततिकायां हरिभद्रसूरिभि र्यथा ॥

"इहरा ठवेइ कन्ने, तस्सवण मिच्छमेइ साहूवि ॥ अबलो किमु जो सड्ढो जीवाजीवाइअणभिन्नो ॥ ३० ॥

व्याख्या—इतरथा यदि यथाछन्दोपाश्रयेऽनन्यगत्या गतः सन् साधुस्तदारब्धधर्मकथा विघातार्थं प्रयुक्ता अन्ये उपाया विफलीभूता भवन्ति । तदा स्थगयति करादिना, पिधत्ते कर्णौ, श्रुती, नतु प्रथमत एव । प्रथमतस्तु वचनपाटवशक्तौ सत्यां तत्कथां निशमयन् व्याघातं करोति । यथा एतदेवं न भवति ॥ अथैवं तत्प्रतिघातं कर्तुं न शक्नोति, ततो ध्यानं करोति ॥ अथ तथापि स धर्मकथां करोति एव, तत उच्चैः स्वरेण स्वाध्यायं करोति ॥ यदि तथापि न तिष्ठति, तदा कर्णौ स्थगयति ॥ अथवा सुप्तः सन् घोरणं करोति, महता शब्देन, सोऽपि निर्विण्णः सन् उपसंहरति धर्मकथामिति ॥ यदुक्तम् ओघनिर्युक्तौ पार्श्वस्थादिस्थानगतादिसाधुविधिभणनानन्तरम् । एवमेव अहाछन्देपडिहणणाज्झाण अज्झयण कन्ना ठाणट्ठिओ निसामे सुवणाहरणायगट्ठिएण त्ति ॥ यः पार्श्वस्थादिस्थाने वसतौ विधिरुक्तः, एवमेवविधिर्यथाछन्दस्थानेऽपि स्थितस्य द्रष्टव्यः ॥ केवलम् अयं विशेषः, 'पडिहणणत्ति,' इत्यादि सुगमं 'सुवणाहरणायत्ति,' सुप्तः सन्नाहरणा घोरयति, घोरणं करोतीत्यर्थः ॥ गृहीतेनैव उपधिना तत्र तिष्ठति, विराधनाभयाद् इत्यर्थः ॥ किमिति तत्कथाविघातार्थमेनम् असौ करोति ॥ इत्यत आह तत् श्रवणात्, यथाछन्दवचनश्रवणात्, मिथ्यात्वम् एति, विपर्ययं याति, साधुरपि संभवन् निःशेषश्रुतावबोधो मुनिरपि यथाछन्ददेशनया विपरिणमति, किं पुनः श्रावक इत्यपेरर्थः ॥ तथा च आह किं पुनः किमत्र वक्तव्यं यः श्राद्धः श्रावकः अबलः सन् मार्गे विशिष्टावष्टम्भरहितोत्तरदानादौ असमर्थश्च, स तु सुतरां विपरिणमतीत्यर्थः ॥ अबलत्वे निमित्तमाह 'जीवाऽजीवाद्यनभिज्ञः, तथाविधागमग्रहणासंभवाद् इत्यर्थः ॥ ननु यदि द्रव्यलिङ्गिनां देशनापि श्रुता मतिभ्रंशहेतुस्तर्हि न श्रोष्यते एव,

यत: केचिद् वदन्ति पार्श्वस्थादयः छोभवन्दनादिना वन्धा एव, किन्तु यदा ते मार्गादौ मिलन्ति, तदा ते वन्द्यन्ते न वा ॥ तान् प्रति अपरे प्राहुः, किं पार्श्वस्थादीनां प्रतिपत्तिविशेषरूपं वन्द्यत्वं लिङ्गप्रवचनाभ्यां सुविहितसाधर्म्मिकत्वात् सुविहितवदिति ? तेहि केचिद् लिङ्गतः साध्यते, लिङ्गसाधर्म्मिकत्वेन प्रवचनसाधर्म्मिकत्वेन वा, नाद्यः निह्नवानामपि वन्द्यत्वप्रसङ्गात्, म्मिंका अपि न वन्द्यन्ते, ततो लिङ्गमात्रम् अप्रमाणमेव, यदुक्तम् ॥

जइ ते लिङ्गप्पमाणं, वंदाही निह्नवे तुमं सव्वे ॥ एए अवंदमाणस्स लिंगमवि अप्पमाणं ते ॥

तथा 'वेसो वि अप्पमाणो असंजमपएसु वट्टमाणस्स' इत्यादि ॥ यदि पुन—लिंङ्गमात्रं वन्द्यत्वे साधकम् अभविष्यत्, तदा नात्यक्षन् अङ्गारमर्द्दकं तच्छिष्याः, तस्य तथाविधधर्मपरिणामाभावेऽपि, लिङ्गमात्रसद्भावात् ॥ नापि द्वितीयः, श्रावकाणामपि त्थोभावन्दनादिना वन्द्यत्वप्रसङ्गात् ॥ तेषां प्रवचनसाधर्म्मिकत्वात् ॥ किं च पार्श्वस्थादीनां प्रवचनसाधर्मिकमेव असिद्धम् ॥ तन्मूलभूतस्य सम्यक्त्वस्य सिद्धान्ते तेषां निषिद्धत्वात् ॥ तथाहि ॥

तेसिं अजुत्तं चरणं, न य सम्मत्तं न देस चारित्तं ॥ समणगुणमुक्कजोगी, संसारपवड्ढगा भणिया ॥ १ ॥

तथा "अहमाहमेहिं नामायरिय उवज्झाय साहुलिंगीहिं ॥ जिणघरमढआवासो, पकप्पिओ सायसीलेहिं ॥२॥

तथा "संपागडपडिसेवी, काएसु वएसु जो न उज्जमइ ॥ पवयणपाडगपरमो, सम्मत्तं पेलवं तस्स ॥ ३ ॥

इत्यादि अत एव न जानाति इत्यादि भङ्गकरचनायां सम्यक्त्वहीने तृतीयभङ्गे एव चैत्यवासिन उक्ताः ॥ तथाहि भङ्गकर-

चनाप्रतिपादिका च इयं गाथा "चउसु न जाणइ य चउसु णब्भुपगमो य दुसु दोसु । अब्भुगमो न पालइ, पालइ एगंतरे अट्ट" इति ॥ स्थापना चैवं

| | | | |
|---|---|---|---|
| न जानाति | नाभ्युपगच्छति | न पालयति | सामन्न |
| न जानाति | नाभ्युपगच्छति | पालयति | जुड़ |
| न जानाति | अभ्युपगच्छति | न पालयति | चीवासि |
| न जानाति | अभ्युपगच्छति | पालयति | अचीयवा |
| जानाति | नाभ्युपगच्छति | न पालयति | मेणियाईणं |
| जानाति | नाभ्युपगच्छति | पालयति | एशुतरसुरं |
| जानाति | अभ्युपगच्छति | न पालयति | संनिग्गपक्खि |
| जानाति | अभ्युपगच्छति | पालयति | सुमन्निजइअट्ठ |

किंच जे इमे पासत्थाइणो, ते साहू साहूणि सावगसाविगा एगपक्खे वि न पडंति ॥ इत्यादिभिः कल्पाक्षरैः पार्श्वस्थादीनां प्रवचनबाह्यत्वमेवोक्तम्, इति कुतः प्रवचनसाधर्म्मिकत्वम्, अतएव ओघनिर्युक्तौ, जत्थ साहम्मिया बहवे भिन्नचित्ता, इत्यादि गाथायां साधर्म्मिका लिङ्गत इति साधर्म्मिकपदं विवव्रुः श्रीहरिभद्रसूरयो, न पुनः प्रवचनत इति ॥ एवं च असंभवेनैव तृतीयविकल्पो निरस्तः इति परस्परविरुद्ध मतद्वयोत्थसंशयप्रभवो पृच्छामनूद्योत्तरम् आह—

कीरइ न वत्ति जं दव्वलिंगिणो वंदणं इमं पुट्ठं ॥ तत्थेयं पच्चुत्तरं लिहियं आवस्सयाईसु ॥ ३१ ॥

व्याख्या—इदं वन्दनं स्तोभवन्दनं द्वादशावर्त्तवन्दनं वा द्रव्यलिङ्गिनो, वेशमात्रोपजीविनः, क्रियते नवेति यत्पृष्टं तत्र प्रश्ने एतद् वक्ष्यमाणरूपं, प्रत्युत्तरं, प्रतिवचनं, लिखितम् उपन्यस्तं दत्तमित्यर्थः ॥ आवश्यकादिषु आवश्यकम् आदिर्येषां ते तथा तेषु ॥ १ ॥ तथाहि

"ओसन्नो पासत्थो; होइ कुसीलो तहेव संसत्तो । अहछंदो वि य एए अवंदणिज्जा जिणमयम्मि ॥ १ ॥

दंसणनाणचरित्ते तवविणए निच्चकालपासत्था । एए अवंदणिज्जा जे जसघाई पवयणस्स ॥ २ ॥

उम्मग्गदेसणाए, इत्यादि ॥ इत्यावश्यके ॥

कुसीलोसन्नपासत्थे सच्छंदे सबले तहा । दिट्ठीएवि इमे पंच गोयमा न निरीक्खए ॥ २ ॥

पंच एए महापावे, जो नो वज्जेइ गोयमा । कुसीलो अहियट्ठीओ भमिही सो सुमई जहा ॥ २ ॥

जो य संसग्गो मोइन्नो घोरवीरं तवं चरे ॥ अवज्जंते इमे पंच कुज्जा सव्वं निरत्थयं ॥ ३ ॥

इति महानिशीथे ॥ एवमन्यत्रापि द्रष्टव्यमित्यर्थः ॥ ३१ ॥ एतच्चात्र तद्वन्दनकदोषदर्शकाऽऽवश्यकगाथाया लेशः आह—

पासत्थाई वंदमाणस्स नेव कित्ती न निज्जरा होइ । कायकिलेसं एमेव कुणइ तह कम्मबंधं च ॥ ३२ ॥

व्याख्या—पार्श्वस्थादीन् वन्द्यमानस्य नमस्कुर्वतो, नैव कीर्त्तिर्न निर्जरा भवति ॥ तत्र कीर्त्तनं कीर्त्ति रहो अयं पुण्यभाग्

इत्येवं लक्षणा सा न भवति, अपि तु अकीर्त्ति भवति ॥ नूनमयमपि एवं स्वरूपो येन येषां वन्दनं करोति ॥ तथा निर्जरा कर्म-
क्षयलक्षणा सा न भवति, तीर्थकराऽऽज्ञाविराधनाद्वारेण निर्गुणत्वात् तेषामिति, कायक्लेशो अवनामादिलक्षणः, तं च एवमेव
मुधैव करोति, निर्वर्त्तयति, तथा कर्म्म ज्ञानावरणीयादिलक्षण, तस्य बन्धो विशिष्टरचनया आत्मनि स्थापनं, तेन वा आत्मनो
बन्धः स्वरूपतिरस्करणलक्षणः कर्मबन्ध करोति ॥ इति च वर्त्तते, चः शब्दाद् आज्ञाभङ्गादिश्च दोषान् अवाप्नोति ॥ तथाहि भगव-
त्प्रतिकुष्टवन्दने आज्ञा भङ्गः ।१। तं दृष्ट्वा अन्येऽपि वन्दन्ते इत्यनवस्था ॥ २ ॥ तान् वन्द्यमानान् दृष्ट्वा अन्येषां मिथ्यात्वम्
॥ ३ ॥ कायक्लेशतो देवताभ्यो वा आत्मविराधना तद्वन्दनेन तत्कृतासंयमानुमोदनात् संयमविराधना चेति ॥ ननु गुणाधिके
वन्दनकम् उक्तम्, अतो गुणाधिकत्वात् "पासत्थोसन्नकुसीलणीय संसत्तजणमहाछंदं ॥ नाऊण तं सुविहिया सव्वपयत्तेण
वज्जंति" इत्याद्यागमबलात् सुविहिताः पार्श्वस्थादीन् मा स्म वन्दन्त, श्रावकास्तु किमिति न वन्दन्ते, तेषां गृहस्थतया सकल
सावद्यव्यापारासक्तत्वेन ततो गुणहीनत्वात् ॥ उच्यते पार्श्वस्थाद्यपेक्षया तेषाम् अभग्नव्रतत्वेन उत्तमगुणत्वात् ! उक्तंच
केसिं पि संजयाणं केहिं पि गुणेहिं सावगा अहिया ॥ जम्हा ते देसजई इयरे उ ण ओभयओ भट्ठा ॥ १ ॥
तथा अरहंत चेइयाणं सुसाहुपूयारओ ददायारो । सुस्सावगो वरतरं न साहुवेसेण चुयधम्मो ॥ छज्जीवनिका
यदया विवज्जिओ नेव दिक्खिओ न गिही जइधम्माओ चुक्को चुक्कइ गिहिदाणधम्माओ" इत्यादि ॥ किंच उपहासादिदोष-
भयात् यथा छद्मवेशधारिणो वैडम्बिकान् जानानः श्राद्धो न वन्दते, तथा पार्श्वस्थादीनपि ॥ यदुक्तम् ॥

जइ वेलंवगलिंगं जाणंतस्स न मओ हवइ दोसो। निद्धंधसुत्ति नाऊण वंदमाणे धुवं दोसो ॥ १ ॥
इत्यर्थः ॥ ३२ ॥ ननु उत्सर्गतो मा वन्द्यन्ताम् एते, अपवादतस्तु वन्द्यन्ते एव, अन्यथा तद्विधिभणनस्य वैयर्थ्यम् ॥
भणितश्च तद्विधिर्यथा बहिर्भूम्यादौ मिलितस्य द्रव्यलिङ्गिनोऽभिलापः क्रियते, हे तपोधन कीदृशस्त्वं चन्द्रगच्छीयो नागेन्द्रग-
च्छीयो वेत्यादिलक्षणः ॥ गुरुं पुरुषं कार्यं वा अपेक्ष्य तस्यैव नमस्कारः क्रियते ॥ नमस्ते इति, गुरुतरं चापेक्ष्य अभिलापन-
नमस्कारगर्भो हस्तोच्छ्रयः क्रियते, गुरुतमं वापेक्ष्य शिरो नम्यते, कुशलं भवतः इत्यादि पृच्छ्यते, तद्बहुमानतः किंचि-
त्कालं तत्सन्निधौ आस्यते, एष तावत् बहिर्दृष्टस्य विधिः, कारणविशेषतः पुनस्तत्प्रतिश्रयेऽपि गम्यते, तत्रापि एष एव विधिः
नवरम् आरभट्यावृत्त्या स्थोभवन्दनं क्रियते, वन्दनकं वा दीयते, यदुक्तम् "वायाए नमोकारो" इत्यादि इत्यत आह—

'जो पुणकारणजाए, जाए वायाइओ नमोक्कारो। कीरइ सो साहूणं, सड्ढाणं सो पुण निसिद्धो ॥ ३३ ॥

व्याख्या—यः पुनः कारणजाते प्रयोजनप्रकारे ज्ञानादिकार्ये इति यावत्, जाते उत्पन्ने सति, वागादिको वाचनिकादि-
र्नमस्कारो वन्दनं क्रियते, विधीयते, अवसन्नादीन् प्रति इति शेषः ॥ 'सो साहूणमिति' व्यत्ययोऽपि आसामिति प्राकृतलक्षणेन
तृतीयार्थे षष्ठी ॥ ततश्च साधुभिः श्रमणैः क्रियते, इति पदम् अत्रापि आवर्त्यते, क्रियते न श्रमणोपासकैः, यदेष न यथा तथा
क्रियते ॥ किं तर्हि? यदि ब्रह्मचर्यप्रतिपालनरूपेण पर्यायेण आत्मनः सकाशात् स उपरिवर्त्ती भवति, यदि तत्परिवारोऽपि संमुखम्
उचितप्रतिपत्तिं करोति ॥ यदि कुलगणसंघकार्यकरणक्षमो भवति, यदि तद्बलेन तत्र क्षेत्रे स्थातुं शक्यते, यदि दुर्भिक्षाद्यव-

ग्यागो ते च गाभिध्यं कर्तुम् उत्सहन्ते, यदि वा ततः सूत्रं सूत्रार्थो वाऽपेक्ष्यते इति, यदुक्तं 'परियायपरिसेत्यादि' तदाहि तदकरणे प्रवचनाभक्तिः स्वार्थभ्रंशादयो दोषा भवन्त्येव, साधूनां, तस्य तदानीम् अधिकनलत्वात्, यदा तु साधवः स्वयमधिकबलाः समानबला वा भवन्ति, तदा तान् प्रति न किञ्चित्कुर्वन्ति ॥ यदुक्तम् "पासत्थाईयाणं तह चिट्ठइ जह न होइ से मग्गू ॥ परमइ जओ अवाय, तदभावे दूरओ वज्जे" इति, ततः श्रावकाः कदापि न कुर्वन्ति, तेभ्यः सदाऽपि समधिकनलत्वात् ॥ ननु–कारणतोऽपि यत् श्रमणानां कर्तुमनुज्ञात, तत् तदुपासकानां विशेषतोऽनुज्ञातं, तेषां महतामपि अणुव्रतधरत्वात्, इत्यत आह, गहाणं मो पुणत्ति, श्राद्धानां च पुनर्नमस्कारो निषिद्धो निवारितः, आगमगतविशिष्टविचारानभिज्ञत्वेन अनलत्वात् तेषां, कुलिङ्गिसंस्तवस्य इव पार्श्वस्थादिसंस्तवस्य महाव्यामोहहेतुत्वात्, पर्यायपरिषत् पुरुषादिविशेषविमर्शणस्य श्राद्धानाम् अनुपयोगित्वेन असंभवाच ॥ ननु क्व निषिद्धः ? उच्यते दर्शनसप्ततिकायाम्—

चंदणपूगणसकारणाइं सव्वं न कप्पए काउं। लोगुत्तमलिंगीणं, वि केसिं चेयं जओ भणियं ॥

ननु कुतः कारणात् न कल्पते ? उच्यते "पयणरिसंवायाओ उप्पज्जइ संसओ फुडं जं से तम्हा तमणाययणं मिच्छं मिच्छत्तहेऊ वा ॥ इति वृहत्कल्पस्थानकभाष्येऽपि लोकोत्तरिकानायतनविचारे भणितं ॥ लोउत्तरियं पुण जे जिणधम्मस्था परं मदूपयाए। वट्टंति देसणा चरणदेसओ तेसिं संसग्गी ? एगमिच्छमणाययणं सुद्धु वि धम्मट्ठि यस्स गहुस्स। "होइ गुणहानि हेऊ ता एयं वज्रणिज्जं तु" अन्यथा परमार्हतः श्रीश्रेणिकनृपो हेयमायया प्रत्यागहणाय

जलाशयावतीर्ण साधु दृष्ट्वा कपर्दकाम् पा[illegible]नाम्, आपन्नसत्त्वां साध्वीं च, दर्शनमात्राद् अवन्दिष्यत ॥ नच ववन्दे तस्मात् ज्ञायते निषिद्धः एव एष इति ॥ ३३ ॥ आह—पौषधशालायां मिलिता बहवः श्रावका विकथापरिहरणार्थं यदि कंचिद् धर्मविचारं कुर्वन्ति, प्रकरणविशेषं वा कंचित् स्वबोधानुसारेण विचारयन्ति, तत्तेषां युक्तम् अयुक्तं वा? धर्मचर्चायाः शुभभाव प्रबन्धनिबन्धनत्वात्, मिथ्यावादस्य च क्रूरकर्मबन्धकारणत्वाद् इत्याशयवान् पृच्छति ॥

"पोसहियसावयाणं पोसहसालाइ सावगा बहुगा। गंतुं पगरणजायं, किंपि वियारिंति तं जुत्तं" ॥३४ ॥

व्याख्या—पोषधं पर्वानुष्ठानं पोषधेन चरन्तीति पौषधिकाः, गृहीतपौषधाः, ते च ते श्रावकाश्च, पौषधिकश्रावकाः, तेषां, नतु श्राविकाणां, पौषधशालायां पौषधग्रहणोचितस्थाने श्रावकाः, बहव एव बहुकाः स्वार्थे कः प्रभूताः, गत्वा प्रकरणानि उपदेशमालादीनि, तेषां जातं सदृशं, प्रकरणप्रकारमित्यर्थः ॥ किमपि अनिर्दिष्टनामकं विचारयन्ति इति, स्वमतिभानुसारेण अर्थापयन्ति, तद् युक्तं संगतम् इति पृच्छार्थः ॥ ३४ ॥ तत्रोत्तरं भण्यते,

केणइ गीयत्थगुरुं, आराहंतेण पगरणं किंचि। सुट्ठुसुयं नायं च्चिय तस्सत्थं कहइ सेसाणं ॥ ३५ ॥

व्याख्या—केनचित् पौषधिकेन अन्येन वा गीतार्थगुरुम् आगमज्ञम् आचार्यम् आराधयता शुश्रूषमाणेन प्रकरणं धर्मशास्त्रं पञ्चाशकादिकं, किंचित् अनिर्धारितनामकं, सुष्ठु शोभनम् अक्षरार्थभावार्थावगमक्रमेण इत्यर्थः ॥ श्रुतम् आकर्णितं ज्ञातमेव बुद्ध-मेव, नतु अज्ञातं, तस्यैव एवात्राध्याहार्यः प्रकरणस्यैव, नतु आवश्यकनिर्युक्तिचूर्ण्यादेः तस्य चतुर्दशपूर्वधरादिप्रणीतत्वेन आग-

मत्वात्, आगमश्च सूत्रतः षड्जीवनिकायमेव यावद् अर्थतः पिण्डेषणामेव, यावद् उत्कृष्टतोऽपि श्रावकस्य कल्पते नाधिकः ॥
एतेन यत् केषाचिद् मते आवश्यकनिर्युक्तिं गृहस्थाः पठन्ति, आवश्यकचूर्णिं च स्वयमेव विचारयन्ति, तदयुक्तम् इत्यावेदितव्यं
भवतीति ॥ अर्थं विचारं, कथयति भणति, स इति शेषः, शेषाणां शुश्रूषुलोकानाम् अग्रे इति शेषं, तस्य यथा गुरुमुखावधारि-
तार्थं कथ्यमानस्य, मनोवचनकायकुव्यापारनिरोधकत्वेन धर्मध्यानपोषकत्वेन स्वमतपरमतविशेषप्रकाशकत्वेन, संवेगनिर्वेदा-
द्युत्पादकत्वेन कस्यापि प्रतिबोधहेतुत्वेन च बहुगुणत्वादित्यर्थः ॥ ३५ ॥ ननु एवं कथ्यमाने तत्र विभिन्नमतिकाः श्रोतार
इति, कोऽपि किमपि अन्तरान्तरा पृच्छति, व्याख्याता च सैद्धान्तिकार्थानभिज्ञत्वेन कदाचित् तदुत्तरं दातुम् असमर्थोऽपि
भवति । ततो यदि अभिमानाद् यदपि तदपि तद्ददाति, तदा उत्सूत्रभाषित्वम्, अथ न ददाति, तदा विविधं उपहस्यते,
भण्यते च यथा कस्ते व्याख्यानेऽधिकारो, यत्सुगमायामपि पृच्छायाम् अधोमुखो जातः, ततः किं कर्त्तव्यमिति, अत्र आह—
"तं च कहंतं अन्नो, जइ पुच्छइ कोवि अवरमवि किंचि । जइ मुणइ तं पि सो कहइ, तस्स अह नो भणिज्जे मं ॥३६"॥
व्याख्या—तं प्रकरणविशेषं, पुनः, चः पुनरर्थे, कथयन्तं व्याख्यान्तम्, अन्यः समीपस्थः, यदि पृच्छति, पर्यनुयुंक्ते, कोऽपि
सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा, अपरमपि प्रसङ्गागतं, किंचिद् विचारान्तरं प्रकारणान्तरं वा, यदि 'मुणइत्ति' जानाति 'ज्ञोजाणमुणो'
।४।७ इत्यनेन प्राकृतलक्षणेन ज्ञाधातोः, स्थाने मुणादेशः ॥ तदपि स श्राद्धः कथयति, तस्य पृच्छकस्य अग्रे इति शेषः ॥
अथ नो जानाति, तदा भणेत् ब्रूयात्, इदं वक्ष्यमाणम् इत्यर्थः ॥ ३६ ॥ तदेव आह—

कहिस्सामि । इय जुत्तीए सड्ढो भवभीरू कहइ सड्ढाणं ॥ २७ ॥

एयं खलु गीयत्थे, गुरुणो पुच्छिय तओ कहिस्सामि । इय जुत्तीए सड्ढो भवभीरू कहइ सड्ढाणं ॥ २७ ॥ — एयं खलु गीयत्थे, गुरुणो पुच्छिय तओ कहिस्सामि । गीतार्थान् स्वसमयपरसमयविदः, गुरून् धर्माचार्यान् पृष्ट्वा ततः कथयिष्यामि
व्याख्या—एतत् यत् त्वया पृष्टं, खलु निश्चये, गीतार्थान् स्वसमयपरसमयविदः, गुरून् धर्माचार्यान् पृष्ट्वा ततः कथयिष्यामि
भणिष्यामि, क्त्वाप्रत्ययेनैव गुरुपृच्छानन्तर्यं भणनस्य लब्धेः, अवलम्बद्योतनार्थम् अत्र ततः शब्दः, इति एवंरूपया
युक्त्या रीत्या मर्यादया इति यावत्, नान्यथा इति भावः, श्राद्धः भवभीरुः उत्सूत्रभाषणाद् अनन्तसंसारी मा भूवम् इति
शङ्कितहृदयः कथयति, किं न वाचयामास पुस्तकं पर्वसु पोषधं गृहीत्वा सकलकुटुम्बस्याग्रे जिनदासश्रावकः, श्राद्धानाम्
अग्रे ॥ ननु श्राविकाणां, ताः सामान्ययतेरपि व्याख्यानेऽनुचिताः किं पुनः श्राद्धस्य, अत एव अयम् आचार्यवन्न सभाम् आपूर्य
व्याख्याति, व्याख्यानयतनाऽनभिज्ञत्वात् ॥ यदुक्तं पौषधविधौ जिनवल्लभसूरिभिः "गुरुमुहाओ वा जहावधारियमट्ठ
पयमणुपेहेइ । तप्परतं तो तमेव, अन्नेसिं किंचि साहेइ वा, न पुण सभापबंधेणं धम्मं कहेइ, जम्हा अहिगा-
रिणा खु धम्मो कायव्वो, अणहिगारिणो दोसो आणा भंगाउ च्चिय धम्मो आणाए पडिबुद्धो, इत्थ य भवस-
यसहस्स महणो विबोहओ भविय पुंडरीयाणं, धम्मो जिणपन्नत्तो, पकप्पजयणा कहेयव्वो, पकप्पो निसीह-
ज्झयणं जेण सावज्जणवज्जाणं, वयणाणं, जो न जाणइ, विसेसं, वुत्तंपि तस्स न खमं किमंग, पुण देसणं काउं,
अन्नं च किं इत्तो कट्ठयरं सम्मं अणाहिगयसमयसब्भावो अन्नं कुदेसणाए कट्ठयरागम्मि पाडेइ ॥ एवं विहा
य बहुअसुहकम्मसंचोइया, दुरहीयकुनयलवमयविमोहिया, जिनमयं अयाणंता, जिणवयणमन्नहा भासिऊण,

आह रंगाइं जंति जं पुण पढइ, सुणेइ, जणस्स धम्मं कहेइ इच्चाइ, तं पच्छा कडवि सयं तेणावि जइ तं पुराहीय-
मिति ॥ पच्छा कडु त्ति, जेण चारित्तं पच्छा कडं, उन्निक्खंतो, गिही जाओ, पुराणोवि, वुच्चइ ॥ १ ॥ सिद्धपुत्तो
सभज्जगो अभज्जगो वा ससिहं मुंडं धरेइ, भिक्खं हिंडइ, वा नवा ॥ २ ॥ सारूविगो पुण सुक्किलवत्थपरि-
हिओ मुंडमसिहं धरेइ, अभज्जगो य पत्ताईसु भिक्खं हिंडइ ॥ ३ ॥ अन्ने भणंति, पच्छा कडसिद्धपुत्ता, चेव
जे असिहा ते सारूविगा" इति निशीथचूर्णिः, सिद्धपुत्रसारूपिकयोः स्वरूपमग्रत उपयोगी इत्यत्र प्रसङ्गाद् उक्तं, ततो व्रतं
पुरस्तात् गृही जातो, यः स एव व्याख्याति इत्यभिज्ञत्वाद् इत्यर्थः ॥२७॥ ननु सर्वेषु अपि दिनेषु पौषधं गृह्यते, प्रतिनियतेषु वा ?
यत एके मुनते, सामग्रीसद्भावे सर्वदाऽपि श्रावकस्य पौषधम् अनुष्ठातुं युक्तं, सदनुष्ठानत्वात् आवश्यकवत् ॥ ततो न प्रतिनि-
यतदिनापेक्षिणा सता सामग्रीविफलीकार्या, यदि च प्रतिनियते एव दिने तद्विधेयं स्यात्, तदानीं यदुक्तं—ज्ञाताधर्मकथायाम्
अष्टमभक्तिकस्य नन्दमणिकारश्रेष्ठिनः पौषधग्रहणं, तद् असमीचीनं भवेत्, अष्टमस्य दिनत्रयात्मकत्वेन प्रतिनियतदिनातिक्रमण-
शीलत्वात्, इति ? नच वक्तव्यं, यथाष्टमं दिनत्रयमानी, अपि पर्वोद्देशेन प्रवृत्तत्वात् पर्वग्रहणेन गृह्यते, एवं पौषधमपीति,
तस्य उत्कृष्टतोऽहोरात्रप्रमाणत्वादिति ॥ अपरे त्वाहुः पौषधग्रहणं न सर्वदा कार्यं, विशिष्टकालानुष्ठानत्वात् यद्यद् विशिष्टकालानु-
ष्ठानं, तत्तत् न सर्वदा कार्यं, यथा षडावश्यकं ॥ विशिष्टकालानुष्ठानं च इदं, तस्मान्न सर्वदा कार्यं न च अस्य विशिष्टकालानु-
ष्ठानत्वम् असिद्धं, पौषधं हि एकादशव्रतं वा स्यात् चतुर्थीप्रतिमा वा, नान्यत् ॥ तत्र व्रतं पर्वानुष्ठानमेव पूर्वाचार्यैरेवम् एव

व्याख्यातत्वात् ॥ तथाहि—उत्तराध्ययनेषु नवमाध्ययनवृत्तौ, पोपधोऽष्टम्यादितिथिषु व्रतविशेष इति, आवश्यवृत्तावपि उक्तं, पोपधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयौ इति आवश्यकचूर्णावपि उक्तम्—

"सव्वेसु कालपव्वेसु पसत्थो जिणमए तवो जोगो॥ अट्ठम्मि पन्नरसीसु य नियमेण हविज्ज पोसहिओ त्ति"

तपोयोग उपवासादिः आससेनवाचकेनापि उक्तम्—

सर्वेष्वपि तपोयोगः प्रशस्तः कालपर्वसु ॥ अष्टम्यां पञ्चदश्यां च नियतः पोषधं वसेद् ॥ १ ॥

इत्यादि विधिवादः ॥ चरितानुवादे तु चतुःपर्व्यामेव जिनदासाद्यनेकश्रावकपोपधस्य श्रूयमाणत्वात् ॥ प्रतिमापि पर्वानुष्ठानमेव, यदुक्तम् आवश्यकनिर्युक्तिवृत्तौ—

होइ चउत्था चउद्दसि अट्ठमिमाईसु दिवसेसु पोसहं । चउव्विहं पि पडिपुन्नं सो उ सम्ममणुपालेत्ति ॥ १ ॥

'चउत्थेत्ति' चतुर्थी, प्रतिमा, ततो व्रतविशेपत्वात् प्रतिमाविशेपत्वाद्वा सिद्धं पौपधस्य विशिष्टकालानुष्ठानत्वं, सर्वकालानुष्ठेयत्वं साधयति—यश्चास्य सर्वदानुष्ठेयत्वसाधनाय सदनुष्ठानत्वादिति हेतुः, परेणोक्तः, सोऽनैकान्तिकः पाक्षिकप्रतिक्रमणसंपूर्णोपधिप्रतिलेखनादि व्यभिचारात्, तद्धि सदनुष्ठानमपि प्रतिनियते एव पक्षान्तादिलक्षणे दिने विधीयते, न सर्वेषु दिनेषु, दृष्टान्तोऽपि साध्यविकलः, पडावश्यकेऽपि सर्वकालविधेयस्य असंभवात् ॥ नहि भगवतो महावीरस्य तीर्थे अजितादितीर्थकृत्तीर्थेषु इव यदा तदापि एतद् अनुष्ठीयते ॥ एवंहि 'अंतो अहो निसिस्से' इत्यादिकालनैयत्योपदेशस्य नैरर्थक्यप्रसङ्गः, तथा सर्वेष्वपि

धर्मगच्छेषु प्रतिनियते एव राज्यन्तरूपे, दिनान्तरूपे, वा काले पोषधं गृह्यते, न यदा तदा, इत्येतस्य सर्वदा ग्राह्यत्वसाधनं प्रवृत्तिराधितत्वात्, असमीचीनमेव ॥ किं च ज्ञाताधर्मकथायाम्। ततेणं नंदे मणिआरसिट्ठी अन्नया गिण्हकालसमयंसि जेट्ठा मूलंसि मासंसि अट्ठमभत्तं गिण्हइ ॥ २ ॥ पोसहसालाए जाव विहरइ तएणं नंदस्स अट्ठमभत्तंसि परिणममाणंमि तण्हाए छुहाए अभिभूतस्स समणस्स इमे एया रूवे अज्झत्थिए समुप्पज्जित्था, धन्नाणं ते राईसरजावप्पभित्तयो, जेसिणं रायगिहस्स वहिया वहुओ वावीओ पुक्खरणीओ जाव सरपंतियाओ जत्थ वहुजणो ण्हायइ पियइ इत्यादि संपेहइ संपेहित्ता कल्लं पोसहं पारेइ, इत्येतावद् एवास्ति वृत्तिकृता तु इदं सुगमत्वात् न व्याख्यातं, ततः कैरक्षरैर्भवता निर्धारितं यत्सर्वदा पोषधं गृह्यते इति, जेट्ठामूलंसि मासंसि, इति ज्येष्ठपूर्णिमायाम् अष्टमे भक्ते तृतीयदिवसे, पर्वणि एव त्रिदैवसिके प्रतिमाऽन्त्यरात्रौ कायोत्सर्गवत् पोषधस्य संभवात्, कथं नन्दमणिकारदृष्टान्तेन पोषधस्य अपर्वानुष्ठानता, सर्वाऽऽगमसर्वसमाचारी विरुद्धाऽपि साध्यते ॥ नह्यत्र, त्रिरात्रं पौषधी अपर्वणि एव वा द्वितीयादौ पौषधी इत्यस्ति ॥ यच्च श्रीविजयेन सप्तदिनानि यावत् पोषधं गृहीतम् इत्यागमे श्रूयते ॥ तदिह लोकार्थं, न मोक्षार्थं, विद्युत्पातलक्षणोपद्रवटालनबुद्ध्या प्रवृत्तत्वात् इति, न तन्निदर्शनं, कार्यं मोक्षार्थस्यैव अनुष्ठानस्य इह विचारयितुम् आरब्धत्वात् ॥ तस्यैव भगवदाज्ञापूर्वकत्वात् तस्माद् यथा सदनुष्ठानत्वेऽपि आवश्यकं संपूर्णं सन्ध्याद्वये एव अनुष्ठीयते ॥ तथा पोषधमपि उक्तपर्वसु एव संपूर्णम् अनुष्ठेयम्, एकैकस्य तु तदवयवस्य सामायिकादेरिव अनुष्ठितौ न कालनियम उक्त इति। तत्र कामचार एवेति, अतो

भगवन् किं तत्त्वम्, इत्यत आह—

उद्दिट्ठट्ठमि चउद्दसि पंचदसमी उ पोसहदिणंति । एयासु पोसहवयं संपुन्नं कुणइ जं सड्ढो ॥ ३८ ॥

व्याख्या उद्दिष्टेति, सामायिकी संज्ञा, अमावास्यावाचिका, यदुक्तं दशाश्रुतस्कन्दचूर्णौ चतुर्थश्रावकप्रतिमाव्याख्याने 'उद्दिट्ठा अमावस्साइति' तत उद्दिष्टा अमावास्या, अष्टमी चतुर्दशी च प्रसिद्धे, 'पंचदशमी, पूर्णिमा, तुरवधारणे, एता एव तिथयः पोषधदिनं, पुष पुष्टौ, पोषं वृद्धिं धर्मस्य धत्ते धारयतीति पोषधः, पुण्यतिथिविधेयो व्रतविशेषः ॥ पोषधस्य दिनं पोषधदिनं, पर्वानुष्ठानत्वेन अस्य समये प्रसिद्धत्वात् ॥ यदि पुनः संपूर्णमपि पोषधं प्रतिदिनविधेयम् अभविष्यत्, तदा भगवतो महावीरस्य पञ्चमगणधरः प्रथमयुगप्रधानः श्रीसुधर्मस्वामी सूत्रकृदङ्गे श्रावकवक्तव्यतामध्ये "चाउद्दसट्ठमुदिट्ठपुन्निमासिणीसु पडिपुन्नं पोसहं पालेमाणो विहरइ" इत्याद्यालापकं नाभणिष्यत् ॥ भणितश्च अयं, ततो ज्ञायते पर्वानुष्ठेयोऽयम् इति ॥ अत एवोक्तं-सैद्धान्तिकशिरोमणिना श्रीजिनवल्लभसूरिणा "तो भवसुहविरयमणो, अणन्नसामन्नचरणरागेण ॥ जतिसुहकंखी किर कुणइ सव्वओ पोसहं सड्ढो ॥ तं च चउद्दसि अट्ठमी, पज्जोसवणाइपव्वदिवसेसु ॥ साहुसगासे पोसहसालाइघरे वइय कुज्जा ॥ २ ॥ इति अन्यैरपि श्रुतधरैरनेकधा स्वोपज्ञशास्त्रेषु एतद् विशिष्टतिथिसाध्यतया एव उक्तं, कियदत्र लिख्यते, स्वयमेव तत्परिभावनीयम् ॥ 'इतिशब्द उत्तरवाक्यसमाप्तौ हेतुमाह ॥ एयासुत्ति, एतासु उद्दिष्टादिसु तिथिषु' 'पोषधव्रतं संपूर्णं, चतुर्विधं करोति, समाचरति, यस्मात् कारणात् श्राद्धः उपलक्षणत्वात् श्राविकाऽपि, तस्या अपि द्वादशव्रतप्रतिपत्तौ अधिकृतत्वात् ॥

ननु चतुर्मासकपर्युषणे, प्रवचने महापर्वणी भण्येते, उद्दिष्टादिभ्यस्तपसाऽनुष्ठानेन विशिष्टशुभभावहेतुत्वेन चैतयोः गुरुत्वात् ॥ तद् यदि सत्यमेव, पोषधं पर्वानुष्ठानं तदा एते विशेषेण अत्र वक्तुमुचिते अपि किमिति नोक्ते ? यदि वा चतुर्मासकं चतुर्दशी पञ्चदशी ग्रहणेन संगृहीतं, तदेकतरतिथिभावित्वात्, साम्वत्सरिकं तु न, भाद्रपदश्वेतचतुर्थी भावित्वात्; भाद्रपदश्वेतचतुर्थ्याश्च उद्दिष्टादितिथिभ्योऽतिभिन्नत्वात् इति, तदवश्यं वक्तुं युक्तम् ? इति चेत् सत्यं, किन्तु उपलक्षणत्वात् लब्धमिति ? नोक्तम् ? अन्यथा महाकल्याणकानि अपि वक्तव्यानि स्युः ॥ तेषामपि पुण्यदिनत्वेन पोषधदिनत्वात् तथा च सूत्रगौरवं स्यादिति "अथवाऽन्यथा व्याख्यायते, उद्दिष्टादिविशिष्टपर्वत्वेन प्रवचने प्रसिद्धास्तिथयः, यदुक्तं सूत्रकृदङ्गवृत्तौ "चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु" इत्यादि आलापकं विवृण्वता शीलाङ्काचार्येण उद्दिष्टासु महाकल्याणिकसंबन्धितया पुण्यतिथित्वेन प्रत्याख्यातासु इति, ताश्च चतुर्मासिकसाम्वत्सरिकमहाकल्याणिकदिनानि उच्यन्ते ॥ अष्टमीचतुर्दश्यौ पञ्चदशी शब्दोक्ते पूर्णिमाऽमावास्ये च सामान्यपर्वत्वात् पृथगेव उक्ते इत्यर्थः ॥ ३८ ॥ ननु केनचिद् अष्टमीचतुर्दशीज्ञानपञ्चम्यादिपुण्यतिथिषु महाकल्याणकेषु चैकाशनकादितपोविशेषकरणनियमो गृहीतः, स च अष्टम्यादीनां महाकल्याणकेन सह योगे सति किं करोति ? इत्यत आह—

जइ कहवि अट्ठमी चउद्दसी य तत्थ वि य होइ वयजोगो । वयसद्देणं भण्णइ नियमो कल्लाणमाइओ ॥ ३९ ॥
तस्संजोगा जो कोवि गुरुतरो निव्वियाइओ नियमा । सो कायव्वो जं निव्वियंति पकासणा गम्पं ॥ ४० ॥

व्याख्या—'यदीति, संभावनायां, कथमपि, तिथिपातवशात् स्वभावाद् वा, केषांचिद् हि कल्याणकानां, तयोरेव तिथ्या-
भावात् 'अष्टमी चतुर्दशी, वा भवतीति क्रिया योज्या ॥ चः शब्दो वाशब्दार्थः, अनुक्तज्ञानपञ्चम्यादिविशिष्टतिथिसमुच्च-
यार्थो वा, तत्रापि, च अष्टम्यां चतुर्दश्यां वा, चः समुच्चये स च अग्रे योक्ष्यते, 'भवति, संपद्यते, व्रतयोगश्च, व्रतसंबन्धश्च ॥
ननु व्रतमिति किम् उच्यते, इत्यत आह 'वयेति, व्रतशब्देन अनुस्वारोलाक्षणिकः, 'भण्यते, कथ्यते, नियमोऽभिग्रहः, इह
कल्याणार्थं तपोऽपि कल्याणं, तादर्थ्याद् अभेदोपचारो यथा इन्द्रार्थास्थूणापि इन्द्रः, ततः कल्याणं कल्याणकतप आदौ पूर्वं,
यस्य, स कल्याणादिः, कल्याणनियमः, मकारो अलाक्षणिकः, प्राणातिपातादिनियम इव कल्याणकादिनियमो व्रतम् उच्यते
इत्यर्थः ॥ तत्र तिथिपातवशात् यथा कार्त्तिकामावास्याः पतने सति, चतुर्दशी वीरनिर्वाणकल्याणकनियमसम्बन्धो भवति, स्वभा-
वाच्च, यथा चैत्रे अष्टमी ऋषभनाथजन्मव्रतकल्याणनियमयोगः, श्रावणे चाष्टमी पार्श्वमोक्षकल्याणनियमयोग इत्यादि ॥
अत्र केचिद् अमुं संप्रदायं व्याचक्षते, यथा 'पोसहतयदिणयोगे' इत्यस्य परिग्रहपरिमाणगाथापदस्य संमुग्धस्य अर्थपृच्छायाम्
इदम् उत्तरं दत्तं पूज्यैरिति ॥ तत्र पोषधशब्दोऽष्टमी चतुर्दशी वाचकतया प्रवचने रूढः, तथाहि आवश्यके 'पोसहो-ववासे
चउव्विहे पन्नते' इत्यादि आलापकवृत्तौ इह पोषधशब्दो रूढया पर्वसु वर्त्तते, पर्वाणि च अष्टम्यादितिथय इति ॥ ततोऽसौ न
अनूद्य व्याख्यातः, किं तर्हि एतस्य अर्थोऽष्टमीचतुर्दश्यौ एव उक्ते, व्रतशब्दस्तु कल्याणकादिनियमवाचकतया न प्रसिद्ध इत्यसौ
विवृत्य व्याख्यात इति, अपरे पुनराहुः—"तिहियोगे तवमेगं वयमससमरणे अणन्तरतिहीसु" इत्येतत्परिग्रहपरिमाणगाथार्द्धं गूढा-

र्थत्वात् व्याख्यातम् इत्यर्थः ॥ तयोरष्टमीव्रतयोः, चतुर्दशीव्रतयोर्वा संयोगः सम्बन्धः तत्संयोगः, तस्मिन्, व्यत्ययोऽपि आसाम्, इति वचनात् सप्तम्यर्थे पञ्चमी, यस्तपोविशेषः कोऽपि अनिर्दिष्टनामा 'गुरुतरो, बृहत्तरः' निर्विकृति-रादौ यस्य आचाम्लादेः स निर्विकृत्यादिक, ननु द्व्याशनापेक्षया एकाशनं गुरुतरं वर्त्तते, तत्कथम् एकाशनादिरिति नोक्तम्? उच्यते यदपेक्षया एकाशनं गुरुरित्युच्यते भवता, तस्य द्व्याशनस्य आगमानुक्तत्वात्, आवश्यकनिर्युक्तौ हि दशैव प्रत्याख्यानानि उक्तानि, यथा–

नवकार-पोरसीए पुरिमड्ढेकासणेगठाणे य। आयंबिल अभत्तट्ठे चरिमे य अभिग्गहे विगईति ॥

तेषां मध्ये च अस्याऽभावात्, इति सिद्धान्तम् आश्रित्य द्व्याशनापेक्षया एकाशनस्य गुरुत्वं साक्षाद् अत्र नोक्तम् ॥ उपलक्षणात्वेतदपि ज्ञेयम्, अत्यन्तहीनसत्त्वजन्तून् उद्दिश्य प्रमादजयनार्थं द्व्याशनस्यापि गीतार्थै-रादृतत्वात्, तथा च अग्रे वक्ष्यति 'अट्ठहिं दोकासणेहिं' चेति नियमात् निश्चयेन स कर्त्तव्यो विधेयः, किं न क्रियते एकस्यामेव तिथौ चतुर्दशीत्वात् चतुर्थस्य चतुर्मासकत्वात् च षष्ठस्य प्राप्तौ षष्ठमेव, यत् यस्मात् हेतोः निर्विकृतिकम्, 'इतिशब्दः पादपूरणे,' एकाशनात् गुरुकं, महद्, ननु इदं विरुद्धम्, आगमेहि निर्विकृतिकात्, पुरिमार्द्धस्य पुरिमार्द्धाच्च एकाशनस्य, एकाशनाच्च, आचाम्लस्य आचाम्लाच्चतुर्थस्य, यथोत्तरं द्विगुणद्विगुणत्वेन गुरुत्वमुक्तम् अस्ति, यथा "निव्वीयं पुरिमड्ढं इगभत्तं अंबिलं चउत्थं च। छट्ठं च अट्ठमं चिय कमेण पच्छित्तगुरुआइं ति' यथोत्तरम्, द्विगुणाद्विगुणत्वं चैषाम् एवं-द्वाभ्यां निर्विकृतिभ्यां पुरिमार्द्धम्, द्वाभ्यां पुरिमार्द्धाभ्यां त्वेकाशनम्, द्वाभ्यां चैकाशनाभ्याम् चाचाम्लं, द्वाभ्यां आचाम्लाभ्यां चतुर्थम् इति ॥ यदुक्तम्-[illegible] [illegible]एहिं पुरिमड्ढं, दोहिं

पुरिमड्ढेहिं एकासणं, दोहिं एगासणेहिं आयंबिलं, दोहिं आयंबिलेहिं उववासोत्ति, ततो निर्विकृतिकाच्चतुर्गुणत्वेन एकासनकम्
एव गुरु, नतु एकाशनात् निर्विकृतिकम् ॥ किंच निर्विकृत्यादीनां गुरुत्वप्रकटनार्थं विशोपकमानमपि कृतम् अस्ति, यथा निर्विकृ-
तिकस्य सपादैको विशोपको मानं, स च षोडशभिर्गुणितो विंशतिर्विशोपका भवन्ति, इति षोडशभिर्निर्विकृतिभिरुपवासः, तथा
पुरिमार्द्धस्य तु मानं सार्द्धौ द्वौ विशोपकौ, तौ च अष्टभिर्गुणितौ विंशतिर्विशोपका भवन्ति, इति तैरष्टभिरुपवासः, एकाशनस्य
विशोपकाः पञ्च, ततस्तैश्चतुर्भिरुपवासः, आचाम्लस्य दश विशोपकाः, ततस्ताभ्यां द्वाभ्याम् उपवासः ॥ उपवासस्तु त्रिंशतिविशो-
पक इति तथाचोक्तम् 'माणं कमेण निव्विय पु-रिमेगासणनिरुद्धखमणाणं' पायजुइक १ दुअड्ढ २ पण ३ दस ४ वीसा ५ तह
विसोया इति ॥ एवं चैकाशनकात् निर्विकृतिकं लघुतरं, पञ्च विशोपकापेक्षया सपादैकं विशोकस्य अल्पतरत्वाद् इति ? अत्रो-
च्यते न विरुद्धम्, अन्येन अभिप्रायेण उक्तत्वात्, आगमे हि तदेव निर्विकृतिकम् एवं विचारितम्, यत्र केवलं विकृतीनामेव
नियमो न भोजनसंख्याया, नापि अशनसंख्याया न चापि त्रिधाद्याहारसंख्यायाः, तच्च सपादैकविशोपकमानत्वात् एका-
शना—लघु एव, सांप्रतं तु पूर्वाचार्यपरम्परागतसामाचार्या एकाशनकसहितं त्रिविधाहारं च निर्विकृतिकं क्रियते, तैस्तु
त्रिभिरेव उपवास इत्येकाशनात् किंचिन्न्यूनसप्तविशोपकमानत्वेन गुरुतरमेव निर्विकृतिकम् इति, एतदेव आश्रित्य निर्विकृतिकस्य
गुरुतरत्वं उक्तम् सूत्रकारेण इति न कश्चिद् दोष इत्यर्थः ॥ ४० ॥ अथ कश्चिद् गृहीते सामायिके, तदुचितम् आवश्यकादि
व्यापारं कुर्वन्नन्तरान्तरान् बहुवारान् तेजस्कायेन वा अप्कायेन वा संघट्टितः, स च तद्विराधनाशुद्ध्यर्थं तेजस्कायस्य अप्कायस्य वा

पहवः संघट्टका जाता इति सामान्येन आलोचयति, अथ एतावन्तो लघुका गुरुका वा सान्तरा निरन्तरा वा इत्यादि व्यक्त
इति प्रश्नम् उद्दिश्य उत्तरमाह—
पडिकमणं च कुणन्तो विज्जुपईवाइएहिं जइ कहवि। वारा दो चउ फुसिओ तो वड्ढ फुसिओ त्ति आलोए ॥४१॥
व्याख्या—'प्रतिक्रमणम्' आवश्यकं, 'चकारोऽनुक्तसमुच्चये, प्रतिक्रमणं हि सामायिकवतो व्यापारः, ततोऽन्यान् अपि
पठनगुणादींस्तद् व्यापारान् समुच्चिनोति असौ, अतस्तानपि कुर्वन् प्रतिक्रमणस्य सामायिकाऽविना भूतत्वात् सामायिकस्थः
स्त्रीपुंसैकतरोऽत्र कर्ता गम्यते 'विद्युत्' तडित् साच आकाशिकत्वाद् उल्कादीनाम् उपलक्षणम्, प्रदीपस्तु भौमत्वाद् ज्वालाङ्गा-
रादिरूपस्य अग्नेः, विद्युच्च प्रदीपश्च विद्युत्प्रदीपौ तौ आदी एषां पृथ्वीकायादीनां ते तथा, तैः यदि कथमपि निरवधानतादि-
प्रकारेण, सावधानो हि तच्छंकायाम् अपवरकादौ प्रविशेत्, कम्बलं वा प्रावृणुयात्, सामायिकस्थस्य साधुतुल्यत्वात्,
साधवश्च स्पर्शनशङ्कायां कम्बलं प्रावृण्वन्ति, यदुक्तम्—सचित्त सलिलमहिगारय संपाइम पमुक्खजीवाणं। रक्खट्ठा उवइट्ठं
कंबलगहणं सुसाहूणं ॥ १ ॥ कंबलमहुरत्तगुणेण नोदगाई जिया विवज्जंति अतिसारमलिणयाए य अंगसंगंमि जंति खयं ॥
वारान् वेलाः द्वौ त्रीन् चतुरो वा, वा शब्दोऽनुक्तोऽपि अत्र द्रष्टव्यः, स्पृष्टः, संघट्टितः 'तो' तदा, बहुस्पृष्ट इत्यालोचयेत् गुरूणां
सामान्येनैव निवेदयेद् इत्यर्थः ॥ ४१ ॥ तत्किं सर्वोऽपि एवम् अविशेषेणैव आलोचयति ? न इत्याह—
जइ को विहोइ दक्खो ता जावइयाणि हुंति फुसणाणि। तावइयाणि गणिज्जा अतिमज्झो जो बहुं भणइ ॥४२॥

स्पर्शनानि तावत्कानि तानि गण-
व्याख्या—'यदि' भवति कोऽपि, 'दक्षः' चतुरः 'ता' तदा यावत्कानि यावन्ति भवन्ति, स्पर्शनानि तावत्कानि तानि गण-
गेत्, संख्यायाव्, गणयित्वा संख्याभणनपूर्वकं गुरुमूले आलोचयेत् इतिशेषः ॥ अतिमुग्धो जिह्मः, विसरणशीलो वा, यो
भवतीति क्रिया अत्र गम्या, यत्तदो-र्नित्याभिसम्बन्धात्, स इत्यत्र ज्ञेयं, सएव यथेष्टम् अवधारणप्रवृत्तिरित्येवोऽपि अत्र
अध्याहार्यः ॥ बहुं भणइत्ति, बहुं स्पृष्ट इत्यालोचयति नान्यः ॥ अन्यस्य ह्येवम् आलोचने शुद्धेरभाव एव निरादरत्वात्, अति
मुग्धस्य तु एवम् आलोचनेऽपि सम्यग् शुद्धेरभाव एव, अज्ञत्वेन तस्य नियतां संख्याम् आलोचयितुम् अशक्यत्वात्, अनालोचितस्य
प्रायश्चित्तदाने गुरोरनधिकृतत्वात् चेति ॥ ननु—चन्द्रादित्यविमानप्रभाभिः सामायिकस्थस्य किं स्पर्शनकं न भवति ? अथ
भवति परं परिहर्तुं न शक्यते ? यत् तद् विषये, किमपि न पृष्टं नापि उत्तरं दत्तम् ? इतिचेद् उच्यते—भवत्येव स्पर्शनमात्रं
केवलं तासाम् अचेतनत्वेन तत्र विराधनाया अभावात् ॥ ननु—सिद्धान्ते तासामपि सकर्मकत्वेन सचेतनत्वं सूचितम्
इव दृश्यते ? तथाहि विवाहप्रज्ञप्तौ "अत्थि णं भंते ? सरूवीसकम्मलेसा पुग्गला ओभासंतित्ति ? हंता अत्थि ? सहरू-
पेण मूर्त्ततया ये ते सरूपिणः वर्णादिमन्तः, कर्मणो योग्याः, लेश्याः कृष्णादिकाः कर्मणो वा लेश्याः, लिशश्लेपणे इति
वचनात्, सम्बन्धःसह तया वर्त्तन्ते सकर्मलेश्याः, पुद्गलाः स्कन्दरूपाः 'ओभासंति' प्रकाशन्ते, कयरेणं भंते ? सरूवीसक-
म्मलेसा पुग्गला, ओभासंति, जाव पगासंति ? गोयमा ? जा इमाओ चंदिमसूरियाणं देवाणं विमाणेहिंतो लेसाओ वहिया
अभिनिस्सडाओ पयाविंति, एएणं गोयमा, ते सरूवीसकम्मलेसा पुग्गला ओभासंतित्ति ॥ 'लेसाओत्ति' तेजांसि वहिया अभि-

निस्सडाओति ॥ बहिस्तात् अभिनिःसृता निर्गताः इति सिद्धं सकर्मलेश्यत्वान्यथाऽनुपपत्त्या चन्द्रादितेजसां सजीवत्वमिति ? अत्रोच्यते चन्द्रादिप्रभाणां सकर्मलेश्यत्वम् उपचरितत्वाद् अत्र उक्तं, न पुनः वास्तव्यत्वात्, यदुक्तं श्रीमदभयदेवसूरिभिरस्यैव आलापकस्य वृत्तौ, इह च यद्यपि चन्द्रादिविमानपुद्गला एव, पृथिवीकायिकत्वेन सचेतनत्वात् सकर्मलेश्याः ॥ तथापि तन्नि-र्गतप्रकाशपुद्गलानामपि तद् हेतुकत्वेन उपचारात् सकर्मलेश्यत्वम् अवगन्तव्यम् इति ॥ दृश्यते च कारणधर्माः कार्ये उपचर्य-माणाः यथा अमन्त्री अपि मन्त्रिपुत्रो मन्त्री भण्यते, साध्यं च वास्तवेनैव साधकेन सिद्ध्यति, न औपचारिकेण, नहि अग्निर्माणवक इत्यनेन पदेन माणवके अग्नित्वम् उपचरितम् इत्यसौ दहति, पाकादिक्रियां वा जनयति, तस्मात् माणवकस्येव चन्द्रादि प्रभाणां संपर्केऽपि न विराधना, किंच केषांचित् जीवानाम् उद्द्योतनामकर्मास्ति, यदुदयाद् अमीषां शरीराणि दूरस्थानि अपि अनुष्णप्रकाशात्मकम् उद्द्योतं कुर्वन्ति, यथा यतिदेवोत्तरवैक्रियचन्द्रग्रहनक्षत्रतारारत्नौषधिमणिप्रभृतयः ॥ तथा केषां-चिद् जन्तूनाम् आतपनामकर्मास्ति, यद् उदयाद् एतेषां शरीराणि दूरस्थानि अपि स्वयम् अनुष्णानि अपि उष्णप्रकाश-रूपम् आतपं कुर्वन्ति ॥ यथा सूर्यबिम्बादिः तथाच तच्छरीरस्पर्शे कथ विराधना येन आलोच्यते ॥ ननु एवं तर्हि विद्युत्प्रदी-पादिप्रभासम्बन्धेऽपि न विराधना, विद्युदादीनाम् अग्निकायशरीराणां दूरस्थत्वात् ? इतिचेद् न, अग्निकायेषु हि न उद्द्योत-नाम्नः कर्मण उदयोऽस्ति तथा मामान्यात् ॥ नापि आतपनाम्नः अपार्थिवत्वात्, पार्थिवेषु एव हि आतपोदयस्य आगमे भणि-तत्वात् ॥ तर्हि कथम् अमी दूरस्थमपि वस्तुम् उद्द्योतयन्ति तापयन्ति चेद् ? उच्यते; उष्णस्पर्शोदयेन उष्णलोहितवर्णनामोद-

न तत्प्रभा असत्वात्, केवलं ते एव अतिसूक्ष्म-
येन च प्रकाशयुक्ता अग्निकायिकजीवा एव तदानीम् इतस्ततो विस्तरन्ति ॥ न तत्प्रभा असत्वात्, केवलं ते एव अतिसूक्ष्म-
त्वात् प्रभा इत्युच्यन्ते ॥ तत्संपृक्ताश्च पदार्थाः उद्द्योततापवन्त इव प्रतिभान्ति तथा च अग्निकायिकजीवानां क्षारशरीरस-
म्बन्धे, अवश्यं जीवविराधना भवति ॥ ततः सामायिकस्थः आलोचयति, चन्द्रसूर्यादिविमानादीनां सचित्तत्वेऽपि तत्प्रभाणां
नामकर्मप्रभावतो जातानां स्पर्शनेऽपि अचित्तत्वेन विराधनाया अभाव इति न आलोच्यते इति भावः ॥ ननु-चन्द्रोज्ज्व-
लायां रात्रौ सामायिकस्थस्य विद्युत्प्रदीपादिज्योतिषा स्पर्शनकं भवति वा नवा? उच्यते न भवति! चन्द्रोद्द्योतवति
प्रदेशे, अन्यत्र तु भवत्येव ॥ ननु कुतोऽयं विशेष इतिचेद्? भण्यते, चान्द्रेण तेजसा तस्य अभिभूतत्वात्, अभिभूयन्तेहि ज्यो-
त्स्नानाम् अतिप्रबलतया इन्दुकिरणैः, विद्युत्प्रदीपादिभ्यः पृथग् भूय इतस्तत एकैकशो विस्तृता ज्योतिःसंज्ञा अग्निकायिकाजी-
वाः परस्परोपष्टम्भरहितत्वेन तथाविधाहारविकलत्वेन क्षणिकत्वेन च अतिमात्रम् अबलत्वात्, यथा दिवा दिवाकरकरप्रसरेण ॥
इयांस्तु विशेषः, सूर्यप्रभाणां प्रचण्डत्वात् तत्प्रद्योतेनापि विद्युदादिज्योतिरभिभूयते, अतोऽनातपेऽपि स्थितस्य अस्य तेन स्पर्श-
नकं न भवति, चन्द्रप्रभाणां तु मृदुत्वात् तत्प्रद्योतेन तन्न अभिभूयते, इति तत्प्रद्योतवति अपि प्रदेशे स्थितस्य तेन स्पर्शनकं
भवत्येव, केवलं चन्द्रातपे एव न भवति, तत्रापि चन्द्रप्रभाभिव्याप्ते एव शरीरभागे पटावृते इव तन्न भवति, अन्यत्र तु भव-
त्येवेति ॥ वृद्धसंप्रदाय इत्यर्थः ॥ ४२ ॥ ननु आलोचिते सति गुरवः प्रायश्चित्तं ददति? तत्र च स्वाध्यायोऽपि लभ्यते, स
च पूर्वगृहीतनियमानुरोधेन प्रतिदिनगुण्यमानस्वाध्यायेन पूर्यते नवेति? पृच्छायां समाधानम् आह—

"पइदिवसं सज्झाए अभिग्गहो जस्स सयसहस्साई । सो कम्मक्खयहेऊ अहिगो आलोयणाए भवे" ॥ ४३ ॥

व्याख्या—'दिवसं दिवसं प्रतीति प्रतिदिवसं, 'स्वाध्याये' परिवर्त्तनारूपे, पूर्वपठितगुणने इति यावत्, 'अभिग्रहो' नियमः, यस्य श्रावकश्राविकयोरन्यतरस्य, भवतीति क्रियाऽध्याहारः, शतं च सहस्रं च शतसहस्रे ते आदी यस्य, स तथा, प्रतिदिनं स्वाध्यायस्य शतं सहस्रं वा गुणयिष्यामि इत्येवं रूप इत्यर्थः ॥ सोऽभिग्रहीतस्वाध्यायः, तस्य इत्यत्र द्रष्टव्यं, कर्मक्षयहेतुः, अपूर्वपुण्यलाभद्वारेण कर्मनिर्जराकारणम्, आलोचना तु मुख्यत एव कर्मक्षयहेतुः, तदर्थम् एव अस्याः प्रारब्धत्वात्, अत एवोक्तम्, अधिक उपरितनः, अभिग्रहीताद् इति गम्यम्, अधिकशब्दस्य अवधिमतो अवध्यपेक्षित्वात्, आलोचनायाम् अपराधशुद्ध्यर्थं भवेदित्यर्थः ॥ ४३ ॥ ननु यस्य पञ्चसु अपि तिथिषु एकाशनादि तपः करिष्यामि इत्यभिग्रहो भवति, स यदि तास्वेव तिथिषु नियमिताद् तपसो महत्तरम् आलोचनायै तपः करोति, तदा तत्किम् आलोचनातपसि प्रविशति, तिथितपसि चेति प्रश्ने प्रत्युत्तरमाह—

"एगासणाइ पञ्चसु, तिहीसु जस्सत्थि सो तवं गरुयं । कुणइ इह निव्वियाई पविसइ आलोयणाइतवे" ॥४४॥

व्याख्या—एकाशनम् आदि-र्यस्य तदेकाशनादि पञ्चसु द्वितीयापञ्चम्यष्टम्येकादशीचतुर्दशीरूपासु तिथिषु ॥ ननु अष्टमीचतुर्दश्योस्तपोनियमः क्रियमाणः संगच्छते, तयोः पुण्यतिथित्वेन लोके प्रसिद्धत्वात् । पर्वत्वेन आगमेऽपि उक्तत्वाच्च, पर्वणि च तपो बहुगुणम् एव भवति ॥ यदुक्तम् "उत्तरकरणं एगग्गयाय आलोयचेइवंदणया । मंगलधम्मकहावि य, पव्वेसु तवो गुण

कृति त्ति" न पुनर्द्वितीयादिषु तद्विपरीतत्वात् ? अथवा सत्कृत्यत्वात् असौ अविशेषेण पञ्चदशस्वपि तिथिषु युज्यते, न पुनः

प्रतिनियतासु, तासाम् अनागमिकत्वेन मिथ्यात्वहेतुत्वादितिचेत् ? सत्यं, यद्यपि एताः पुण्यदिनत्वेन लोके न प्रसिद्धाः, नापि

पर्वत्वेन आगमेऽपि उक्ता दृश्यन्ते, तथापि केनापि कारणेन बहुश्रुतैरादृताः तथाहि श्रावकविधौ पण्डितराजपरमार्हतधनपा-

लेन उक्तम्—

**पंचविहविसयसुक्खं उवभुंजइ परिमिएसु दिवसेसु। तिव्वाभिलासविरओ परिहरओ पंचसु तिहीसु त्ति ॥**

एता एव पञ्च तिथयः। पञ्चदशीसहिताः षड् भवन्ति, ता अपि श्रुतधरैरादृताः तथाहि दिनकृत्ये—छण्हं तिहीणं मज्झंमि का

तिही अज्जवासरो किंवा। कल्लाणगं अज्जलोगनाहाणं संतियं इति॥ ननु सामान्योक्तौ कथं ज्ञायते तैरेता एव विवक्षिता नान्याः ?

इतिचेद् उच्यते वृद्धव्यवहारात्, तेषामेव ग्रन्थान्तराच्च, तथाहि तद्ग्रन्थः—उद्दिट्ठट्ठमि चउद्दसीसुं च पुन्निमवीएगारसि पञ्च-

मि दोगासणादितवं, इत्यागमिकवत् बहुमाननीयाः, श्रुतधरवचनस्य प्रायः श्रुतमूलकत्वाद् इति, यस्य अस्ति आलोचनाग्रहणात्

प्राग् एव भवति, स तपो गुरुकम् अभिग्रहीततपोऽपेक्षया, महन्निर्विकृत्यादिकं करोति ॥ इह आस्वेव तिथिषु प्रविशति आलो-

चनायास्तपसि उपलक्षणत्वात् कल्याणकपर्युषणादिकम् उद्दिश्य कृतमपि तत्र प्रविशति, मनश्चिन्तितस्यैव, अर्हन्मते प्रामाणिकत्वा-

दित्यर्थः ॥ ४४ ॥ अतिप्रसङ्गनिवारणार्थम् आह—

**जइ तं तिहिभणियतवं अन्नत्थदिणे करिज्ज विहिसज्जो। अह ण कुणइ जो सो गुरुतवो वि जं तिहि तपे पडइ ॥४५॥**

सुबोधत्वात्, नहि कश्चित् सचेतनः स्वगोप्यं कस्यापि अग्रे यथा तथापि निवेदयति, नापि कश्चिद् पृष्टहस्तं वांछन् स्वापराधं प्रभो
रग्रे एवं एव विज्ञपयति, तथापि करणविधिः पृथग् वक्तुम् युक्त एव, अन्यथाहि एतेषां स्वार्थनिष्पद्यमानान्नपानादिभोजित्वेन
सावद्यारम्भसंरंभत्वेन च, यतिविध्यसंभवे सति एवम् एव अनुष्ठीयमानम् इदम् अन्धवल्यमानरज्जुन्यायेन आयासैकफलमेव मा
भूत् ॥ अथवा सोऽपि मा भाणि, समानकृत्यत्वाद् अस्य ॥ समानकृत्यं हि समानेनैव विधिना विधेयम्, इत्यमी साधुवत् प्राय-
श्चितम् अनुष्ठास्यन्तीति ॥ तथापि आलोचना प्रवृत्तिविषयोत्कण्ठोत्पादनार्थम् अन्वयेन व्यतिरेकेन वा, निदर्शनं किंचिद् दर्शयितुं
समीचीनं, यथा अमुकः श्रमणोपासक इत्थं शल्यम् उद्धृत्य विधिवत् प्रायश्चित्तम् अनुष्ठाय चैवंविधसुखभागी जातः, यदि
वाऽनुद्धृते शल्येऽमुको दुःखभागी जात इति ॥ न चेदम् अयुक्तम् अस्ति, ततो ज्ञायते नास्ति एव आगारिणां प्रायश्चित्तमिति ॥
असति चाऽस्मिन् व्यवस्थाकरणम् अयुक्तं, ग्रामाभावे सीमाकरणवद् इति? अत्रोच्यते यद्यपि छेदग्रन्थेषु निर्ग्रन्थनिर्ग्रन्थीवत् नामो-
च्चारणपूर्वकं गृहस्थानां प्रायश्चित्तं पृथग् भणितं, कुतोऽपि कारणात्, सांप्रतं नोपलभ्यते, तथापि तत्रास्ति एवेति न वक्तव्यमेव,
तेषामपि यतिवत् ज्ञानदर्शनचारित्रवत्त्वात्, तच्च तेषाम् आगमेन प्रतिष्ठितम् । अनुमानेनापि तथाहि ॥ तेषां दर्शनम् अस्तीति
ज्ञायते, उपशमादिभिर्लिङ्गैः, दर्शने च सति ज्ञानम् अवश्यमेव भवति, सह भावित्वात् यदुक्तम् 'कारणकज्जविभागो दीवपगा-
साण जुगव जम्मेवि । जुगवुप्पन्नं पि तहा हेऊ नाणस्स संमत्तंति' एवं च पञ्चमङ्गलमहाश्रुतस्कन्धादि षड्जीवनिकायाध्ययन-
पर्यन्तं सर्वमपि तेषां श्रुतज्ञानमेव, चारित्रं तु अनुमीयते, मूलोत्तरगुणरूपैर्लिङ्गैः, तत्र साधूनां मूलगुणाः पञ्चमहाव्रतानि षष्ठं

व्याख्या 'यदि' यत् पर्वागमनादितिथिभणितं विधिविशेषम् उद्दिश्य अभिगृहीतं तपः, अन्यत्र द्वितीये दिने कुर्यात् तिरूचात् 'विनिमज्जो' विधिपरः, तदेव गुरुके निर्विकृत्यादि तपः आलोचनायां प्रविशति, नान्यथा इत्याशयः ॥ ननु किमिति न्यून इत्यत आह- 'अहंति' अथ इति, व्यतिरेकरूपे पक्षान्तरे, अथ न करोति, द्वितीये दिने, विधितपः, यः कश्चित्, तस्य इत्यत्र अध्याहार्यं, तस्य 'भोति' तत् नपुंसकस्यापि अत्र तच्छब्दवाच्यस्य तपसः पुलिङ्गत्वं प्राकृतत्वात्, प्राकृतलक्षणे हि नव शिरोदामपरान्तानां मान्तनान्तशब्दानां पुलिङ्गत्वम् उक्तमस्ति 'यथा स्नमदाम शिरोनभः' ॥ १ ॥ ३२ ॥ इति तथा च प्रयोग' 'गाढ़ तवो कायव्वो जण मणो मगुउ न चिंतेइ त्ति ॥ गुर्वेपि 'विधितपोऽपेक्षया महदपि' अपिरत्र योज्यो निमकमत्वात्, तत् निरुत्क्रत्यादि, यस्मात् कारणात् विधितपसि, 'पतति' लगति, तस्याऽभिगृहीतत्वेन अवश्यकर्तव्यत्वादिति 'अह न कुणइ तो भोति' पाठोऽत्र सुगमतः प्रतिभाति, अध्याहारानपेक्षत्वात्, 'तो' तदा शेषं पूर्ववद् इत्यर्थः ॥ ४५ ॥ ननु अयुक्तोऽयं विचारः, एतन्मूलस्य गृहस्थोचितस्य प्रायश्चित्तस्य आगमेऽनुपदिष्टत्वात्, नहि कल्पव्यवहारादिच्छेदग्रन्थेषु श्रावकाणाम् आरम्भरूपं वा दानरूपं वा क्वापि एतद् भणितमस्ति ? अथ अभणितमपि एतदस्ति इति ज्ञायते, आपत्तिकारणादीनाम् आकुट्यादीनां दानकारणानां च द्रव्यक्षेत्रकालभावपुरुषादिभेदानां साधुषु श्राद्धेषु च समानत्वात्, कारणसमत्वे च कार्यस्यापि समत्वेन, तथा च साधुवत् तेषाम् इदम् आपद्यते, दीयते चेति चेद् ? तथापि आलोचनाविधिः पृथग् भणितुम् उचितः, तेषाम् अत्यन्तं विलक्षणाचारत्वात्, योहि आलोचयितुं न जानाति, स कथं प्रायश्चित्तं ग्रहीष्यति, यदि वा सोपि नाऽज्ञासि,

वेरमणस्स समणोवासएणं इमे पंचइयारा जाणियव्वा न समायरियव्वा ॥ 'तंजहा बंधवहेच्छविच्छेए अइभारे भत्तपाणवुच्छेए'
इत्यादिना ग्रन्थेन सम्यक्त्वस्य द्वादशव्रतानां च प्रत्येकं पञ्च पञ्च अतीचारा इति ॥ एते च अनाभोगसहसाकारादिकारणवशाद्
उत्पद्यमानाः स्वं स्वं व्रतं मलिनयन्ति, अतः शोध्या एव ॥ तच्छुद्धिश्च न कथंचन, यदि प्रायश्चित्तं नाभविष्यत् ॥ नहि शोध-
नकम् अन्तरेण शोद्ध्यस्य शुद्धिर्भवति ॥ ततोऽस्त्येव अस्यापि प्रायश्चित्तम् ॥ अपि च 'सव्वे वि य अईयारा संजलणाणं तु उदय-
ओ हुंति ॥ मूलछिज्जं पुण होइ वारसण्हं कसायाणं' इत्यावश्यकनिर्युक्तिगाथाविवरणे महाश्रुतधरश्रीहरिभद्रसूरिश्रीमलयगि-
रिभ्याम् उक्तम् ॥ यथा अप्रत्याख्यानकपायचतुष्टयोदयवशसमुत्पन्ना देशविरत्यतिचारा मूलाख्येन पुनः देशविरत्यारोपणलक्षणेन
अष्टमप्रायश्चित्तेन शोध्यन्ते, तथा अनन्तानुवन्धिकपायचतुष्टयोदयवशसमुत्पन्नाः सम्यक्त्वातिचाराः पुनः सम्यक्त्वारोपणरूपेण
मूलेन अष्टमप्रायश्चित्तेन प्रक्षाल्यन्ते इति ॥ तथाहि तदेकतरवृत्तिः 'सव्वेविय' इत्यादि सर्वेऽपि आलोचनादिछेदपर्यन्तप्रायश्चित्त-
शोध्याः ॥ अपि शब्दात् कियन्तोऽपि, अतिचरणानि अतिचाराश्चारित्रस्खलना विशेषाः, संज्वलनानामेव उदयतो भवन्ति
तुः शब्दः एवकारार्थः ॥ द्वादशानां पुनः कपायाणाम् उदयतो मूलछेद्यं भवति, मूलेन अष्टमस्थानवर्त्तिना प्रायश्चित्तेन छिद्यते,
अपनीयते यत् दोपजातं तद् मूलछेद्यम्, अशेपचारित्रोच्छेदकारी इति भावः ॥ पुनः शब्दः प्रकान्तार्थविशेष एव भवति ॥
द्वादशानाम् अनन्तानुवन्ध्यऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणानां कपायाणाम् उदये, अथवा मूलछेद्यं दोपजातं यथा

१ 'वहवंध' इति पाठोऽपि गम्यते।

च रात्रिभोजनव्रतं, यदुक्तं धर्मसंग्रहिण्याम्—

'चारित्तं परिणामो जीवस्स सुहो उ होइ विन्नेओ । लिंगं इमस्स भणियं, मूलगुणा उत्तरगुणा य ॥ १ ॥
पाणाइवायविरमणमादी निसिभत्तविरइ पज्जंता । समणाणं मूलगुणा, पन्नत्ता वीयरागेहिं ॥ २ ॥'

उत्तरगुणाश्च पिण्डविशुद्ध्यादयः, श्रावकस्य तु मूलगुणाः पञ्चैव अणुव्रतानि ॥ उत्तरगुणास्तु गुणव्रतशिक्षाव्रतानि, रात्रिभोजनविरतिस्तु भोगोपभोगव्रतान्तर्गतत्वेन उत्तरगुणाः ॥ सम्यक्त्वं तु उभयोरपि मूलगुण एव, यदुक्तं विशेषावश्यके 'समत्तसमेयाइं महव्वयाणुव्वयाइं मूलगुणा' इत्यादि 'निसिभत्तविरमणं पि हु नणु मूलगुणो कहं न गहियंतं । उत्तरं वयधारिणो च्चिय तयं मूलं गुणो सेसयस्सियरो'' शेषकस्य गृहस्थस्य 'इतर' उत्तरगुणः, एवं च यदि श्राद्धसम्बन्धिनां ज्ञानादीनाम् अतीचारान्नोदपत्स्यन्त, तदा प्रायश्चित्तमपि न अभविष्यत्, तन्नान्तरीयकत्वात्, नहि यदन्तरेण यत् न भवति तत्तत्र अनुत्पन्नेऽपि भवति, पक्ष्यमाणेऽपि धूमभवनप्रसङ्गात् ॥ भवन्ति चैते कषायोदयवशात् गृहिणामपि धर्मस्य सम्यक्त्वादेः ॥ यदुक्तम् आवश्यकनिर्युक्तौ—से य सम्मत्ते पसत्थसम्मत्तमोहणीय कम्माणुवेयणोवसमखयसमुत्थे पसमसंवेगाइलिंगे सुभे आयपरिणामे पन्नत्ते, सम्मत्तस्स समणोवासएणं इमे पंच अईआरा जाणियव्वा न समायरियव्वा ॥ तंजहा 'संका ॥ १ ॥ कंखा ॥ २ ॥ वितिगिच्छा ॥३॥ परपासंडपसंसा ॥४॥ परपासंडसंथवो ॥ ५॥ थूलगपाणाइवायं समणोवासओ पच्चक्खाइ, से य पाणाइवाए दुविहे पन्नत्ते तंजहा संकप्पओ य आरंभओ य, तत्थ समणोवासओ संकप्पओ जावज्जीवं पच्चक्खाइ नो आरंभओ, थूलगपाणाइवाय

वेरमणस्स समणोवासएणं इमे पंचइयारा जाणियव्वा न समायरियव्वा ॥ 'तंजहा वंधवहेच्छविच्छेए अइभारे भत्तपाणवुच्छेए'
इत्यादिना ग्रन्थेन सम्यक्त्वस्य द्वादशव्रतानां च प्रत्येकं पञ्च पञ्च अतीचारा इति ॥ एते च अनाभोगसहसाकारादिकारणवशाद्
उत्पद्यमानाः स्वं स्वं व्रतं मलिनयन्ति, अतः शोध्या एव ॥ तच्छुद्धिश्च न कथंचन, यदि प्रायश्चित्तं नाभविष्यत् ॥ नहि शोध-
नकम् अन्तरेण शोध्यस्य शुद्धिर्भवति ॥ ततोऽस्त्येव अस्यापि प्रायश्चित्तम् ॥ अपि च 'सव्वे वि य अईयारा संजलणाणं तु उदय-
ओ हुंति ॥ मूलछिज्जं पुण होइ वारसण्हं कसायाणं' इत्यावश्यकनिर्युक्तिगाथाविवरणे महाश्रुतधरश्रीहरिभद्रसूरिश्रीमलयगि-
रिभ्याम् उक्तम् ॥ यथा अप्रत्याख्यानकषायचतुष्टयोदयवशसमुत्पन्ना देशविरत्यतिचारा मूलाख्येन पुनः देशविरत्यारोपणलक्षणेन
अष्टमप्रायश्चित्तेन शोध्यन्ते, तथा अनन्तानुबन्धिकषायचतुष्टयोदयवशसमुत्पन्नाः सम्यक्त्वातिचाराः पुनः सम्यक्त्वारोपणरूपेण
मूलेन अष्टमप्रायश्चित्तेन प्रक्षाल्यन्ते इति ॥ तथाहि तदेकतरवृत्तिः 'सव्वेविय' इत्यादि सर्वेऽपि आलोचनादिछेदपर्यन्तप्रायश्चित्त-
शोध्याः ॥ अपि शब्दात् कियन्तोऽपि, अतिचरणानि अतिचाराश्चारित्रस्खलना विशेषाः, संज्वलनानामेव उदयतो भवन्ति
तुः शब्दः एवकारार्थः ॥ द्वादशानां पुनः कषायाणाम् उदयतो मूलछेद्यं भवति, मूलेन अष्टमस्थानवर्तिना प्रायश्चित्तेन छिद्यते,
अपनीयते यत् दोषजातं तद् मूलछेद्यम्, अशेषचारित्रोच्छेदकारी इति भावः ॥ पुनः शब्दः प्रक्रान्तार्थविशेष एव भवति ॥
द्वादशानाम् अनन्तानुबन्ध्यऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणानां कषायाणाम् उदये, अथवा मूलछेद्यं दोषजातं यथा

1 'वहवंध' इति पाठोऽपि गम्यते ।

संभवतो योज्यते, तद्यथा प्रत्याख्यानावरणकषायचतुष्कोदये सर्वविरतिरूपस्य चारित्रस्य मूलछेद्यं सर्वनाशरूपं दोषजातं भवति ॥ अप्रत्याख्यानकषायचतुष्कोदये, देशविरतिचारित्रस्य अनन्तानुबन्धिकषायचतुष्कोदये तु सम्यक्त्वस्येति ॥ न चैवमाभ्यां समस्या कल्पयित्वा ख्यातम् इतिवाच्यं; जीतकल्पसूत्रकृताश्रीजिनभद्रगणिक्षमाश्रमणेनापि इयं गाथा एवमेव महाभाष्ये व्याख्यातत्वात्, तथाहि 'अतिचारा छेदंता सव्वे संजलणहतरो हुन्ति सेसकसाओदयओ मूलछिज्जं च तारुहण" अथवा 'संजममूलछिज्ज तइयकलुसोदये नियतं सम्मत्तादी मूलछिज्ज पुण बारसण्हं पि,' इत्यतः सिद्धं श्राद्धस्य देशविरतेरविरतसम्यग्दृष्टेरपि मूलाख्यम् अष्टमप्रायश्चित्तं, तत्सिद्धौ तदधोवर्त्तीन्यपि आलोचनादीनि सप्त प्रायश्चित्तानि सिद्धान्येव, आलोचनादिछेदपर्यन्तसप्तप्रायश्चित्तशोध्यातिचारकारणस्य संज्वलनकषायोदयस्य गृहस्थेषु अपि भावात्, इत्यागमोक्तानि अष्टौ प्रायश्चित्तानि श्राद्धस्य, अत एव असौ गुरूणाम् आलोचयति, यथा भगवन्नद्य अहं परतीर्थिकेन पार्श्वस्थादिना वा आलपितो यदि वा चैत्यादिकार्यनिमित्तं समर्थ इति कृत्वा, मया स उचितदानादिना आवर्जित इत्यादि गुरोः पुरः प्रकाशयति, आलोचनामात्रेण अस्य शुद्धिर्भवति, ॥ १ ॥ तथा प्रतिक्रामति, सहसाकाराद्, अनाभोगात् वा, कुलविरुद्धे धर्मविरुद्धे वा भाषिते, चतुर्विधेऽपि अनर्थदण्डे कृते हिंसा दोषानापत्तौ गुर्वादिषु मनसा प्रद्वेषे, वाचान्तरभाषादौ कायेन पुरो गमनादौ च कृते सति, तदैव स परितापं मिथ्यादुष्कृतं ददाति, प्रतिक्रमणमात्रेणैव अस्य शुद्धिर्भवति ॥ २ ॥ तथा परद्रव्यादौ स्पृहामात्रकारणशङ्कायां गुरोः समक्षम् इदम् आलोच्य मिथ्यादुष्कृतं ददाति, आलोचनाप्रतिक्रमणरूपेण

मिश्रेण अस्य शुद्धिर्भवति ॥३॥ तथा भोजनवेलायां भोजनभाजने केनापि परिवेपितमपि प्रत्याख्यातं मद्यमांसमधुम्रक्षणादिकम्।
आर्द्रकादिमिश्रितं सूरणादिकं वा त्यजति, अस्य चैवं रूपेण विवेकेन शुद्धिर्भवति ॥ ४ ॥ तथा जीवोपघाताद्यात्मके दुःस्वप्ने
दृष्टे, सामायिकग्रहणानन्तरं बहिर्गमनागमनादिके वा जाते कायोत्सर्गं करोति, एतावतैव अस्य शुद्धिर्भवति, ॥ ५ ॥
स्थूलजीवादिविराधनायां जातायां निर्विकृत्यादिकं पण्मासावसानं तपोऽपि करोति, अन्यथा कथं भगवान् श्रीगौतमस्वामी द्विती-
याणुव्रतातिचारशुद्ध्यर्थम् आनन्दश्रावकं प्रायश्चित्तरूपायां तपःकर्मप्रतिपत्तौ प्रेरयिष्यत्, प्रेरितश्च अयं तेन भगवता, यथा
उपासकदशाङ्गप्रथमाध्ययने, "अत्थि णं आणन्दा गिहिणो गिहवासमज्झे वसन्तस्स ओहिन्नाणे समुपज्जइ, नो चेव णं महए
महालए तं नं तुमं आणन्दा एयस्स ठाणस्स आलोएहि जाव तवोकम्मं पडिवज्जाहि" इत्यादि तस्माद् इदमेव अस्य शुद्धिहे-
तुर्भवति, ॥ ६ ॥ प्रभूतेनापि हि तपसा स्वस्य शुद्धिम् अमन्यमानश्छेदं कारयति, देशविरत्यारोपणकालात् सम्यक्त्वाऽऽरोप-
णकालाद् वा आरभ्य अहोरात्रपञ्चकादिक्रमेण श्रावकत्वपर्यायच्छेदोऽत्र छेद उच्यते, तेन कृतेन शेपस्य श्रावकत्वपर्यायस्य
शुद्धिर्भवति, ॥ ७ ॥ तथा स्थूलप्राणातिपातादिव्रतविराधनायां रौद्राध्यवसायेन संकल्पकृतायां निरवशेषश्रावकत्वपर्यायच्छेदं
कारयित्वा भूयोऽपि सम्यक्त्वं देशविरतिं वा स्वस्य आरोपयति, एवं विधं हि मूलप्रायश्चित्तम् अनेनैव अस्य शुद्धिर्भवति, ॥८॥ इति,
एवं च एतानि अष्टौ प्रायश्चित्तानि साधूनां साध्वीनां श्रावकाणां श्राविकाणां वा विशेषेण भवन्त्येव॥ तथा श्रीजिनभद्रगणिक्षमा-
श्रमणेन उक्तम्; अनन्तानुबन्धिभिः कपायैः सम्यक्त्वं, प्रत्याख्यानावरणैश्च सर्वविरतिचारित्रम्, अप्रत्याख्यानैश्च देशविरति-

संभवतो योज्यते, तद्यथा प्रत्याख्यानावरणकषायचतुष्कोदये सर्वविरतिरूपस्य चारित्रस्य मूलछेद्यं सर्वनाशरूपं दोषजातं भवति ॥ अप्रत्याख्यानकषायचतुष्कोदये, देशविरतिचारित्रस्य अनन्ताऽनुबन्धिकषायचतुष्कोदये तु सम्यक्त्वस्येति ॥ न चैव-माभ्यां समत्या कल्पयित्वा ख्यातम् इतिवाच्यं; जीतकल्पसूत्रकृताश्रीजिनभद्रगणिक्षमाश्रमणेनापि इयं गाथा एव-मेव महाभाष्ये व्याख्यातत्वात्, तथाहि 'अतिचारा छेदंता सव्वे संजलणहेतवो हुन्ति सेसकसाओदयओ मूल-छिज्जं च तारुहण" अथवा 'संजममूलछिज्ज तइयकलुसोदये नियतं सम्मत्तादी मूलछिज्जं पुण बारसण्हं पि,' इत्यतः सिद्ध श्राद्धस्य देशविरतेरविरतसम्यग्दृष्टेरपि मूलाख्यम् अष्टमप्रायश्चित्तं, तत्सिद्धौ तदधोवर्त्तीन्यपि आलोचनादीनि सप्त प्रायश्चित्तानि सिद्धान्येव, आलोचनादिछेदपर्य्यन्तसप्तप्रायश्चित्तशोध्यातिचारकारणस्य संज्वलनकषायोदयस्य गृहस्थेषु अपि भावात्, इत्यागमोक्तानि अष्टौ प्रायश्चित्तानि श्राद्धस्य, अत एव असौ गुरूणाम् आलोचयति, यथा भगवन्नद्य अहं परतीर्थिकेन पार्श्वस्थादिना वा आलपितो यदि वा चैत्यादिकार्यनिमित्तं समर्थ इति कृत्वा, मया स उचितदानादिना आवर्जित इत्यादि गुरोः पुरः प्रकाशयति, आलोचनामात्रेण अस्य शुद्धिर्भवति, ॥ १ ॥ तथा प्रतिक्रामति, सहसाकाराद्, अनाभोगात् वा, कुलविरुद्धे धर्मविरुद्धे वा भाषिते, चतुर्विधेऽपि अनर्थदण्डे कृते हिंसा दोषानापत्तौ गुर्वादिषु मनसा प्रद्वेषे, वाचान्तरभाषादौ कायेन पुरो गमनादौ च कृते सति, तदैव स परितापं मिथ्यादुष्कृतं ददाति, प्रतिक्रमणमात्रेणैव अस्य शुद्धिर्भवति ॥ २ ॥ तथा परख्यादौ स्पृहामात्रकारणशङ्कायां गुरोः समक्षम् इदम् आलोच्य मिथ्यादुष्कृतं ददाति, आलोचनाप्रतिक्रमणरूपेण

क्षाभिलापी स्वभावादेव प्रतिपत्स्यते, ? तर्हि श्राद्धानामपि मध्यात् तादृग् विशेपतः प्रतिपत्स्यते, तेपां हि वन्दनादिव्यवहारव्यति-
क्रमाभावेन लाघवाऽभावात्, अपि च, न सर्वेषु अपि अपराधेषु छेदमूले एव प्रायश्चित्ते; शेषाणां वैयर्थ्यप्रसङ्गात्, किं तर्हि कस्मिं-
श्चिदपि किमपि, ततो यस्मि-न्नपराधे छेदो मूलं वा भणितमस्ति, तस्मिन्नेव तद्दीयते नान्यस्मिन्, आशातनादोषप्रसङ्गात्,
स च अपराधो न सर्वैरपि सर्वदा क्रियते, महत्तरत्वात्, किं तर्हि ? कदाचिदेव केनापि एकेनैव; तस्य चेन्महान् पश्चात्ताप
उत्पद्यते, तदा ऽसौ साधुर्वा गृहस्थो वा भवतु, अवश्यमेव छेदं मूलं वा प्रतिपद्यते, शक्याऽनुष्ठानत्वात्, अन्यथा छेदसूत्रकर्तृ-
श्रीभद्रबाहुस्वामिपादा न एवं ब्रूयुः, यथा मूलेनैव प्रायश्चित्तेन द्वादशकपायोदयभाविसम्यक्त्वाणुव्रतादिमूलगुणघातकं दोपजातं
छेद्यते इति, उक्तं चैतत् तैः, यथा 'मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं', इति ततो निश्चितम् आलोचनादीनि मूलान्तानि
अष्टौ प्रायश्चित्तानि गृहिणोपि गृह्णन्ति इत्यर्थः ॥ अतएव च दृश्यन्ते पूर्वाचार्यपरंपरागतायां जीतव्यवहारसामाचार्यां सम्य-
क्त्वाणुव्रतादिद्वादशविधश्राद्धधर्मातिचारेषु यथास्थानम् अमूनि, यत्तु निशीथादिषु भेदेन नोक्तानि, तत्र ग्रन्थगौरवादिप्रसङ्गः का-
रणम्, न पुनरसत्त्वम्, तदाहि जीतसामाचार्यामपि न स्युः, नहि कूपान्तरसज्जलं निपाने संभवति, सन्ति च वृद्धपरम्पराग-
तत्वेन आगमकल्पायां जीतसामाचार्यां, तस्मान्निशीथादिश्रुतान्तर्गतानि एव; केवलं स्थालीपुलाकन्यायेन निर्ग्रन्थाश्रितप्राय-
श्चित्तदर्शनेन तत्र अवधार्याणि, समानत्वात्, तथा छेदमूलयोः पूर्वप्रतिपन्नस्य प्रतिपद्यमानकस्य वा गृहस्थस्य अनुपलक्षणं, तद-
भिज्ञानस्य लघुत्वस्य अभावात्, नहि गृहस्थः पर्यायस्य देशतः सर्वतो वा छेदे जाते यतिवत् कस्यापि पश्चाद् वन्द्यते, वन्द्य-

चारित्रं च विनाश्यत इति ॥ तथाहि विशेषावश्यके—सम्मत्तममेयाइं महव्वयाणुव्वयाइं मूलगुणा, मूलं सेसा–हारो बारस-तग्घाइणो एए" 'सेसाहारो, इत्यादि शेषाणाम् उत्तरगुणानाम् आधारः स्थानं, तद्घातिनः, सम्यक्त्वादिमूलगुणघातिनः, एते अनन्तानुबन्ध्यादयो द्वादशकषाया इति' ॥ तथाच एकतरकषायोदयेन सम्यक्त्वाद्यन्यतरस्मिन् घाते, यदि श्राद्धः प्रायश्चित्तं न प्रतिपद्यते, तदा तदनन्तरं प्रभूततममपि अनुष्ठीयमानं भग्नमूलगुणस्य अनुष्ठानं निष्फलमेव स्यात्, यदुक्तम् 'अविसुद्धस्स न वड्ढइ गुणसेढी तत्तिया ठाइति, तस्माद् यथा साधुः साध्वी वा स्वव्रतस्य उज्जीवनाय प्रायश्चित्तं प्रतिपद्यते, तथा श्राद्धः श्राद्धिकाऽपि सम्यक्त्वस्य देशविरतेर्वा पुनरुज्जीवनाय प्रायश्चित्तं प्रतिपद्य भणिष्यमाणविधिना करोत्येव, अन्यथा ऐर्यापथिक्या अप्यप्रतिक्रमणप्रसङ्गः, तत्प्रतिक्रमणस्य आलोचनाप्रतिक्रमणकायोत्सर्गरूपप्रायश्चित्तकरणलक्षणत्वात्, तथा पूर्वोक्तस्वरूपाणां आलोचनादीनाम् अष्टानामपि अकरणप्रसङ्गः, तद्रूपत्वात्। ननु भवन्तु प्रायश्चित्तानि गृहस्थस्य; परन्तु षडेव न पुनर्यतिवद् अष्टौ छेदस्य, मूलस्य वा, प्रतिपत्ता सूत्रेऽदृश्यमानत्वात्, नहि कश्चिद् गृहस्थोऽधुना श्रावकव्रतपर्यायस्य छेदं कारयन् पुनरपि देशविरतिं सम्यक्त्वं वा प्रतिपद्यमानो वा दृश्यते? इति चेद् न, एवं हि चतुर्णां प्रायश्चित्तानां व्यवच्छेदः प्राप्नोति, भवतु नेति चेद्, न, सूत्रे हि तीर्थं यावत् अष्टौ प्रायश्चित्तानि वर्तिष्यन्त इत्युक्तमस्ति, तथाहि—दस वा अणुसज्जंती जा चउदसपुव्विपढमसंघयणं, तेण परेणढविहं जा तित्थं ताव बोद्धव्वं ॥ इति ॥ ननु छेदमूले साधवः प्रतिपत्स्यन्ते इत्येतावतैव सूत्रं चरितार्थम्? इति चेन् न, तेऽपि हि कालमाहात्म्यात् सांप्रतं प्रतिपद्यमाना न दृश्यन्ते, अथ साधूना म यात् कश्चित्सो-

क्षागिलाषी स्वभावादेव प्रतिपत्स्यते, ? तर्हि श्राद्धानामपि मध्यात् तादृग् विशेषतः प्रतिपत्स्यते, तेषां हि वन्दनादिव्यवहारव्यात-
क्रमागतेन लाघवाऽभावात्, अपि च, न सर्वेषु अपि अपराधेषु छेदमूले एव प्रायश्चित्ते; शेषाणां वैयर्थ्यप्रसङ्गात्, किं तर्हि कासि-
श्चिदपि किमपि, ततो गम्भि-न्नपराधे छेदो मूलं वा भणितमस्ति, तस्मिन्नेव तदुदीयते नान्यस्मिन्, आशातनादोषप्रसङ्गात्,
स न अपराधो न सर्वैरपि सर्वदा क्रियते, महत्तरत्वात्, किं तर्हि ? कदाचिदेव केनापि एकेनैव; तस्य चेन्महान् पश्चात्ताप
उत्पद्यते, तदाऽसौ साधुर्वा गृहस्थो वा भवतु, अवश्यमेव छेदं मूलं वा प्रतिपद्यते, शक्याऽनुष्ठानत्वात्, अन्यथा छेदसूत्रकर्तृ-
श्रीभद्रबाहुस्वामिपादा न एवं ब्रूयुः, यथा मूलेनैव प्रायश्चित्तेन द्वादशकषायोदयभाविसम्यक्त्वाणुव्रतादिमूलगुणघातकं दोषजातं
छेद्यते इति, उक्तं चैतत् तैः, यथा 'मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं', इति ततो निश्चितम् आलोचनादीनि मूलान्तानि
अष्टौ प्रायश्चित्तानि गृहिणोऽपि गृह्णन्ति इत्यर्थः ॥ अतएव च दृश्यन्ते पूर्वाचार्यपरंपरागतायां जीतव्यवहारसामाचार्यां सम्य-
क्त्वाणुव्रतादिद्वादशविधश्राद्धधर्मातिचारेषु यथास्थानम् अमूनि, यत्तु निशीथादिषु भेदेन नोक्तानि, तत्र ग्रन्थगौरवादिप्रसङ्गः का-
रणम्, न पुनरसत्त्वम्, तदाहि जीतसामाचार्यामपि न स्युः, नहि कूपान्तरसजलं निपाने संभवति, सन्ति च वृद्धपरम्पराग-
तत्वेन आगमकल्पायां जीतसामाचार्यां, तस्मान्निशीथादिश्रुतान्तर्गतानि एव; केवलं स्थालीपुलाकन्यायेन निर्ग्रन्थाश्रितप्राय-
श्चित्तदर्शनेन तत्र अवधार्याणि, समानत्वात्, तथा छेदमूलयोः पूर्वप्रतिपन्नस्य प्रतिपद्यमानकस्य वा गृहस्थस्य अनुपलक्षणं, तद-
भिधानस्य लघुत्वस्य अभावात्, नहि गृहस्थः पर्यायस्य देशतः सर्वतो वा छेदे जाते यतिवत् कस्यापि पश्चाद् वन्द्यते, वन्द्य-

मानो वा कैरपि न वन्द्यते, इति, आलोचनायाः प्रायश्चतुःकर्णत्वेन इतरजनानाम् अप्रमेयत्वात् च, अतएव आलोचनाग्रहण-विधिः पृथक्नोक्तः, करणविधिस्तु मनाक् भिन्नमत्रोक्त इवानुमीयते, अन्यथा सूत्रकारोऽत्र 'आलोअणानिमित्तं पारद्धवम्मि, इत्यादि चतुश्चत्वारिंशद् गाथाभिः सिद्धान्तानुहारिणमेव करणविधिं न प्रत्यपादयिष्यत; तथा आलोचनाविषये निदर्शनानि आगमेषु बहून्येव, तथाहि गुरुनलगोऽपि, ऋषिघात्यपि, आजीवकदर्शनी अपि, मंखलिपुत्रो गोशालक आलोचननिन्दनग-र्हणाभि-रेव केवलाभि-र्द्वादशदवलोके समुत्पन्नः ॥ तथा प्रान्तदेशवासिश्रावकपुत्रिका, महाधार्मिकाऽपि, अनालोचिता प्रतिक्रान्तविवाहक्षणकृतमहर्षिजुगुप्साप्रभावतो वेश्यादुहितृत्वेन उत्पन्ना, महादुर्गन्धी इत्यागमोक्तेन श्राद्धानां प्रायश्चित्तप्रति-पत्ति-रितिसिद्धम् ॥ तथा च युक्तमेव व्यवस्थाकरणम् इत्यर्थः ॥ ४५ ॥ ननु सोय किर सामाइयं करिन्तो मउडं अवणेइ, कुंडलाणि नाममुद्दं तंबोलपावारगमाइ वोसिरइ, इत्यावश्यकचूर्णिप्रामाण्यात् सर्वं प्रावारकादि त्यक्त्वा सामायिकं पोषधं वा गृह्णाति गृहस्थः, तथाच असौ तस्मिन् गृहीते निष्प्रावरण एव तिष्ठति, उत कदाचिद् गृह्णाति प्रावरणम्? यदापि गृह्णाति तदापि कति तानि गृहीतुं कल्पन्ते? इति प्रश्ने प्रवचनमाह—

उस्सग्गनयेणं सावगस्स परिहाण साडगादुत्तरं ॥ कप्पइ पाउरणाइं न सेसमयवागओ तिण्णि ॥ ४६ ॥

व्याख्या—'उत्सर्गनयेन' उत्कृष्टनीत्या, 'श्रावकस्य' इदं च पदं यद्यपि निर्विशेषणम् उपन्यस्तं, तथापि वक्ष्यमाणायाम् "एवं कप्प सामाइआ वि" इत्यतिदेशगाथायां सामायिकस्थश्राविकाग्रहणाद् इहापि सामायिकस्थस्य श्राद्धस्य इति ज्ञेयं, शेषस्य

स्वेच्छाचारित्वात्, परिधानशाटकात् अधोंऽशुकात् 'अपरम्' अन्यद् 'शेषम्' अधिकम्, 'प्रावरणादि' प्रावरणीयम् -उत्तरीयम् तत्प्रभृतिशुध्यमानप्रतिलेखनमपि, किं पुनरशुध्यमानप्रतिलेखनम् अङ्गनटोपकादि, न कल्पते न युज्यते परिभोक्तुमिति शेषः, तदानीं तस्य यतिभूतत्वात्, यदुक्तम् "सामाथियम्मि उ कए समणो इव सावओ हवइ जम्हा", इति यतयश्च हेमन्तेऽपि उत्सर्गतो ऽप्रावरणा एव तिष्ठन्ति, यदुक्तम् 'हेमन्तेसु अवाउडा' इति तथाच सामायिकस्थोऽपि उत्सर्गेण अप्रावरण एव तिष्ठति ॥ अपवादतः काष्टदाहशीतादिकारणम् आश्रित्य त्रीणि उत्तरीयाणि प्रावरीतुं कल्पन्ते, नाधिकानि, कालप्रतिलेखितानि अपि तस्य यतिवृत्तित्वात् ॥ यतीनां च शीताद्यपवादे कल्पत्रयस्य क्रमेण प्रावरणम् उक्तम्, तथाहि ओघनिर्युक्तिभाष्ये "जाहे तह वि न तरे, ताहे निविहेग पाउणेखोमं तेण वि असंथरं, तो दो खोमी पाउणे, ताहे, तहवि असंथरं, तो तइओ ओंणिं पाउणे इति" यत एव प्रावरणपरिभोग आपवादिकोऽत एव असौ परिधानात् अन्यद् वस्त्रं शीतदंशमशकादिकारणतः प्रतिसेवितुकाम एव सामायिकग्रहणक्षणे प्रावरणं संदेशयति, नान्यथा यथा उष्णकालादौ इति भावः ॥ ४६ ॥ इत्युक्ता सामायिकस्थस्य श्राद्धस्य उत्सर्गतोऽपवादतश्च कल्पप्रावरणस्य व्यवस्था, संप्रति श्राविकाया उत्सर्गतस्ताम् आह—

**एवं कयसामाइया वि साविगा पढमनयमएणेह ॥ कडिसाडग कंचुयमुत्तरिज्ज-वत्थाणि धारेइ ॥ ४७ ॥**

व्याख्या—'एवं' यथा सामायिकस्थः श्राद्ध उत्सर्गेण परिधानम् एव एकं वस्त्रं धारयति, तथा कृतसामायिका प्रतिपन्नाऽऽद्यशिक्षाव्रता, 'अपिः' समुच्चयार्थो, भिन्नक्रमत्वात्, अनन्तरपदेन योज्यते, श्राविका ऽपि, यदि वा यथास्थानमेव योज्यते,

कृतसामायिका ऽपि श्राविका किं पुनरकृतसामायिका ऽपि, अप्रत्याख्यातसावद्यव्यापारत्वेन तस्या अप्रतिलेख्यकञ्चुकगूणितशाटिकादिव्युत्सर्गे कारणाभावात्, 'प्रथमनयमतेन' उत्कृष्टन्यायेन उत्सर्गेण इत्यर्थः, 'इह' जिनमते कटिशाटककञ्चुकोत्तरीयवस्त्राणि धारयेत्, स्वदेहे यथा स्थानोपयुक्तान्येव निभृयात्, मकारो ऽलाक्षणिकः, तत्र 'कटिशाटकं' परिधानं 'कञ्चकं' कूर्पासकं, कञ्चुलिकेति यावत्, 'उत्तरीयम्' उपरितनांशुकम्, अयमभिप्रायो–यद्यपि सामायिकग्रहणवेलायां परिधानादन्यः सर्वोऽपि परिग्रहः, सावद्यव्यापारहेतुत्वात् व्युत्स्रज्यतया उक्तः, इत्यप्रतिलेख्यत्वादङ्गनवत् कञ्चुलिकागूणितशाटिके न सामायिके परिभोक्तुम् अर्हतः, तथापि स्वस्य अन्येषां च अशुभभावहेतुदर्शनस्तनजघनाद्यङ्गावयवाच्छादकतया बहुगुणा, कञ्चुलिका शाटिका प्रच्छदपटा इत्येतान् सामायिके ऽपि न व्युत्सृजन्ति, जिनवचनबहुमानात्, महासत्यः श्राविकास्तत: कथम् अन्यदा व्युत्सृजन्ति, तथा च या गृहिण्यो निरोगा अपि सम्यक्त्वप्रतिपत्त्यनन्तरं स्वदेशानुरोधाद्वा, घर्मादिकारणाद्वा, वस्त्रमालिन्यादिभयाद्वा, यूकापातादिशङ्कया वा, वैधव्यस्थित्या वा, अपरिहितकञ्चुका अस्थानविदीर्णपरिधाना अस्थगितशिरसः परिधाना-ऽञ्चलस्थगितशिरसो वा, स्त्रीवृन्दमध्येऽपि चिरं तिष्ठन्ति, किं पुनः पुरुषालोके ता विराधका एव बोद्धव्याः, प्रवचनलाघवहेतुत्वादिति ॥ ४७ ॥ इत्युत्सर्गतः सामायिकस्थश्राविकायाः त्रीण्येव वस्त्राणि कल्पन्ते इत्युक्तम्, अथ अपवादम् आश्रित्य कल्पवस्त्रसंख्यां, प्रतिक्रमणनीतिं चाह—

'वीयपण्णं तिण्हुवरि तिहिं उ वत्थेहिं पाउअंगी उ ॥ सामाइयवयं पालइ तिपयं परिहरइ पडिकमणे ॥ ४८ ॥

व्याख्या—'द्वितीयपदेन' अपवादेन शीतादिकारणेन इति यावत्, यदुक्तम् जासा लंवणसेवा तं तियपयं वदंति गीयत्था
इति, 'त्रयाणां' शाटिकाकञ्चुकोत्तरीयरूपाणां उत्सर्गिकवस्त्राणाम् 'उपरि' ऊर्ध्वं त्रिभिरेव नाधिकैः, तुरेवार्थः, 'वस्त्रैः' प्रावरणैः
'प्रावृताङ्गी' आच्छादिताङ्गी, 'तुः' पुनरर्थोऽन्त्यपदेन योक्ष्यते, 'सामायिकव्रतं' सामायिकनियमं 'पालयति' पारं नयति, अत
एवच शरीरलग्नवस्त्रत्रयाद् अधिकम् एकं द्वे वा त्रीणि वा वस्त्राणि प्रावरीतुकामा अप्यसौ प्रावरणं संदिशा प्येव प्रावृणोति
नान्यथा, 'प्रतिक्रमणे' तु षोढाऽवश्यककरणवेलायां पुनः, त्रिपदं शीताबाधाद्यपवादपरिगृहीतं प्रावरणरूपं स्थानत्रयं 'परिहरति'
परित्यजति, स्वस्थानोपयुक्तैकैकशाटिकाकञ्चुकोत्तरीयेभ्योऽन्यत् प्रतिक्रमणकाले श्राविकाया न कल्पते इत्यर्थः ॥
ननु—अपवादे निर्ग्रन्थानां कल्पसप्तकम् अनुज्ञातम् अस्ति, तथाहि कल्पभाष्ये "अप्पा असंथरंतो निवारितो होइ तिहिं
उ वत्थेहिं गिण्हइ गुरूवदिन्ने पगासपडिलेहणे सत्त, तिन्नि कसिणो जहन्ने पंच य पडिदुब्बलाइं गिण्हिज्जा, सत्त य परिजुन्नाइं
एयं उक्कोसयं गहणं" इति 'निवारितो होइ त्ति, अग्न्यादिविराधनातो निवारितो भवतीत्यर्थः ॥ तत्कथं सामायिकस्थत्वेन निर्ग्र-
न्थतुल्यस्यापि श्राद्धस्य अपवादतः त्रीण्येव उक्तानि? कथं वा सामायिकस्थत्वेन निर्ग्रन्थी समायाः श्राविकाया अपि त्रीण्येव
उक्तानि? इति चेत् उच्यते; यतीनां यावत् जीविकव्रतत्वेन, विकृष्टतपःकारित्वेन, शीतलाहारभोजित्वेन, अनभ्यङ्गशरीरत्वेन,
प्रायोमलिनजीर्णवस्त्रत्वेन, अनिवातोपाश्रयत्वेन, रूक्षवृत्तित्वेन, च शीतं प्रचुरं लगति, नन्न च मोढेनाल्पसंहननत्वेन, ने घनमा-
नाध्यन्ते, इति तेषां सप्तोपदिष्टानि; श्राद्धास्तु मुहूर्त्तमात्रपाल्यसामायिकव्रतत्वादिना तद् विपरीता इति तेषां कियतापि शीतेन

मोटेनापि न काचिद् आबाधा भवति; इति त्रीण्येव उक्तानि ॥ एवं श्राविकाणामपि भाव्यम्, अत्यन्तापवादे तु एवं, "जहा समाहिं बहूणि वि कडाइं पाउणइ" इति वचनात्साधूनाम् इव द्वयानामपि एषां बहून्यपि प्रावरीतुं कल्पन्ते ॥ यदि वा विकृष्टतपःप्रतिपत्तिवशाद् यदा एष सामायिके चिरकालं तिष्ठति, यथोपधानतपोवाही, तदास्य गृहस्थस्यापि तावन्ति प्रावरणानि कल्पन्ते ॥ यावद्भिः प्रावृत्तैः शीतघर्मादिना नाक्रम्यते, यद्यपि उपधानतपोवाही पौषधस्थ एव उच्यते, न सामायिकस्थः, तथापि पौषधे सति अवश्यमेव सामायिकं भवतीति, तदीया एव सर्वोऽपि उत्सर्गापवादादिव्यवस्था तत्र भवति, केवलं शय्यासंस्तारकादिविधिरेवात्र अधिकः, तन्मूलस्य शयनविधेः पौषधे एव उक्तत्वादिति ॥ 'पुव्वं जाहे तहवीत्यादि', ओघनिर्युक्तिभाष्येण कल्पत्रयस्य प्रावरणमेव आपवादिकं साधोरुक्तम्, नतु ग्रहणं, यत औधिकोपकरणान्तर्गतत्वेन उत्सर्गेण साधुः कल्पत्रयं गृह्णाति, यदुक्तं चतुर्दशोपकरणसंख्यायां 'तिन्नेव य पच्छादगा, इति, केवलम् इदं संवर्तितमेव सत् उत्सर्गेण वामस्कन्धेन वहति, शीतवातादिकारणेन पुनः प्रावृणोतीति, अत्र तु 'गिण्हइ गुरूवदिट्ठे' इत्यादिना कल्पभाष्येण कल्पसप्तकस्य ग्रहणमेव आपवादिकम् उक्तम्, ततो यति-रुत्सर्गेण तिस्रः प्रच्छादकाः संगृह्णाति, अपवादतस्तु सप्तप्रावृणोति, च तिस्रो ऽपि, सप्तापि अपवादत एवेति, न पूर्वापरविरोधः इत्यर्थः ॥ ४८ ॥

ननु—एवमपि अनाभोगेन वा, सहसाकारेण वा, यदि पूर्वाऽभ्यासवशात् कञ्चुकरहितया ऽपि श्राविकया सामायिकं गृहीतं स्यात्, तदा किं कार्यम् इत्यत आह—

जइ कंचुगाइ रहिया गिण्हइ सामाइयं च सुमरिज्जा ॥ तो पच्छा अंगट्ठं करेइ गरहेइ पुव्वकयं ॥ ४०॥

व्याख्या—'यदि' 'कञ्चुकेन' कूर्पासकेन स्त्रीलिङ्गत्वं प्राकृतत्वात् 'रहिया' रहिता वर्जिता, 'गृह्णाति' प्रतिपद्यते, 'सामायि-
कम्' आद्यशिक्षाव्रतं, 'च:' समुच्चयार्थो ऽनन्तरपदेन योक्ष्यते, 'स्मरेत्' चिन्तयेत्, 'तो' ततः पश्चात् अनन्तरम् 'अंगट्ठमिति'
स्थगनं, स्थग आच्छादनम् 'अङ्गस्य' वक्षस्थललक्षणस्य, स्थगो अङ्गस्थगः, उरश्छदः, तं करोति, यदि स्वगृहे तदा प्रत्यास-
न्नत्वात् स्मृत्यनन्तरमेव गृहीतकञ्चुलिकया, अथ पौषधशालायां तदा उत्तरीयाञ्चलेन उद्घाटित-गोप्यावयवा क्षणमात्रमपि न
तिष्ठति, साध्वी समानत्वादिति भावः, 'गर्हेत' गुरुसाक्षिकं निन्देत्, पूर्वम् अङ्गस्थगनकरणात्, प्राग् कृतम् अनुष्ठितं पूर्वकृतम्,
अनुष्ठानम् इति विशेष्यम् अत्र ज्ञेयम् ॥ यथा हा मया पातकिन्या मोक्षदायकत्वेन अचिन्त्यचिन्तामणिकल्पं सामायिकाऽनु-
ष्ठानं प्रमादाद् अविधिकरणेन विराधितमिति ॥ यद्यपि अत्र एकैव गर्होक्ता, तथापि निन्दापि ज्ञेया, सहचारित्वात्, यदुक्तं
'निन्दामि गर्हामीत्यादि', मिलितयोश्चानयोः क्रियमाणयोर्महती शुद्धिर्भवति, तथाहि । निन्दणयाएणं भंते ? जीवो किं
जणेइ ? गोयमा ? निंदणयाएणं पच्छाणुतावं जणइ ॥ पच्छाणुतावेणं विरज्जमाणे करणगुणसेढिं पडिवज्जइ,
करणगुणसेढिं पडिवन्ने य अणगारे मोहणिज्जं कम्मं उग्घाएइ, तथा गरिहणयाएणं भंते जीवे किं जणइ ? गो-
यमा गरहणयाएणं अपुरिक्कारं जणइ, अपुरिक्कारेणं जीवे अप्पसत्थेहिंतो जोगेहिंतो नियत्तइ, पसत्थेहिं य
पवत्तइ, (पडिवज्जइ) पसत्थजोगपडिवन्ने य णं अणगारे अणंतघाई पज्जवे खवेइ त्ति ॥ ननु यदि कञ्चुक-

रहितया स्त्रिया सामायिकं गृहीतं, तत्कुतो निन्द्यं गर्ह्यं वा ? नहि तत्र कश्चित् सावद्यव्यापारो जातो, नापि असमभावः, इति, यदि पुनरपरिहितेन कञ्चुकेन कृतमिति निन्द्य, तर्हि पुरुषेण न कर्त्तव्यमेव इदम् ? तस्य कञ्चुकपरिधानासंभवात् ? यदि वा अनेनापि अङ्गिकया परिगृहीतया एव कर्त्तव्यम्, अपरिहिततया कृतं तदपि गर्ह्यं स्यात्, नचैवं, तत् तथाकृतमपि स्त्रिया न गर्ह्यं, किं तर्हि अनुमोदनीयमेव; अप्रतिलेख्यकञ्चुकत्यागपूर्वकत्वात्, इति, 'गर्ह्येति, यदुक्तं तदयुक्तमिव प्रतिभाति ? इति चेद् नैवं; नहि स्वप्रतिज्ञाभञ्जनमेव एक निन्दताया हेतु', किं तर्हि ? भगवदर्हदाज्ञाखण्डनमपि; ततो यद्यपि अत्र सावद्यव्यापारः कोऽपि न जातो, नापि, समभावस्त्यक्तस्तथापि भगवदाज्ञा खण्डिता एव अविधिकरणेन, भगवता हि सर्वज्ञेन स्थगिताङ्गीभिरेव स्त्रीभिः क्रियमाणस्य धर्मानुष्ठानस्य बहुगुणताम् आलोच्य पुरुषापेक्षया तासाम् उपकरणबाहुल्यम् उक्तम् ॥ तथाहि–साधूनां चतुर्दशैव उपकरणानि, साध्वीनां च पञ्चविंशतिः, तथा श्राद्धस्यैव देवपूजादिद्रव्यस्तवकरणवेलायां 'एगसाडएणं उत्तरासंगेणमिति, वचनेन परिधानोत्तरासङ्गरूपे द्वे वस्त्रे उपदिष्टे, तथा सामायिकादिभावस्तवकरणक्षणेऽपि अस्यैव परिधानाद्, अन्येषां वस्त्राणां "सव्वं पावारगमाइ वोसिरइ" इत्यनेन त्याज्यत्वम् उक्तम् ॥ ननु श्राविकायाः, तस्या एकवस्त्राया द्विवस्त्राया वा धर्मानुष्ठानेषु अनधिकृतत्वात्, यदि पुनः पुरुषवद् एकेनैव परिहितेन परिधानेन, द्वाभ्यामेव वा परिधानोत्तरीयाभ्याम्, आवृताङ्गी स्त्री जैनधर्मानुष्ठानेषु अधिकारिणी स्यात्, तदा पञ्चविधमपि अभिगमं पुरुषवद् एषा*ऽपि अकरिष्यत, पुरुषस्तु एनम् एवं करोति ॥ सचित्ताणं दव्वाणं विउस्सग्गणयाए ॥ १ ॥ अचित्ताणं दव्वाण अविमोयणयाए ॥ २ ॥ एगसाडएणं

उत्तरासंगेणं ३ चक्खुप्फासे अंजलिपग्गहेणं ४ मनसो एगग्गयाए ५ इति, न चैवं स्त्री करोति, एनां प्रति सूत्रे तृतीयालापक-स्थाने कुतोऽपि कारणात्, आलापकान्तरस्यैव भगवद्भिरुक्तत्वात् ॥ तथाहि—भगवत्याम् सच्चित्ताणं दव्वाणं विउस्सग्गण-याए, अचित्ताणं दव्वाणं अविमोयणयाए २ विणओणयाए गायलट्ठीए ॥ ३ ॥ चक्खुफासे अंजलिपग्गहेणं ॥ ४ ॥ मणसो एगग्गयाए इति ॥ ५ ॥ तस्मादेकवस्त्रा द्विवस्त्रा वा स्त्री धर्मानुष्ठानेषु अनधिकारिण्येव, इति ॥ तया द्विवस्त्रया कृतोऽभिग-मादिर्द्रव्यस्तवोऽपि निन्द्यः, ॥ किं पुनः सामायिकादिर्भावस्तवः, यदि पुनः कञ्चुकाद्येकतरवस्त्रहीनत्वेन अनधिकारिण्या ऽपि स्त्रिया कृतं सामायिकाद्यनुष्ठानम् अनिन्द्यम्, तर्हि परिधानरहितेन श्राद्धेनापि कृतम् अनिन्द्यमेव, एकवस्त्रत्यागस्य उभयत्रापि तुल्यत्वात्, अथ नग्नगृहस्थकृतं निन्द्यमेव ? जुगुप्सनीयत्वात्, तर्हि कञ्चुकरहितया स्त्रिया ऽपि कृतं निन्द्यं; तस्या अपि सतां जुगुप्सनीयत्वात् ॥ असतां च स्त्रश्च मोहोद्दीपकत्वेन अनेकानर्थहेतुत्वात् च ॥ किंच प्रतिलेखयितुम् अशक्यः कञ्चुक इति ॥ यदि तमन्तरेण कृतं सामायिकम् अनुमोदनीयं ? तर्हि पौषधं तथा कृतं विशेषेण अनुमोद्यं स्यात्; तस्य विशिष्टानुष्ठानत्वात्, अप्रतिलेखितेनापि हि परिधानेन, परिधानोत्तरीयाभ्यां वा सामायिकं गृह्यते, वन्दनं दीयते, प्रतिक्रमणं च क्रियते, न पुनः पौषधं गृह्यते, यदापि कथमपि गृह्यते, यथा पश्चिमरात्रौ, तदापि मुहूर्तैकानन्तरम् उद्गच्छति सूर्येऽवश्यमेव प्रतिलेख्यत एवैतत्, अन्यथा दोषः, नत्वेवं सामायिके, ततो यदि अप्रतिलेख्यत्वात् सामायिके कञ्चुकोऽनुचितस्तर्हि पौषधे विशेषेण अनुचितः, तथाच न पौषधे कथमपि असौ परिधीयेत, न त्वेनम् अस्ति, नहि कस्मिंश्चिदपि धर्मगच्छे, स्त्रियः पौषधे कञ्चुकं न परिदधति,

अपि तु सर्वेषु परिदधाति एव, लोके लोकोत्तरे चाऽस्य वृद्धपरम्परागतत्वात्, गोप्यावयवगोपकत्वेन मगुणत्वाच, तस्माद् यथा "एगसाडगेणं उत्तरासङ्गेण" इत्यालापको न स्त्रीविषयतया "सव्वं पावारं गमाइ वोसिरइ" इत्यपि, यदि वा "सव्वं पावार-गमाइ वोसिरइ" इति वचनप्रामाण्यात् पुरुषः परिधानादन्यदेव वस्त्रं व्युत्सृजति, न पुनः परिधानमपि, स्त्रीतु परिधानकञ्चुको-त्तरीयेभ्यो ऽन्यतरदेव, न पुनः परिधानादीनि अपि, तेषां शिष्टानुमतत्वेन तस्या अपरिहार्यत्वात्, तथाच तदेकतरहीनया स्त्रिया कृतं, दिगम्बरनरकृतम् इव सामायिकानुष्ठानम् अविधिना कृतत्वात् निन्द्यम् एवेति, युक्तमेव उक्तम्, 'गरहइ पुव्वकयं' इति भावः ॥ ४९ ॥

ननु—अप्कायत्वाविशेषेऽपि मेघजलाद् भूमिजलं भिन्नकारणत्वाद् इति, भिन्नगुणत्वाच्च भिन्नं द्रव्यं भवतु, परन्तु यदेतदेव मेघजलं भूमिजलं वा एकत्र घटे स्थितम् एलाभिर्वासितं, द्वितीये तु मुस्ताचूर्णेन, तदा तस्य जलस्य द्विधुस्थापि एकत्वात्, तद्ग-न्धयोश्च द्वयोरपि सुरभित्वेन एकजातीयत्वाच, किम् अभिन्नद्रव्यता, उत गन्धभेदात् भिन्नद्रव्यता ? इति प्रश्ने सति आह—

'एलामुत्थाइगयं भिन्नं भिन्नं जलं भवे दव्वं' ।

व्याख्या—एला मुस्ता च द्वे अपि प्रसिद्धे ते आदी येषां ते तथा, तान् गतं भिन्नभाजनस्थत्वात्, भेदेन एकभाजनस्थत्वात् वा, क्रमेण प्राप्तं, यदि वा ते गता उत्करीत्या पतिता यत्र तद् एलामुस्तादिगतम्, एलामुस्तादिभिः पृथक् पृथक् प्रासुकीकृत-मित्यर्थः ॥ अत्र एलामुस्ते उत्कृष्टगन्धगुणतया उपन्यस्ते, इत्यादिशब्देन अन्यान्यपि उत्कृष्टवर्णरसगन्धस्पर्शान्येव ग्राह्याणि,

यथा 'फोगरंगखदिरचूर्णविभीतकदाडिमच्छल्ली ग्रीष्मातपवह्न्यादीनि तेपामेव परिणमकत्वात्, यदुक्तम् "अधिकगुणः परि-
णमक इति" केवलम् अशुभानि लशुनमूत्रादीनि शीघ्रमेव परिणमयन्ति, शुभानि चन्दनपाटलादीनि तु चिरेण, यदु-
क्तम् कल्पभाष्ये । तह तह चिरं न चिट्ठइ असुभेसु सुभेसु कालेणं ॥

वन्नरसगन्धफासा जे दव्वे जम्मि उक्कडा हुंति ॥

अस्याश्च चूर्णिः यस्मिन् द्रव्ये वर्णादयोऽशुभास्तेपि (खिप्पं क्षिप्रम्) परिणामयन्ति, शुभेषु तु चन्दनादिषु कालेणं परिणामो
भवइ 'चिरेण त्ति' 'भणियं होइ त्ति' जलं, सरः–कूपाद्येकतरत् पयः, भिन्नभाजनस्थं पूर्वापरकालभेदाद् एकभाजनस्थं चापीति,
शेषः, छन्दोनुरोधात् पदव्यत्ययः, अत्र हि भेद एव साध्य इत्यसौ एव क्रियया सम्बध्यते, 'भिन्नं भिन्नं' पृथक् पृथक्
'भवेत्' स्यात् द्रव्यं परिणामकभेदात्, नतु गन्धभेदात्, अन्यथा एकस्मिन् जलघटे स्तोकाः पुरातन्यो वा एलाः प्रक्षिप्ताः,
द्वितीये तु प्रभूता नवा वेति उभयत्रापि गन्धभेदात् द्रव्यभेदः स्यात्, नचैवं तस्मात् परिणामकभेदात् द्रव्यभेदः, तथाच कौ-
पत्वेन (कूपभवत्वेन) सारसत्वेन वाऽभिन्नयोरपि द्विष्ठत्वमात्रेण भिन्नयोरेलाभिर्मुस्तया च सुरभित्वेन समानं गन्धान्तरम्,
फोगरंगेण खदिरचूर्णेनच रक्तत्वेन, समानं वर्णान्तरं, विभीतकेन दाडिमछल्या च कषायत्वेन समानं रसान्तरं, ग्रीष्मसूर्या-
तपेन वह्निना चोष्णत्वेन समानं स्पर्शान्तरं च पृथग् आपादितयोरपि जलयो–र्भिन्नद्रव्यता, किं पुन–र्यानि परिणामकेन
गन्धान्तरं वर्णान्तरं रसान्तरं स्पर्शान्तरं च अविसदृशम् आपादितानि, तेषां सुतरां भिन्नद्रव्यता इत्यर्थः ॥ नचैतत् स्वमनीपि-

कया उक्तम्, इत्याह—

वण्णरसभेयओ जं दव्वविभेओ वि समयमओ ॥ ५० ॥

व्याख्या—चक्षुषा ग्राह्यः, परिणामः कालादिः, पञ्चधा वर्णः, रसनया ग्राह्यस्तिक्तादिः षोढा रसः, उपलक्षणत्वाद् गन्धस्पर्शावपि ज्ञेयौ, तत्र घ्राणेन ग्राह्यः सुरभ्यादि-द्वेधा गन्धः, स्पर्शनेन ग्राह्यः परिणामः कठिनादिरष्टधा स्पर्शः, वर्णरसयोर्भेदः पूर्वस्मात् वर्णादेर्भावकद्रव्यसान्निध्येन अन्यो वर्णादिः वर्णरसभेदः तस्मात् वर्णरसभेदतः वर्णरसगन्धस्पर्शभेदत इत्यर्थः, 'जं' यस्मात्कारणात् द्रव्यस्य भेदोऽन्यत्वं द्रव्यभेदः, सोऽपि न केवलं वर्णादीनां भेदः पर्यायत्वात्, 'समयमतः' सूत्रोक्तः तद् भेदात् द्रव्यभेदोऽपि समयमतः, धर्म्मधर्म्मिणोः कथंचिद् अभेदस्यापि सूत्रे प्रतिपादितत्वादिति ॥ अथवा अपिर्भिन्नक्रमे, तथाच एवं योजना, न केवलम् द्रव्यक्षेत्रकालभेदात् द्रव्यभेदः, समयमतो वर्णरसभेदतोऽपि, वर्णान्तरादीनामपि भावरूपत्वेन द्रव्यभेदकत्वात्, अत एव निशीथभाष्यचूर्ण्यां शीतोदकस्य उष्णोदकस्य वा प्रासुकस्य चत्वारो भेदा उक्ताः, यथा 'सीतेतर फासुक चउहा, दव्वे संसट्ठ सीसगं खित्ते, काले पोरिसिपरओ, वन्नाई परिणयं भावे, जं सीओदगं फासुअं इतरं ति, जं च उण्होदयं फासुयं तं चउव्विहं, दव्वओ १ खित्तओ २ कालओ ३ भावओ ४ य तत्थ दव्वओ जं गोरस—संसट्ठे भायणे छूढं, सीतोदगं, तेण गोरसेण परिणामियं, दव्वओ फासुअं । १ । खित्तओ कूवतलादीसु ठिईअं महुरं लवणेणं मीसिज्जइ ॥ लवणं वा महुरेणं ॥ २ ॥ कालओ, जं इंधण छूढे पहरमित्तेणं फासुअं भवइ ॥ ३ ॥ भावओ, जं वन्नगंधरसफरिस विप्परिणयं तं

नन्नु—वर्णादीनाम् चतुर्णामपि भेदाद् द्रव्यभेदः, उत एकैकस्यापि? उच्यते उभयथापि १
भावओ फासुयं ॥ ४ ॥ इति ॥ नन्नु—वर्णादीनाम् चतुर्णामपि भेदाद् द्रव्यभेदः, उत एकैकस्यापि? यदा तु एकैकस्य तदा चिरेण
केवलं यदा चतुर्णामपि भेदः तदा शीघ्रमेव द्रव्यभेदो भवति, यथा अवश्रावणादिपाते जलस्य, यदा तु एकैकस्य तदा चिरेण
शेषाणां पूर्वधर्मोपग्रहहेतुत्वात्, यथा चन्दनपाते जलस्य ॥ यदुक्तं कल्पभाष्यचूर्ण्योः 'जो चंदणेण कडुरसो संसट्ठजले य दूसणा
जाओ ॥ सो खलु दगस्स सत्थं फासो उ उवग्गहं कुणइ ॥ १ ॥ चन्दणस्स कडुरसो तं उदयस्स सत्थं, फासो सीयलो सो
पुण जलस्स वि उवग्गहं करेइ ॥ २ ॥ तेण चिरेणं विद्धंसइ संसट्ठ पाणगस्स वि एमेव ॥ नवरं अंबो रसो फासो सीयलो चेवत्ति
॥ ३ ॥ नन्नु—यदि वर्णाद्येकतरस्यापि भेदात् द्रव्यभेदः, तर्हि प्रातर्यद् उष्णक्षीरादिकम् ओदनादिकं वा पीतं, भुक्तं वा,
तदेव क्षणान्तरे शीतीभूतं सद् द्रव्यान्तरं स्यात्, स्पर्शभेदाद्? इति चेद्, नैवं, नह्यसौ शीतस्पर्शः परिणामकद्रव्यान्तरज-
नितः, किं तर्हि? स्वाभाविक एव, सूर्याग्न्यादिव्यतिरिक्तानां सर्वेषामपि सहजेन अनुष्णस्पर्शत्वात्, नच स्वाभाविकैः—वर्णा-
दिभिर्भेदं कश्चिद् ब्रूते, एकस्यापि द्रव्यस्य अनेकद्रव्यत्वप्रसङ्गात्, किं तर्हि औपाधिकैः; तैरपि न यादृशैस्तादृशैः, किं तर्हि
विशिष्टैः, अत एव स्त्यानघृतादीनाम् औष्ण्यमात्रकरणेऽपि न द्रव्यान्तरत्वम्, तथाच शीतीभूतमपि क्षीरादिकं न द्रव्यान्तरं
स्वाभाविकस्पर्शवत्त्वात् 'अत एव अपराह्णेऽपि पूर्वाह्णभुक्तद्रव्यतयैव तत्परिभुज्यते न द्रव्यान्तरतया ॥ नन्नु—परिणमकद्रव्या-
न्तरजनितस्पर्शान्तराभावेऽपि त्रिदण्डोत्कलितस्य जलस्य प्रहरत्रयादेरूर्ध्वं द्रव्यान्तरत्वम् उच्यते, सचित्तीभूतत्वात्? इति
चेद्, नैवं, नहि द्रव्यस्य सचित्तत्वात् भेदो भवति, किं तर्हि विरुद्धधर्माध्यासात् कारणभेदात् वा ॥ अन्यथा अपक्वचणकादि-

दालिभक्षणे, तिलवर्त्तिभक्षणे वा, सकुलनिष्कुलद्राक्षादिभक्षणे वा, द्रव्यद्वयभक्षणप्रसङ्गः, तत्र केषांचित् अपरिणतत्वेन सचित्तानामपि चणकादीनां भावात्, तथाच सचित्तनियमस्य इव द्रव्यसंख्यानियमस्यापि प्रभङ्गप्रसङ्गः, नच असौ समीचीनम् द्रव्यनियमभङ्गशोधकप्रायश्चित्तस्य तत्र अदानात्, तस्मात् त्रिदण्डोद्वृत्तं जलं क्षणान्तरेण शीतीभूतमपि तदेव द्रव्यमिति भावः ॥ ननु—भवतु भिन्नभाजनस्थम् एकमपि जलम् एलामुस्तादिभि-र्विभिन्नद्रव्यैः प्रासुकीकृतत्वात् भिन्नं भिन्नं द्रव्यं, परं यदि पौषधिकाः श्राद्धाः श्राद्धिका वा तादृशमपि तत् स्वस्वगृहाद् पृथक् पृथक् आनीय पौषधशालायाम् एकत्र कलशादौ क्षिपन्ति, तदा तदेकं द्रव्यम् अनेकानि वा ? इत्यत आह—

जइ पोसहसालाए सड्ढासड्ढी वि पोसहम्मि ठिया ॥ एगत्थ खिवन्ति भवे, तमेग दव्वं न संदेहो ॥ ८१ ॥

व्याख्या—'यदि' 'पौषधशालायां' धर्मस्थानविशेषे, श्राद्धाः श्राद्धिका वा, 'अपिर्वा शब्दार्थो' न समुच्चयार्थः, अन्यथा पौषधस्थानां श्राद्धानां श्राद्धिकानां चैकत्रापि अवस्थानप्रसङ्गः, पौषधे स्थिताः, गृहीतपौषधाः, 'एकत्र' कलशादौ भाजने, 'क्षिपन्ति' न्यस्यन्ति, एलामुस्तादिभिर्विभिन्नद्रव्यैः प्रासुकीकृतत्वेन भिन्नगुणत्वेन च भिन्नं भिन्नं द्रव्यं जलं कर्माऽत्र ज्ञेयम्, प्रकरणात्, तदा 'भवेत्' स्यात्, तत् नानोपाधिविशेषितं जलवृन्दम्, एकं विभक्तिलोपः प्राकृतत्वात्, एकमेव अवधारणस्य इष्टत्वात्, 'द्रव्यं' न सन्देहः, सर्वेषामपि तेषां भिन्नद्रव्यादिगुणानां जलानाम् एकेन उत्कृष्टगुणेन एकत्वेन परिणमितत्वात्, परिणम्यते हि अधिकगुणेन हीनगुणम्, यथा एको मुस्ताप्रासुकजलघटो द्वाभ्यां बिभीतक(बहेडा) प्रासुकजलघटाभ्यां मिलितो,

यदि वा द्वौ मुस्ताप्रासुकजलघटौ एकेनापि प्रभूतलवणप्रासुकजलघटेन मिलितौ, तथा चोच्यते "सुस्वादुतोयप्रवहा हि नद्यः समुद्रमासाद्य भवन्त्यपेयाः"[1] इति भावः ॥ ५१ ॥

अथ कृतया एव क्रियया कर्मबन्धो, न अकृतया; इति कस्यचिन्मतम् आशङ्कमानेन केनचित् पृष्टं यथा क्रोशचतुष्कादिना दिक्षु गमनपरिमाणे कृते, क्रोशार्धमपि अगच्छतः, क्रोशचतुष्कादिगमनभावी कर्मबन्धो भवति, न वेति? तत्रोत्तरमाह—

जेण दिसापरिमाणं कोसचउक्कं दुगं च कयमित्थ ॥ कोसद्धं पि न गच्छइ, तह वि हु बन्धो त्थ विरईओ ॥ ५२ ॥

व्याख्या—'येन' धर्मार्थिना 'दिशां परिमाणं दिक्परिमाणं, 'क्रोशानां चतुष्कं' क्रोशचतुष्कं, क्रोशद्विकं वा 'कृतं' विहितम्, अत्र क्रोशचतुष्कादिनियमविषयीकृतासु दिक्षु, क्रोशार्धमपि, दूरे क्रोशचतुष्टयादि इत्यपेरर्थः, 'न गच्छति' न याति, यत्तदोर्नित्याभिसम्बन्धात्, स इति गम्यते, 'तथापि' हुर्निश्चये, 'बन्धः' कर्मबन्धः, 'अस्त्येव' भवत्येव, अत्रार्थे हेतुमाह— अविरतेः विरत्यभावात्, बन्धस्य हि प्रवृत्तिरिव अविरतिरपि कारणम्, यदुक्तम् "बंधस्स मिच्छ अविरयकसायजोग त्ति हेयवो चउरो त्ति" इत्यर्थः ॥ ५२ ॥

ननु—मथितं दधि विकृतिरुत उत्कृष्टद्रव्यम्? यदि विकृतिस्तदा कथमपि उत्कृष्टद्रव्यं भवति वा नवा? यदि भवति, तदापि निर्विकृतिकप्रत्याख्याने कल्पते न वा? इत्यत आह—

---

१ अस्य पूर्वार्धन्तु-एवं 'गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।

जइ गालियं च दहियं, तहावि विगई जलं न जं पडइ ॥ पडिए वि जले तं निव्वियंमि विहिए न कप्पइ य ॥५३॥

व्याख्याः—'यदि' 'गालितं' वस्त्रमध्येन निष्कासितं, चकारोऽनुक्तम् मथितं समुच्चिनोति, ततो न केवलं पूर्वं हस्तेन विलोडितं गालितं चेत्यर्थः ॥ 'दधि' क्षीरज, तथापि विकृतिरेव एवोऽत्र द्रष्टव्यो अवधारणस्य इष्टत्वात्, नोत्कृष्टद्रव्यम्, द्रव्यान्तरेण परिणामान्तरम् अनापादितत्वात्, कियन्तम् अवधिं यावद्? इत्यत आह—'जलमिति' जलं पानीयं, यावत् 'न पतति' एकीभावेन तन्मध्ये न परिणमते, यतो द्रव्यान्तरेण हतैव विकृतिः, उत्कृष्टद्रव्यं भवति नान्यथा, यद् वक्ष्यति 'विगई दव्वेण हया जातं उक्कोसग भवे दव्वं ति, 'जलं' खण्डशर्कराजीरकलवणचूर्णादीनाम् उपलक्षणं, किन्तु पतितेऽपि अत्यर्थं परिणतेऽपि जले, जलखण्डाद्येकतरे, तद् दधि परिणामान्तरं लब्धघोलसंज्ञं, निर्विकृतिके प्रत्याख्यानविशेषे 'विहिते' कृते, 'न कल्पते' न भोक्तु संगच्छते, उत्कृष्टद्रव्यत्वात् ॥ एवं च यदा उत्कृष्टद्रव्यत्वात् घोलोऽपि निर्विकृतिके न कल्पते, तदा कथं मथितं कल्पिष्यते, तस्य विकृतित्वेन विशेषेण अकल्पनीयत्वात्, चकारात् कदाचिद् घोलः कल्पते च विकृष्टतपोनिर्वाहहेतुत्वात्, एतच्च सूत्रकारः स्वयमेव अग्रे प्रतिपादयिष्यते इत्यर्थः ॥ ५३ ॥

ननु—यथा सर्वतः परिणतेन केवलेनापि जलेन दध्नो विकृतिभाव उपहन्यते, तथा गुडस्यापि उपहनिष्यते? इत्यत आह—

जइ मंडियाइ जोगो पायकओ कोवि होइ गुडचुण्णो ॥ उव्वरइ सो वि नियमा गुडविगई होइ अनुवहता ॥५४॥

व्याख्या—'यदिति' संभावनायां मण्डिका अशोकवर्त्तिनामा पक्वान्नविशेषः, मण्डिका आदिर्येषां ते मण्डिकादयः,

आदिशब्दात् खाद्यक-सेविकामोदककर्करीयकादीनां ग्रहः, तेषां योग्यो निमित्तं मण्डिकादियोग्यः, कृतः पाको यस्य स कृतपाकः, क्तान्तस्य परनिपातः प्राकृतत्वात्, पक्व इत्यर्थः, कोऽपि सिन्धादिदेशजगुडसम्बन्धित्वेन अनेकविधत्वात् अनिर्दिष्टनामा भवति, गुडस्य इक्षुरसकाथस्य 'चूर्णः' क्षोदः, गुडचूर्णः, उद्धरति मण्डिकालेपनिकादिकार्यकरणात् पश्चात् तिष्ठति, सोऽपि न केवलम् अपक्व इत्यपेरर्थः, नियमात् निश्चयेन गुडविकृतिर्भवति ॥ ननु गुडपाको गुडस्य विकृतिगतम् एवेति केचिद् वदन्ति, तथाहि प्रवचनसारोद्धारे ॥

'अद्धकढितेक्खुरसो १ गुडपाणीयं च २ सक्करा ३ खंडं ४ पायगुलं ५ गुलविगई विगइगयाइं तु पंचेवत्ति' ॥

अर्धकथितेक्षुरसः काकवः, पाकेनोपलक्षितो गुडः पाकगुडो, येन पक्वान्नोपरिलेपो दीयते, शेषं प्रसिद्धार्थमेवेति, विकृतिगतं च न विकृतितया वक्तुं लभ्यते, उत्कृष्टद्रव्यभेदत्वात्, इत्यत आह—'अणुवहयत्ति' अनुपहता द्रव्यान्तरेण परिणामान्तरम् अनापादिता, हेतुगर्भविशेषणम् इदम् अनुपहतत्वादित्यर्थः अयम् आशयः यद्यपि उष्णजलेन सह गुडः पक्वस्तथापि अस्य न विकृतिभावो भग्नः, जलमात्रेण कासांचित् विकृतीनाम् उपघाताभावात्, नहि जलेन सह कथितम् इति दुग्धं विकृतिभावं त्यजति, तस्माद् यदा जलेन सह पक्वो गुड-स्तदैव यदि मण्डिकादिभावकद्रव्यान्तरेण समं संबध्यते, शुण्ठीचूर्णादिभिर्वा मिश्र्यते, तदा विकृतिभावं त्यजति, नान्यथा, वृद्धप्रवादस्य एवंविधस्यैव श्रूयमाणत्वात्, कल्पचूर्णौ तु मत्सण्ड्या अविकृतित्वम् उक्तम्, खण्डपाक इति कृत्वा, न पुन-र्गुडपाक इति कृत्वा इति संभाव्यते, यतो मत्स्यण्डी खण्डविकार

एवोच्यते, यदुक्तं हेमनाममालायां 'सिता च मधु धूलिस्तु खण्डस्तद् विकृतिः पुनः। मत्स्यंडी फाणितं चापीति' ततो न कल्पचूर्ण्या विरोध इति भावः ॥ ५४ ॥

ननु—पूर्वम् उक्तं वर्णरसभेदाद् एकस्यापि द्रव्यस्य भेदो भवतीति ? ॥ ततश्च नानाजातीयत्वेन नानादेशजत्वेन नवपुराणादिभेदेन च विभिन्नवर्णरसानां पूगीफलादीनामपि अनेकद्रव्यताप्रसङ्गः ॥ एवं च कथम् उपभोगव्रते द्रव्यसंख्यातिक्रमो न भवति, तानि हि दिनमध्येऽन्यदापि अनेकजातीयानि अनेकानि उपभुज्यन्ते, किं पुनः विवाहाद्युत्सवे ? इत्यत आह—

'सव्वाइं पुप्फलाइं नाणाविहजाइरसविभिन्नाइं ॥ पुप्फलमेगं द्रव्वं उवभोगवयम्मि विन्नेयं' ॥ ५५ ॥

व्याख्या—'सर्वाणि' समस्तानि 'पूगीफलानि' पूगानि जातयः सौपारत्वचिक्कणत्वाद्यवान्तरसामान्यानि, इदं सौपारम् इदं सौपारम् इत्याद्येकाकारप्रत्ययहेतुत्वात्, यदुक्तं "भिन्नक्रियागुणेष्वपि बहुषु द्रव्येषु चित्रगात्रेषु ॥ एकाकारा बुद्धिर्भवति, यतः सा भवेज्जातिरिति" रसा आस्वादविशेषाः, रसो वर्णादीनाम् उपलक्षणं सहचारित्वात् तेऽपि हि तत्र नाना विधा भवन्ति, यथा सुपक्वत्वदुःपक्वत्वाभ्यां, नवत्वपुराणत्वाभ्यां च, तत्र वर्णगन्धभेदाः, मृदुत्वकठिनत्वाभ्यां, महत्त्वलघुत्वाभ्यां च स्पर्शभेदाः, नानाविधाश्च, ते जातिरसाश्च नानाविधजातिरसाः तैर्विभिन्नानि पृथग् भूतानि नानाविधजातिरसविभिन्नानि पूगीफलं, पूगीफलनामकम् एकं द्रव्यम्, उपभोगव्रते द्वितीये गुणव्रते तस्य यावत् जीविकत्वात् ॥ ननु सामान्यप्रत्याख्याने तस्य अल्पकालिकत्वात्, तत्कर्तुश्च स्वेच्छाचारित्वाच, अधिकतरद्रव्यभक्षणसंभावनायां हि असौ प्रत्याख्या-

नमपि न करोति, संख्यानियमाभावात्, अथ अष्टम्यादिविशिष्टतिथिनियमवशात् करोति, ? चेत्तदा द्रव्याण्यपि अधिकतमान
मुत्कलानि करोति, नियमाभावात्, आकस्मिक्यां तु तस्यां यथा गृहीतमेव प्रत्याख्यानं पालयति, तस्य अहोरात्रमात्रावधि-
कत्वेन व्यवस्थान्तरायोगात् ॥ अणुव्रतधारिणस्तु यावज्जीविकव्रतत्वेन व्यवस्थान्तराभावे नियमभङ्गः स्यात्, एकदेशया हि
प्रायः कस्यचिद् एव कालगमनादिति ॥ व्यवस्थान्तरम् उक्तम् 'विज्ञेयं' बोद्धव्यम् ॥ ५५ ॥ ननु—यदि दैवसिकप्रत्याख्याने
सर्वेषां पूगानां नानाविधजातिरसविभिन्नत्वेन नैकं द्रव्यत्वं, तर्हि सर्वेषां नागवल्लीदलानामपि नैकं सचित्तत्वं, हेतोः समानत्वात्,
तथा च प्रत्याख्यानक्षणे स्वल्पसचित्तग्राहिणो न एकजातीयानां तेषां भक्षणे सचित्तसंख्यानियमभङ्गः ? इति चेत् नैवं, यतो-
ऽवान्तरजातिरसभेदात् द्रव्यस्यैव भेदः समयमतो, यदुक्तम् अत्रैव प्राक् 'वन्नरसभेयओ जं दव्वविभेओ वि समयमओ त्ति, न
सचित्तादेः, ततो यथा गव्यत्वमाहिषत्वाद्यवान्तरजातिभेदात् भिन्नान्यपि दुग्धानि एकैव विकृतिः ॥ एवं सर्वजातीयानि अपि
नागवल्लीदलानि एकं पर्णसचित्तमिति न कश्चिद् दोष इत्यर्थः ॥ ५५ ॥

ननु—नानाविधजातिरसविभिन्नानि किं पूगीफलानि एव एकं द्रव्यम् ? उत अन्यान्यपि कानिचित् इत्यत आह—

"एवं जलकणघयतिल्ललोण विभिन्नाइं विविहजाइगयं ॥ एगं दव्वं परिगहपमाणवयगहियगणणाए" ॥ ५६ ॥

व्याख्या—'एवं' पूगीफलवत्, जलानि च कणाश्च घृतानि च तैलानि च लवणानि च जलकणघृततैललवणानि, विभ-
क्तिलोपः प्राकृतत्वात्, विभिन्नान्यपि नानादेशजत्वेन, विसदृशवर्णरसत्वेन, विविधजातिमत्त्वेन, च विभक्तान्यपि, अपि

शब्दोऽत्र द्रष्टव्यः, 'विविधजातिगतं' नानारूपजात्याश्रितम् एकं द्रव्यम् ॥ ननु व्यक्त्याश्रितं, परिग्रहप्रमाणव्रतगृहीतगणनायां, ननु ध्वेकासनादि प्रत्याख्याने, तत्र हि नानाविधैकजातीयव्यक्त्याश्रितम् एव, एकं द्रव्यं प्रमाणं विज्ञेयमिति पदम् अत्रापि अनुवर्त्तनीयम्, अयम् आशयः आभ्रं भौमं च जलम् अवान्तराशेषविशेषसहितम् एकमेव द्रव्यम्, तथा कणशब्देन शालिमुद्गादयः सर्वेऽपि धान्यभेदा गृहीताः, तत्र कलमशालिरक्तशालिमहाशाल्याद्यनेकान्तरभेदकलितः शालिरेकं द्रव्यम्, एवम् अन्येष्वपि मुद्गादिधान्येषु उष्णकालीयवर्षाकालीयाद्यनेकान्तरभेदयुक्तत्वं भावनीयम्, तथा गोमहिषीछागयेडिकासम्बन्धित्वेन नानाविधमपि घृतम् एकमेव द्रव्यम्, तथा तिलसर्षपातसीलट्टादिजत्वेन अनेकभेदमपि तैलम् एकमेव द्रव्यम्, विचित्राकारोत्पन्नत्वेन विभिन्नरसान्यपि सैन्धवसौवर्चलविडलवणसमुद्रलवणयवक्षारादीनि पञ्चापि लवणानि एकम् द्रव्यमिति ॥ ननु विकृतिसचित्तव्यतिरिक्तमेव भक्ष्यवस्तुप्रवचने द्रव्यं रूढं, प्रत्याख्याने भेदेन तत्परिमाणकरणस्य उक्तत्वात्, तथाहि <u>आवश्यकचूर्णौ</u> "सचित्तदव्वविगई पाणहतंबोलवत्थकुसुमेसु । वाहणसयणविलेवण इत्थी दिसिन्हाण भत्तेसु त्ति" तथाच द्रव्यसंख्यानियमभङ्गनिवारणार्थम् आरब्धे व्यवस्थान्तरे पूगीफलातिदेशेन अन्येषां प्रासुकजलराद्धान्नादिद्रव्याणाम् एव एकद्रव्यत्वम् अतिदेष्टुम् उचितम्, न जलकणलवणघृततैलानां, तन्मध्ये केषांचिन्निर्विशेषाणां सचित्तत्वेन केषांचित् विकृतित्वेन जात्यन्तरत्वात्, एतेषां च विविधजात्याश्रितम् एकसचित्तत्वम्, एकविकृतित्वं च, यथा संभवम् अतिदेष्टुम् उचितम्, यथा तत्तत्संख्या नियमभङ्गो न स्यात् ॥ तत्तु नातिदिष्टं, यदेकद्रव्यत्वम् अतिदेष्टुं नोचितं तदतिदिष्टम् इत्यहो आचार्यस्य चातुर्यम् इति ?

अत्रोच्यते स्यादेव आचार्यस्य चातुर्यं यदि जलकणघृतादिकं द्रव्यं न स्यात्; अथ च अस्ति तत्तथा, तथाहि—विवादाध्या-
सितं, जलकणघृतादिकं द्रव्यं, भक्ष्यत्वात् ॥ यद्यद् भक्ष्यं तत्तद् द्रव्यमेव यथा पूगीफलमित्यन्वयः ॥ यद् द्रव्यं न भवति तत्
भक्ष्यमपि न भवति, यथा मरुमरीचिकाजलम् इति व्यतिरेकः, भक्ष्यं चेदं तस्माद् द्रव्यमेव, यदि पुनः सचित्तत्वात् जलादिकं,
विकृतित्वात् घृतादिकं द्रव्यं न स्यात्, तदाऽशनत्वाद् ओदनादिकं, पानकत्वात् सौवीरादिकं, खादिमत्वात् द्राक्षादिकं, स्वा-
दिमत्वात् पूगीफलादिकमपि द्रव्यं न स्यात् ॥ तथाच प्रभूतैरपि एतै–र्भक्षितैर्न द्रव्यसंख्यानियमभङ्गः ? किं च द्रव्यनियमे
कृते किं परिह्रियते, चतुर्विधस्यापि आहारस्य द्रव्यत्वात्, तद्व्यतिरिक्तस्य वस्तुनोऽभावात् ॥ ननु निम्बच्छल्ल्यादि ? इति
चेत् न तस्यापि अनाहारत्वाद्, यदुक्तम् 'अणाहारो मोयछल्ली' इत्यादि ॥ अथ चतुर्विधोऽपि आहारो द्रव्यमेव; तर्हि तदन्त-
र्गतत्वात् विकृति–सचित्ते अपि द्रव्यम्, नहि जीवपुद्गलधर्माधर्माकाशकाया द्रव्याणि इत्युक्ते आहारो न द्रव्यमिति वक्तुं
शक्यते, अपौद्गलिकत्वप्रसङ्गात्, एवं विकृति–सचित्ते अपि यदि द्रव्यं न स्याताम् ॥ तदाऽनाहारत्वप्रसङ्गः, तथाच ताभ्यां
प्राचुर्येण भक्षिताभ्यामपि नोपवासादिप्रत्याख्यानभङ्गः स्यात्, तस्मात् ते द्रव्ये एव इत्युचितमेव विविधजात्याश्रितम् एकद्र-
व्यत्वं तयोरतिदिष्टम्, एकसचित्तत्वम् एकविकृतित्वं च तयोरतिदिश्येत, यदि प्राग् सामान्यप्रत्याख्याने सिद्धं न स्यात्,
सिद्धं चैतत् सामान्यप्रत्याख्यानेऽपि, तथाहि पात्तनिकमंगलपुरीयमेदपाटीयाद्यनेकजातीयानि अपि नागवल्लीदलानि एकस-
चित्तत्वेन, गोमहिष्यादि सम्बन्धित्वेन अनेकान्यपि दुग्धानि, दधीनि, घृतानि, चान्यान्यपि तैलादीनि तिलसर्षपादिस्वस-

हेत्वनुयायित्वेन, अनेकजातीयानि अपि एकविकृतित्वेन गण्यन्ते, इति कथम् अतिदिश्येते प्रागेव सिद्धत्वात्, द्रव्याणां तु विविधजात्याश्रितम् एकं द्रव्यत्वं न सामान्यप्रत्याख्याने व्यवह्रियते, इति भोगोपभोगव्रते तदुपदिश्य विकृतिसचित्तयोरपि अतिदिष्टं, श्राद्धा हि अनेकरूपा भवन्ति, ततो यदा कश्चिद् द्रव्यसंख्यायामेव विकृतिसचित्ते गणयति, तदा यथा नियमभङ्गो न भवति, अन्यथा व्यक्त्याश्रिते एकद्रव्यत्वे सति अनेकभेदाना दुग्धादिविकृतीनां, पर्णादिसचित्तानां च भक्षणे द्रव्यप्राचुर्यं स्यात्, तथाच नियमभङ्गो मा कदाचिद् भूयात् इति युक्तमेवैतद् अतिदिष्टम्, यदि वा वर्णान्तराद्यभावेऽपि कुतोऽपि हेतो रचित्तीभूताना जलकणादीनाम्, अविकृतीभूतयोश्च घृततैलयोर्मार्गादिकारणवशात् उपभोगे उपस्थिते, यावत् जीविकव्रतप्रतिपालनार्थम् एकद्रव्यतोक्ता, भवति हि जलकणादीनां वर्णान्तराद्यभावेऽपि अचित्तत्वं, घृततैलयोश्च अविकृतित्वं, तथा हि जलाना क्षेत्रान्तरे नीताना घट्टनाघोलनावशात्, तथा कणानामपि कियतः कालादूर्ध्वं स्वभावत एव अचित्तता भवति, यदुक्तं स्थानाङ्गे "अह भंते सालीणं वीहीणं गोहुमाणं जवाणं जवजवाणं एएसिं धन्नाणं कोट्ठाउत्ताणं पल्लाउत्ताणं मञ्चाउत्ताणं मालाउत्ताणं ओलित्ताणं लित्ताणं लंछियाणं मुद्दियाणं पिहियाणं केवइयं कालं जोणी संचिट्ठइ? जहन्नेणं अंतोमुहुत्तं उक्कोसेणं तिण्णि संवच्छराइं तेण परं जोणी पमिलाइ तेण परं पविद्धंसइ, तेण परं जोणी विद्धंसइ, तेण परं वीये अवीए हवइ त्ति ॥ तथा कलमसूरतिलमुग्गमासनिप्फावकुलत्थ आलिसंदग सतीणिपलिमंथगाणं, धन्नाणं, जोणी जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं पंचसंवच्छ-

राइं जोणी संचिट्ठइ, तेण परं जोणी पमिलाइ, जाव तेण परं जोणी वुच्छेए पन्नत्ते ॥ तथा अयसिकुसुंभकु-
द्दवकंगुरालग वरगकोद्दूदगसण सरिसव-मूलग-वीजाणं, जोणी उक्कोसेणं सत्तसंवच्छराइं संचिट्ठइ त्ति ॥
तथा स्वभावस्यस्य लवणस्यापि अचित्तता भवति, यदुक्तं कल्पभाष्ये जोयणसयं तु गंताअणाहारेणं तु भण्ड-
संकंती वायागणिधूमेणं चिट्ठन्तं होइ ॥ लोणाई हरियालमणोसिलपिप्पलीय खज्जूर मुदिया अभया, आइ-
न्नमणाइन्ना ते वि हु एमेव नायव्वा त्ति ॥ 'अनाहारे त्ति' स्वदेशजाहारभावेन 'भंडत्ति' भाजनाद् भाजनान्तरसं-
क्रान्त्या खर्जूरादयोऽनाचरिताः, अभयादयस्तु आचरिता इत्यर्थः, घृततैलयोरपि अतिपुरातनीभूतयो-र्यदि वा औषधैः सह-
पक्वयोरविकृतिता भवति, यथा कल्याणघृतशतावरीघृतनिंभिजनलाक्षातैलादीनाम् इति न कश्चिद् दोष इत्यर्थः ॥ ५६ ॥

ननु—उपवासादौ कृते बालकादिमुखं चुम्बतः प्रत्याख्यानं भज्यते न वा ? यदि भज्यते तदापि किं आगमे स्पष्टाक्षरम्
एवं भणितमस्ति, उत प्रमाणान्तरेणैव ज्ञायते, इत्यत आह—

गब्भरूपप्पमुहाणं वयणं चुम्बइ कओपवासाई ॥ तस्स उ पच्चक्खाणे भंगो संभवइ जुत्तीए ॥ ५७ ॥

व्याख्या—गर्भरूपा डिम्भाः ते प्रमुखे आदौ येषां स्त्र्यादीनां ते गर्भरूपप्रमुखा-स्तेषां बालकस्त्र्यादीनाम् इत्यर्थः, 'वदनं'
मुखम् उपलक्षणम् इदम् अन्येषामपि चुम्ब्यावयवानां, 'चुम्बति' प्रसारितनिजोष्ठाभ्यां स्पृशति, यत्तदोर्नित्याभिसम्बन्धात् य
इति दृश्यम्, 'उपवासो' ऽभक्तार्थः, आदिशब्दोऽत्र प्रकारवचनः, तदर्थस्यापि सत्त्वात्, यदुक्तम्, 'सामीप्येऽथ व्यवस्थायां

प्रकारेऽप्यवे तथा, चतुर्ष्वर्थेषु मेधा—व्यादिशब्दम् उपलक्षयेत्, इति, उपवासस्त्रिविधाहारश्चतुर्विधाहार एव वा भवति, नान्यथा, ततोऽन्यान्यपि यानि कानिचित् प्रत्याख्यानानि त्रिविधाहाराणि चतुर्विधाहाराणि वा भवन्ति, तानि सर्वाण्यपि उपवासप्रकाराणि, यथा आचाम्लं निर्विकृतिकम्, आलोचनागत्कम् एकाशनकम् पुरिमार्द्धं चेति, कृतानि उपवासादीनि येन स कृतोपवासादिः, कृतत्रिविधाहारचतुर्विधाहारप्रत्याख्यान इत्यर्थः, तस्य प्रत्याख्यानिनः, तुरेवार्थः ॥ क्रियया योक्ष्यते, प्रत्याख्याने त्रिविधाहाररूपे चतुर्विधाहाररूपे वा, 'संभवत्येव' घटते एव, 'युक्त्या' प्रत्यक्षादिप्रमाणान्तरेण, नतु आगमेन, तस्य प्रायः सूचकत्वात्, युक्तिस्तु इयं स्तन्यतैलाभ्यङ्गादिना बालकस्य, कुङ्कुमकस्तूरिकाश्रीखण्डताम्बूलाद्यन्यतररसेन स्त्रीणां, मद्यादिना वेश्यादीनां मुखं प्रायो भावितम् एव भवति, ततस्तस्मिंश्चुम्ब्यमाने तद् आस्वादविशेषः संवेद्यमानः स्पृहातिशयहेतुत्वाद् आहार एव, युक्तिगम्यं तु युक्त्यैव प्रतिपादनीयम्, यदुक्तं पञ्चवस्तुके, "अह वक्खाणेयव्वं जहा जहा तस्स अवगमो होइ, आगमियमागमेणं जुत्तीगम्मं तु जुत्तीए" इत्यर्थः ॥ ५७ ॥

ननु—दधिगुडघृतकणिकानिष्पन्नो द्रव्यविशेषो विस्यन्दनम् उच्यते, तच्च केचिद् उत्कृष्टद्रव्यम् एव ब्रुवते, तथाहि प्रवचनसारोद्धारे "पक्कघयं घयकिट्टी पक्कोसहि उवरितरियसप्पि वा । निब्भंजणवीसंदणगाय घयविगइ गयाइं ति" विकृतिगतं चोत्कटद्रव्यम् एवोच्यते, तच्च जात्यन्तरम् इति ? अपरे तु ब्रुवते, विकृतिरेव इदम् अग्निप्रतप्तकटाहे विलीयमानयोर्दधिगुडयोर्मध्ये घृतमिश्रितकणिक्कापातेन अस्य निष्पन्नत्वादिति किं तथ्यम् ? इति प्रश्ने शिष्यहिताय सोदाहरणम् प्रत्युत्तरम् आह—

दहितरमज्झक्खित्तो गोहुमचुण्णो य पक्कविगई उ ॥ सिद्धो लग्गइ नियमा तह वीसंदणमओ विगई ॥ ५८ ॥

व्याख्या—'दध्नस्तरः' सारो दधितरः, तस्य मध्यं दधितरमध्यं, तत्र 'क्षिप्तो' न्यस्तः, दधितरमध्यक्षिप्तः गोधूमचूर्णः, स-मिता कणिका इति यावत्, चकारात् घृतेन पूर्वं भावित इति गम्यते, यतोऽसौ दृष्टान्ततया उपन्यस्तो भक्ष्यविशेषो घृतमोदितेन दधितरावलोडितेन वटिकारूपतया सघृतकटाहे पक्केन गोधूमचूर्णेन निष्पद्यते निष्पच्यते द्वितीयार्द्धादिस्थितोऽपि सिद्ध-शब्दो ऽत्र योज्यते, 'सिद्धो' ऽग्नितापतप्तघृतकटाहे पक्वः, 'सुद्धइ' इति पाठं केचित् पठन्ति, तदा कटाहादौ पक्व इति प्रसिद्ध-त्वात् स्वयमेव ज्ञेयम्, शुद्धो द्रव्यान्तरेण अनुपहतः, दधिवटिकानाम्ना तरवटिकानाम्ना वा प्रसिद्धः, पक्वविकृतावेव पक्वान्न-विकृतावेव, विभक्तिलोपः प्राकृतत्वात्, तुरेवार्थः, 'लगति' मिलति, 'नियमात्' निश्चयेन, तथाहि दधिवटिकावत्, सघृतक-टाहादौ सिद्धं विसन्दनं सपादलक्षादिदेशप्रसिद्धं भक्ष्यान्तरम्, अतो विकृतिरेव नोत्कृष्टद्रव्यं, तत्प्रतिपादिकायाः प्रवचनसा-रोद्धारगाथाया आगमेन सह विरुद्धत्वात्, आगमेहि घृतघृष्टस्य विकृतित्वमेव उक्तम्, तथाहि कल्पभाष्ये 'घयघट्ठो पुण विग-ईति, तत्र तु विकृतिगतत्वं यथा पक्वघयं घयकिट्टीत्ति, घृतकिट्टिका च मेहाडुकमेव व्याख्यातं वृत्तिकृता, यथा घृतकिट्टिका घृतमलिका मेहाडुकम् इति भावः ॥ घयघट्ठो पुण विगई, इत्यादि गाथावृत्तौ तु श्रीहरिभद्रसूरिभिर्घृतघृष्टो मेहाडुकम् इत्युक्तम्, ततो यथा घृतघृष्टस्य प्रवचनसारोद्धारकर्त्रा उक्तमपि विकृतिगतत्वं गीतार्थैर्न बहुमन्यते,. तथा विसन्दनस्याऽपि ॥ अपि च अस्य घृतविकृतिगतता ऽपि न युज्यते, घृतेन सह पक्वत्वात्, अन्यथा लपनश्रीप्रभृतिपक्वान्नस्याऽपि घृतविकृतिगतता स्यात्,

यत्तु घृतमन्तरेण पच्यते तत् लिडपिंसं भण्यते, तद् अविकृतिरेव तद्भ्रान्त्या एव च विसन्दनस्य विकृतिगतत्वं तेन उक्तम् इति संभाव्यते, परं तदपि न घृतस्य घृताऽपकत्वात्, विसन्दनं च प्रायः सर्वत्रापि घृतेनैव पच्यते, यत्र तु सिन्धुदेशादौ प्रकारान्तरेण इदं निष्पद्यते, तत्रापि घृतेनैव, तथाहि तत्र अग्निमतप्ततापनिकायां प्रगलन् प्रेक्षणमध्ये तद्गततक्रसंग्रहनिमित्तं स्तोकं कणिकादि प्रक्षिप्यते, यथा घृतं प्रधानं भवति, ततः च उपरितनं घृतं पृथक् क्रियते, तलघृतगततक्रपक्वा समिता निसन्दनम् उच्यते, यदुक्तं पञ्चवस्तुकवृत्तौ श्रीहरिभद्रसूरिभिः "अद्धनिद्दघयमज्झमूढतंदुलचुण्णनिप्फन्नविसंदणं ति" अत एवास्य कल्पभाष्ये विकृतित्वम् उक्तम्, 'घयघट्टो पुण विगई वीसंदणमोयकेइ इच्छंतीति" श्रुतधरैरपि इदमेव बहुगुणत्वात् प्रमाणीकृतम्, अन्यथा श्रीहरिभद्रसूरिः स्वोपज्ञ पञ्चवस्तुके, श्रीजिनचन्द्रसूरि-र्दिनचर्यायाम् इदमेव गाथाशकलं न न्यक्षिपत्, तस्माद् एकान्तेन विकृतिगतम् अयुक्तमेव इत्यर्थः ॥ ५८ ॥

ननु—सामायिकस्थो विद्युता, प्रदीपेन च यदा स्पृश्यते, तदा च मानुष्या तिरश्च्या च संघट्यते, तदा अस्य विद्युत्स्पर्शनकात् प्रदीपस्पर्शनकं, स्त्रीसंघट्टनाच्च तिरश्चीसंघटनं चाभिन्नं भिन्नं वा भवति, ? इत्यत्र आह—

विज्जुयपईवेणं फुसिओ तं फुसणयं तओ हुज्जा ॥ भिन्नं भिन्नं नारीमंजारीणं च संघट्टणं ॥ ५९ ॥

व्याख्या—'विद्युत्' तडित् सा च आकाशिकमुल्कादिकं लक्षयति, प्रदीपस्तु भौमत्वात् प्रदीपनकादिज्योतिः सूचयति, ततो विद्युता प्रदीपेन च समुच्चयार्थश्चशब्दो ऽत्र द्रष्टव्यः मकारो लाक्षणिकः, 'स्पृष्टः' संघट्टितः, सामायिकस्य इति पदं

विशेष्यं ज्ञेयं, तत् स्पर्शनकं, ततो विद्युदादेः प्रदीपादेश्च 'भवेत्' भवति, 'भिन्नं भिन्नं' मिथः पृथक् पृथक्, भिन्नप्रायश्चित्तवि-
पयत्नात्, तथाहि "तिविहजलजलणफुसणे विज्जुप्फुसणे य भिन्न लहु गुरुगा । चउ लहुवग्घारम्मी तं चिय दगमट्टिय गमेया"
जलज्वलनस्पर्शने जघन्यमध्यमोत्कृष्टभेदात् त्रिविधेऽपि, क्रमेण भिन्नमासलघुमासगुरुमासाः प्रायश्चित्तं, प्रदीपस्पर्शनके तु क-
म्बलीप्रावरणं विना जाते चतुर्गुरुप्रायश्चित्तम् इति ॥ अयं तु विशेषः प्रायश्चित्तसामाचार्यां वर्त्तते, ननु कुतोऽयं विशेषः?
इति चेद् उच्यते, विद्युदादीनां दूरस्थत्वेन अल्पस्थिरत्वेन च प्रायो लघु एव स्पर्शनकं; प्रदीपादीनां तु प्रायः प्रत्यासन्नत्वेन
स्थिरत्वेन च गुरुकमेव इति, पृथक् एव आलोचनीयं, न पुनस्तेजस्कायत्वाविशेषाद् एकतया एवेति, 'नारी' मानुषी 'मा-
र्जारी' विडालिका, तिरश्चीनां सर्वासाम् उपलक्षणं, नारी च मार्जारी च नारीमार्जार्यौ, तयोः, द्वित्वे बहुवचनं प्राकृतत्वात्,
'संघट्टनं' स्पर्शनं, 'चः' समुच्चये, ततो न केवलं विद्युत्प्रदीपादीनां स्पर्शनं भिन्नं भिन्नं, मानुषीतिरश्च्योः संघट्टनमपि ॥ नहि
यादृग् मानुषीस्पर्शे मोहोदयलक्षणो दोषः प्रादुर्भवति, तादृगेव तिरश्चीस्पर्शनेऽपि, अतएव अनयोः प्रायश्चित्ते महान् भेद
उक्तः ॥ यथा—

पुरिसस्सित्थी फासे चउलहु, इत्थीउ होइ चउगुरुकं, लहुसंसंतरफासे अंचलतिरिफासणे भिन्नं,

अतो भिन्नम् एवालोचनीयम्, न पुनः स्त्रीत्वाविशेषात् एकतया इति भावः ॥ ५९ ॥.

ननु—जलस्तिमितिमात्रं धान्यं विरूढकं भण्यते, उत प्रकटाङ्कुरम्? इति प्रश्ने समाधानम् आह—

यत्तु घृतमन्तरेण पच्यते तद् लिडविसं भण्यते, तद् अविकृतिरेव तद्भ्रान्त्या एव च विसन्दनस्य विकृतिगतत्वं तेन उक्तम् इति संभाव्यते, परं तदपि न घृतस्य घृताऽपकत्वात्, विसन्दनं च प्रायः सर्वत्रापि घृतेनैव पच्यते, यत्र तु सिन्धुदेशादौ प्रकारान्तरेण इदं निष्पद्यते, तत्रापि घृतेनैव, तथाहि तत्र अग्नितप्ततापनिकायां प्रगलन् प्रेक्षणमध्ये तद्गततक्रसंग्रहनिमित्तं स्तोकं कणिकादि प्रक्षिप्यते, यथा घृतं प्रधानं भवति, तत्तं च उपरितनं घृतं पृथक् क्रियते, तलघृतगततक्रपक्वा समिता विसन्दनम् उच्यते, यदुक्तं पञ्चवस्तुकवृत्तौ श्रीहरिभद्रसूरिभिः "अद्धनिद्दढघयमज्झबूढतंदुलचुण्णनिप्फन्नविस्संदण त्ति" अत एवास्य कल्पभाष्ये विकृतित्वम् उक्तम्, 'घयघट्टो पुण विगई वीसंदणमोयकेइ इच्छंतीति" श्रुतधरैरपि इदमेव बहुगुणत्वात् प्रमाणीकृतम्, अन्यथा श्रीहरिभद्रसूरिः स्वोपज्ञे पञ्चवस्तुके, श्रीजिनचन्द्रसूरि-दिनचर्यायाम् इदमेव गाथाशकलं न न्यक्षिपत्, तस्माद् एकान्तेन विकृतिगतम् अयुक्तमेव इत्यर्थः ॥ ५८ ॥

ननु—सामायिकस्थो विद्युता, प्रदीपेन च यदा स्पृश्यते, तदा च मानुष्या तिरश्च्या च संघट्यते, तदा अस्य विद्युत्स्पर्शनकात् प्रदीपस्पर्शनकं, स्त्रीसंघट्टनाच्च तिरश्चीसंघटनं चाभिन्नं भिन्नं वा भवति, ? इत्यत आह—

विज्जुपईवेणं फुसिओ तं फुसणयं तओ हुज्जा ॥ भिन्नं भिन्नं नारीमंजारीणं च संघट्टणं ॥ ५९ ॥

व्याख्या—'विद्युत्' तडित् सा च आकाशिकमुल्कादिकं लक्षयति, प्रदीपस्तु मौमत्वात् प्रदीपनकादिज्योतिः सूचयति, ततो विद्युता प्रदीपेन च समुच्चयार्थश्चशब्दोऽत्र द्रष्टव्यः मकारो लाक्षणिकः, 'स्पृष्टः' संघट्टितः, सामायिकस्थ इति पदं

तानि भृष्टविरूढानि 'न भक्षयति' न खादते, भृष्टानामपि तेषां विरुहकशब्दवाच्यत्वेन नियमभङ्गहेतुत्वात्, सचित्तव्रती तु प्रवृत्तिदोषभयात् न भक्षयति इत्यर्थः ॥ ननु अतिपरिपक्वत्वेन स्फुटकर्कटी न सचित्ता उच्यते, किन्तु सचित्तप्रतिबद्धा, ततो बीजेषु अपनीतेषु तां सचित्तव्रती श्राद्धो भक्षयति नवा ? लोकप्रवादस्य उभयथापि श्रूयमाणत्वाद् ? इति प्रश्ने अन्यापदेशेन उत्तरम् आह—

'तह फुट्टकक्कडी असइ नहु साहु त्ति' ।

तथा विरुहकवत् 'स्फुटा, वल्लिस्थिता एव विहसिता, कर्कटी वालुंकी, स्फुटा चासौ कर्कटी च स्फुटकर्कटी, तां प्राकृतत्वाद् अनुस्वाराभावः, अश्नाति भक्षयति नैवं, हुरवधारणे, साधुः, सुविहितः, आत्मविराधनादिदोषहेतुत्वात्, सा हि सर्पगरलपातादिविषयत्वेन अनेकदोषनिबन्धनम् इति, तां जीवितनिरपेक्षः साधुरपि न भक्षयति, किं पुनः श्राद्धः, तस्य गृहस्थत्वेन तद्विपरीतत्वाद् इति भावः ॥ ६१ ॥

ननु—काचिदेव स्फुटकर्कटी गरलादियुक्ता भवति, न सर्वाऽपि, तत्कुतः सर्वाऽपि असौ त्यज्यते ? इति प्रश्ने प्रवृत्तिदोषम् एव उत्तरं दृष्टान्तेन दृढयितुम् आह,—

जइ वायंगणपमुहं पि तीमणं सया अचित्तमपि न जई ॥ गिण्हइ पवित्तिदोसं. सम्मं परिहरिउं इच्छन्तो ॥ ६२ ॥

व्याख्या—यदीति संभावने, 'वृन्ताकं' फलविशेषः, वृन्ताकं प्रमुखं यस्य, तत्तथा, प्रमुखशब्दात् आर्द्रकमूलकास्थान-

पयडंकुरं तु भन्नं जलभिन्नं तं तु भण्णइ विरूढं ॥ सेसं जलभिन्नं पि हु चणगाइ विरूढमवि न भवे ॥ ६० ॥

व्याख्या—यत्तदोर्नित्याभिसम्बन्धात् यद् इति गम्यम्, तु अप्यर्थो भिन्नक्रमश्च, 'धान्यं' जलेन वारिणा 'भिन्नमपि' आर्द्रीकृतम्, अपि व्याप्तम् इत्यर्थः, 'प्रकटाङ्कुरं' व्यक्ताङ्कुरम्, तत्तु तुरेवार्थे, तदेव भण्यते, 'विरूढं' विरुहसंज्ञकं, शेषम्, अदृश्यमानांकुरं 'जलभिन्नमपि, उदकार्द्रमपि, हुर्निश्चये, 'चणकादि' आदिशब्दाद् गोधूमादि, 'विरूढम्' अपि—रेवार्थः क्रियया योक्ष्यते, न भवति एवेत्यर्थः, ॥ ६० ॥

ननु—प्रतिप्रष्टानि विरुहकाणि सचित्तानि अचित्तानि वा ? यदि अचित्तानि तदापि तानि विरुहकव्रती भक्षयति नवा ? इत्यत आह—

भुग्गाणि विरूढाणि य हुंति अचित्ताणि तह विरुहनियमो । ताणि न भक्खइ तह फुट्टकघडी असइ न हु मासुत्ति ॥ ६१ ॥

व्याख्या—भृष्टानि अग्नितापवशप्रभर्जनिकायां पक्वानि 'विरूढानि' विरुहकाणि, पुनः, 'चः' पुनरर्थे, 'भवन्ति' संपद्यन्ते, 'अचित्तानि' प्रासुकानि, तथापि, अपि अत्र द्रष्टव्यः, विरोहन्तीति विरुहाः 'नाम्न्युपधगृद्ध्राङ्कः' इत्यनेन कप्रत्ययः, विरुहाणां नियमो व्रतं यस्य स विरुहनियमः, यद्यपि व्रतं भक्षणविपयेऽपि भवति, यथा पयोव्रतो न दधि अत्ति, न पयोऽत्ति, दधिव्रतः, अगोरसव्रतो नोभे, तस्मात् तत्त्वं प्रयासमयम् इति, तथापि अत्र अभक्षणे ज्ञेयम्, व्रतो विरुहाभक्षणनियम इत्यर्थः,

स्पर्शान्यतरगुणं द्रव्यम् उपलक्षयति, अधिकगुणस्यैव परिणमकत्वात्, 'कृतं' विहितम्, अथैत्र, यत्र दिने षष्ठमाष्टमादि वा ...ख्यातम् तत्रैव इत्यर्थः ॥ 'जलं' पानीयं, तुः पूरणे, प्रगता असवः प्राणा यस्मात् तत्प्रासुकम् अचित्तं, तया उद्धरितमुस्ता-यखण्डचूर्णेन तज्जातीयया वा, न पुनस्तयैव, तस्या आद्यदिनजलसम्बन्धेन निर्विषीभूतत्वात् 'कल्ये' द्वितीयेऽपि दिने, उपलक्षणत्वात् तृतीयादिष्वपि दिनेषु क्रियते-विधीयते, प्रासुकम् इति शेषः, 'यदि' तदा, तत्प्रासुकं जलम्, एकमेव द्रव्यं परिणामकद्रव्यस्य एकत्वात्, किं न भवन्ति एकत्रैव दिने भिन्नभिन्नघटस्थानि मुस्तया प्रासुकीकृतानि जलानि, एकं द्रव्यम्, ...त्यत्राप्यर्थे, संदेहो न कार्यः ॥

...नु—एवम् एकेन वाघारेण व्याघारितानि प्रभूतान्यपि तेमनानि एकमेव द्रव्यं स्युः ? इति न वाच्यम् तेषां भिन्नभाजने ...त्वेन अनेकद्रव्यत्वस्यैव सिद्धत्वात्, नहि भिन्नद्रव्यत्वेन सिद्धम्, एकया मुस्तया प्रासुकीकृतम्, इति भिन्नभाजनस्थम् आन्त्रं भौमं च जलम् एकद्रव्यं भवति, तस्माद् यन्मूलद्रव्यम् एकमेव सिद्धं भवति एकजातीयेन च द्रव्येण परिणमितं भवति, तदेव एकद्रव्यं, न अन्यद् इत्याशयः ॥ तथा च उपवासाचाम्लादिप्रत्याख्याने पूर्वाह्णे मुस्तया प्रासुकीकृतम् इति यज्जलं पीतं, तदेव उद्धरितं वर्षाकालादौ स्निग्धकालत्वादिकारणात् अपराह्णे संध्यायां वा 'पुव्वण्हकयमचित्तं जलमवरण्हम्मि जायइ स-चित्तं सिसेरे वासासु चिय गिण्हम्मि सयमहोरत्तं, इति वचनप्रामाण्यात् पुनः सचित्तीभूतम् इति, तदेव तज्जातीयम् अन्यद् वा मुस्तया प्रासुकीकृतं पिबतां न द्रव्यसंख्यानियमभङ्गः ॥ ननु इदम् अयुक्तम् उक्तम्, प्रत्याख्यानं हि इच्छानिरोधाद्यर्थमेव

कमरिचमञ्जरीमूरणप्रभृतिर्गृह्यते, 'अपिः' शब्दो जीरकहिंग्वादिभिः सुसंस्कृतत्वेन अतिमुखप्रियत्वेन भुक्ताहारजरकत्वेन रोचकत्वेन च, तस्य दुस्त्यजताम् आह, ततो वृन्ताकप्रमुखमपि, 'तेमनं' व्यञ्जनं, सदा नित्यकालम् 'अचित्तमपि, अग्निपक्वत्वेन प्रासुकमपि, नशब्दः क्रियया योक्ष्यते, 'यतिः' साधुर्न गृह्णाति प्राचुर्येण लभ्यमानमपि नस्वीकरोति, प्रवर्तनं प्रवृत्तिः, स्वस्य अन्येषां च प्रसक्तिः, सा एव अनर्थहेतुत्वात् दोषः, प्रवृत्तिदोषः, तं सम्यक् मनोवचनकायशुद्ध्या, 'परिहर्तुं' वर्जयितुम्, इच्छन् वाञ्छन्, तदा कथं कर्पासवल्लीरसां बलाजनिकां वातोद्रेकहेतुं स्फुटकर्कटीं, गृह्णातीति, वाक्यशेषः ॥ अयम् अभिप्रायो—यद्यपि सर्वापि स्फुटकर्कटी आत्मविराधनाहेतुर्न भवति, तथापि वर्ज्यत एव, तद् अवर्जनस्य आत्मविराधनाहेतुस्फुटकर्कटीभक्षणेऽपि हेतुत्वात्, एतेन स्फुटकर्कटीवत् परार्थं निष्पादितत्वेन निर्दोषमपि वृन्ताकादि, (तीमनं) प्रवृत्तिदोषभयात् श्राद्धस्यापि वर्ज्यम् एव इत्यन्यापदेशेनोक्तम् इत्यर्थः ॥ ६२ ॥

ननु—येन मुस्तादिना द्रव्येण एकस्मिन् दिने जलं प्रासुकीकृतं, तेनैव द्रव्येण द्वितीयेऽपि दिने यदि प्रासुकीक्रियते, तदा तत् प्रत्याख्यातषष्ठाष्टमादेः श्राद्धस्य पातुं कल्पते नवा? चतुर्थे इव षष्ठाष्टमादौ अपि एकस्यैव द्रव्यस्य मुक्तलीक्रियमाणत्वात् इत्यत आह—

जीए मुत्थाइकयं अज्जेव जलं तु फासुगं तीए ॥ कल्लेव कीरइ जइ तमेगदव्वं न संदेहो ॥ ६३ ॥

व्याख्या—यया, मुस्तादिखण्डीकृतमुस्तैकखण्डचूर्णेन इत्यर्थः ॥ मुस्ता उत्कटगन्धगुणत्वात् अन्यदपि उत्कटवर्णगन्ध-

यतस्तेऽपि उत्कृष्टतः सचित्ताहारवर्जका भवन्ति, यदुक्तम् 'उक्कोसेणं तु सड्ढो उ सचित्ताहारवजओ त्ति, ततस्तेषामपि अपेयमेव इदम्, तर्हि किं पिबन्तीति ? चेद् उच्यते उष्णोदकं; तेनापि तत्कार्यस्य आचमनादेः, सर्वस्यापि निर्वाहत्वात्, नच इदं गृहस्था न पिबन्ति, अपि तु पिबन्ति एव, द्रव्यरोगोपशमकत्वात्, नापि लोकविरुद्धम् आयुर्वेदोक्तत्वात्, नच अपवित्रं बाह्यशौचार्थं प्रायः सर्वैरपि जनैः प्रतिदिनम् आसेव्यमानत्वात्, तद् यदि भावरोगोपशमनार्थम्, अन्तरङ्गशुद्धिनिमित्तं च, प्रत्याख्याने कृतेऽपि इदं पिबन्ति, तदा सौभाग्योपरिमञ्जरी तेषाम्, इह लोके परलोके चास्य अतिसुखावहत्वात्, नच आगमानभिमतम् 'उसिणोदगं तत्तफासं पडिगाहिज्ज संजए' इत्यागमात् साधवस्तावत् इदं प्रतिगृह्णन्ति, उसिणोदगतत्तभोइणो, इति सूत्रकृदङ्गवचनात् पिबन्ति च, तथा च तदुपासकत्वात् श्राद्धा अपि तत्पिबन्ति, यदुक्तं, भुंजए जं च साहूणं दिन्नं असणमाइयं, इति साधूनां च उष्णोदकम् उपयोगित्वात् दत्तं न शीतोदकम्, इति तत्र पिबन्ति इत्युत्सर्गतः, यदुक्तं, साहूण कप्पणिज्जं जं न विदिन्नं कहिं चि किंपि तहिं। धीरा जहुत्तकारी सुसावगा तं न भुंजंति, इत्यागमस्यापि संमतम् एव । किञ्च प्रत्याख्यानाचारे द्वयानाम् अपि समाने सति एके उष्णोदकं पिबन्ति नान्ये, इति, का इयम् अर्धजरती, तस्माद् प्रवचनलाघवहेतुत्वेन विरुद्धाचरणम् उत्सृज्य उभयैरपि उष्णोदकमेव पेयं, न शीतोदकम्, तत्पाननिषेधस्य श्राद्धानां साध्वाश्रितनिषेधश्रुत्या एव अनुमितत्वात्, प्रत्याख्यानविधेर्द्वयानामपि अविशिष्टत्वात् ॥ अपि च यदि श्राद्धाः प्रासुकत्वात् शीतोदकं प्रत्याख्यानेऽपि अपास्यन्, तदा यतयोऽपि सुलभत्वात् अदुष्टत्वाच्च तदेव प्रत्यगृहीष्यन् ? यतः श्राद्धाः सुकरत्वात् सुखप्रिय-

क्रियते, नतु इच्छाशुद्ध्यर्थम्, ततस्तस्मिन् कृते कषायद्रव्यवासितमपि शीतोदकं शुद्धिहेतुत्वात् पातुं न कल्पते, किं पुनरेलामुस्तादि-वासितं तस्य भोगाङ्गत्वेन विशेषेण अकल्पनीयत्वात् ? इत्येतद्विषया एकानेकद्रव्यचर्चा न संगता; यदि पुनः प्रत्याख्यानेऽपि कृते शीतोदकं पेयम् अभविष्यत्, तदा सुविहिता अपि अपास्यन्, तेषां विशेषतः प्रत्याख्यानवत्त्वात्, नच ते पिबन्ति, सिद्धान्ते निषिद्धत्वात्, तथाहि दशवैकालिके 'सीओदगं न सेविज्जा' इत्यादि सीओदगं न पिबे न पियावए, इत्यादि च, तथा सूत्रकृदङ्गे 'सीओदग पडिदुगुंछिणो अपडिन्नस्स लवावसक्किणो, सामाइयमाहु तस्स जं जो गिहमत्तेसणं न भुंजइ' इति तथा उत्तराध्ययनेष्वपि । 'सीओदगं ण सेवेज्जा वियडस्सेसणं चरे' इत्यादि सिद्धान्तनिषिद्धमपि यदि गीतार्थैः केनापि पुष्टालम्बनेन कल्पप्रावरणवत् आचीर्णं स्यात्, तदापि इयतापि नच तैराचीर्णं, तद् ग्रन्थे ऽपि तन्निषेधस्यैव दृश्यमानत्वात्, तथाहि 'तम्हा अगारवासं पुव्वाओ परिव्वयंति धीमन्ता, सीओदगाइभोगं, विवागकडुयं ति न करन्ति,' इति गाथावृत्तौ शीतोदकादिपरिभोगं विषान्नभोगवत् विपाककटुकम् इति कृत्वा न कुर्वन्तीति, एतेन यत्केचित् 'सीओदगं, इति शब्दस्य सचित्तोदकमिति संस्कारं स्वेष्टसिद्ध्यैव कुर्वन्ति तदपास्तं वेदितव्यम् यतोऽत्र अस्य 'शीतोदकेति, हरिभद्रसूरिभिर्व्याख्यातत्वात्, इत्यागमनिषिद्धत्वात् गीतार्थानाचीर्णत्वात् च इदं साधूनाम् अपेयमेव इति, तत् कथं श्राद्धानां प्रत्याख्याने पेयं भविष्यति, अनुमानेनापि अस्य अपेयत्वम् साध्यते, एलामुस्तादिवासितं जलं, विशिष्टप्रत्याख्यानवताम् अपेयम्, शीतोदकत्वात्, सचित्तोदकवत्, विशिष्टं च प्रत्याख्यानं तत् यत्र सचित्तं सर्वथापि न भक्ष्यते, तादृशं च प्रत्याख्यानं श्राद्धा अपि कुर्वन्त्येव,

यतस्तेऽपि उत्कृष्टतः सचित्ताहारवर्जका भवन्ति, यदुक्तम् 'उक्कोसेणं तु सड्ढो उ सचित्ताहारवज्जओ त्ति, ततस्तेषामपि अपेयमेव इदम्, तर्हि किं पिबन्तीति ? चेद् उच्यते उष्णोदकं; तेनापि तत्कार्यस्य आचमनादेः, सर्वस्यापि निर्वाह्यत्वात्, नच इदं गृहस्था न पिबन्ति, अपि तु पिबन्ति एव, द्रव्यरोगोपशमकत्वात्, नापि लोकविरुद्धम् आयुर्वेदोक्तत्वात्, नच अपवित्रं वा-ह्यशौचार्थं प्रायः सर्वैरपि जनैः प्रतिदिनम् आसेव्यमानत्वात्, तद् यदि भावरोगोपशमनार्थम्, अन्तरङ्गशुद्धिनिमित्तं च, प्रत्याख्याने कृतेऽपि इदं पिबन्ति, तदा सौभाग्योपरिमञ्जरी तेषाम्, इह लोके परलोके चास्य अतिसुखावहत्वात्, नच आ-गमानभिमतम् 'उसिणोदगं तत्तफासं पडिगाहिज्ज संजए' इत्यागमात् साधवस्तावत् इदं प्रतिगृह्णन्ति, उसिणोदगतत्तभोइणो, इति सूत्रकृदङ्गवचनात् पिबन्ति च, तथा च तदुपासकत्वात् श्राद्धा अपि तत्पिबन्ति, यदुक्तं, भुंजए जं च साहूणं दिन्नं अ-सणमाइयं, इति साधूनां च उष्णोदकम् उपयोगित्वात् दत्तं न शीतोदकम्, इति तन्न पिबन्ति इत्युत्सर्गतः, यदुक्तं, साहूण कप्पणिज्जं जं न विदिन्नं कहिं चि किंपि तहिं। धीरा जहुत्तकारी सुसावगा तं न भुंजंति, इत्यागमस्यापि संमतम् एव । किञ्च प्रत्याख्यानाचारे द्वयानाम् अपि समाने सति एके उष्णोदकं पिबन्ति नान्ये, इति, का इयम् अर्धजरती, तस्माद् प्रवचनला-घवहेतुत्वेन विरुद्धाचरणम् उत्सृज्य उभयैरपि उष्णोदकमेव पेयं, न शीतोदकम्, तत्पाननिषेधस्य श्राद्धानां साध्वाश्रितनिषे-धश्रुत्या एव अनुमितत्वात्, प्रत्याख्यानविधेर्द्वयानामपि अविशिष्टत्वात् ॥ अपि च यदि श्राद्धाः प्रासुकत्वात् शीतोदकं प्रत्याख्यानेऽपि अपास्यन्, तदा यतयोऽपि सुलभत्वात् अदुष्टत्वाच्च तदेव प्रत्यगृहीष्यन् ? यतः श्राद्धाः सुकरत्वात् सुखप्रिय-

त्वात् इन्द्रियाऽऽप्यायकत्वाच्च तदेव स्वार्थं प्रासुकं कारयिष्यन्ति, मिष्टं वैद्येनापि उपदिष्टं चेद् तदा कोऽपि नाम तन्नाद्रियते, ततस्तस्मिन् गृहस्थेभ्यः, प्राचुर्येण लभ्यमाने सति किमिति उष्णोदकादिगवेषणं साधवः करिष्यन्ति, परिपन्थिहेतुत्वात्, अर्के चेन्मधुविन्देत किमर्थं पर्वतं व्रजेत् इति श्रुतेश्च, तथा च शीतोदकनिषेधनम् उष्णोदकोपदेशश्च द्वावपि अनर्थकौ स्याताम्, तस्मात् प्रत्याख्याने कृते श्राद्धा अपि उष्णोदकमेव पिबन्ति? इति, अत्रोच्यते, ननु एलामुस्तादिवासितं जलं विशिष्टप्रत्याख्यानवताम् अपेयम्, इत्युक्तं भवता, किं प्रत्याख्यानभङ्गहेतुत्वात् ॥ १ ॥ सचित्तत्वाद् वा ॥ २ ॥ त्रसजीवयुक्तत्वाद् वा ॥३॥ जीवसंसक्तिहेतुत्वात् वा ॥ ४ ॥ कूपतडागादिस्थजीवघातिसंस्कारकपातत्वाद् वा ॥ ५ ॥ गृद्धिहेतुत्वाद् वा ॥ ६ ॥ शीतोदकत्वाद् वा ॥ ७ ॥ तृषापरीषहप्रतिपन्थित्वाद् वा ॥ ८ ॥ भोगाङ्गत्वाद् वा ॥ ९ ॥ आगमनिषिद्धत्वाद् वा ॥ १० ॥ इति दशविकल्पाः, तत्र नाद्यः पक्षः अनियतत्वात्, नहि प्रत्याख्याने प्रासुकजलपानम् अवश्यमेव नियम्यते, तृपोदयवतां सचित्तजलपानप्रसङ्गात्, प्रत्याख्यानाकरणप्रसङ्गाच्च, नियम्यते चेद्, तदा मुस्तादिभावितोदकस्य इव उष्णोदकस्यापि अपेयत्वप्रसङ्गः, तस्यापि प्रासुकत्वात्, अथ केवलं शीतोदकमेव नियम्यते, तदा उष्णोदकमपि क्षणान्तरेण शीतीभूतं पातुं न कल्पते, भङ्गहेतुत्वात्, अथ अनुष्णोदकमेव नियम्यते इति न प्राक्तनेन नियमभङ्गः, तस्य शीतीभूतस्यापि उष्णोदकशब्दवाच्यत्वात्? एवं तर्हि तन्दुलोदकादीनि साधूनां पातुं न कल्पन्ते, किञ्च अनेकानि प्रत्याख्यानानि भवन्ति, ततो यत्र प्रत्याख्याने तन्नियम्यते, तत्र तद्गृह्यमाणं भङ्गहेतुर्भवतु, अन्यत्र कथम्? अतिप्रसङ्गात्, नच सर्वेऽपि तन्नियम्यते अनुक्तत्वात् अशक्यत्वाच्च ॥

नापि द्वितीयः, असंभवात्, एलादाभाह पारणामकद्रव्यैः संपृक्तमात्रमपि जलं मिश्रं भवति, किं पुनर्भावितं, यदि पुनः
सचित्तं स्यात्, तदा तेषां वर्णान्तराद्यापादकत्वेन उक्तं जलं प्रति शस्त्रत्वम् असमीचीनमेव स्यात्, उक्तं च तत् तथाहि आ-
चाराङ्गनिर्युक्तौ "दव्वं सत्थग्गिविसन्नेहं विलखारलोणमाईयं, भावे उ दुप्पउत्तो वाया काओ अविरई य त्ति" अथ एलादीन्ध-
नसंपर्केऽपि न अचित्तं ? तर्हि न तैर्वासितं, वासनायाः कालक्रमेण भावात्, ततो यावद् असौ न भवति, तावदिदं मिश्रम्
एवोच्यते, न पुनः सचित्तं यदुक्तम् ओघनिर्युक्तौ "उसिणोदगमणुव्वत्ते, दंडेवासे य पडियमित्तम्मि । तंदुलोदकमपि यावद्
अतिप्रसन्नं न भवति, तावन्मिश्रमेव" लघुघटिकाद्वयादिना कालेन अतिप्रसन्नं जातं तु प्रासुकं भवति, यदुक्तम् 'आदेसतियं
बुब्बुयभायणबिंदू य चाउलन भेदो । मुत्तूण तिन्नि वेए चाउल उदगं बहुपसन्नं ति, अथ तैर्वासितमपि प्रहरत्रयाद्यनन्तरं पुनः
सचित्तीभवति ? एवं तर्हि उष्णोदकमपि प्रहरत्रयादेरूर्ध्वं सचित्तीभवति, इति तदपि अपेयं स्यात् ? अथ तस्याम् अवस्था-
याम्-अपेयम् एव ? तर्हि एलादिवासितमपि तस्याम् अवस्थायाम् अपेयं भवतु, न पुनः सर्वदापि, तदापि सचित्तवर्जनका-
नामेव अपेयम् नतु अन्येषां, तेषां हि नागवल्लीदलाद्यनेकसचित्तभक्षणप्रसक्तत्वेन, नियमाभावात्, तस्माद् इदम् अवक्तव्यमेव
उभयोरपि समानत्वात् ॥ अथ एलादिवासितम् अप्रासुकमेव शीतोदकत्वात् कूपस्थजलवत् ? इति चेद् नैवं नहि कूपस्थे जले
शीतोदकत्वात् अप्रासुकत्वम् किं तर्हि वर्णान्तराद्यनापन्नत्वात् ? यत्तु वर्णान्तराद्यापन्नं तत्कूपादिस्थमपि जलं प्रासुकमेव, यदुक्तं
निशीथे-मार्गे गच्छता भगवता श्रीमहावीरेण तडागस्थं जलं सर्वमपि वर्णान्तराद्यापन्नत्वेन कालतः स्थितिसमाप्त्या वा प्रासुकीभूतं

ज्ञानेन ज्ञातमपि तृषातुराणामपि महामुनीनाम् अग्रे न भणितम्, अतिप्रसङ्गनिवारणार्थम् इति, यदि पुनः शीतोदकत्वाद् इदम् अप्रासुकं ? तर्हि त्रिदण्डोत्कलितमपि अप्रासुकम् उष्णोदकत्वात् तापोदकवद् इत्यपि वक्तुं शक्यते एव, तस्माद् यद् वर्णान्तरादिरूपत्वेन परिणतं, तच्छीतोदकं वा भवतु उष्णोदकं वा भवतु प्रासुकमेव, इतरद् अप्रासुकम्, अतएव चत्वारो भङ्गा उक्ता निशीथे ।

"सीओदे उसिणोदे फासुग-अफासुगे य चउभंगो, । ठायंते लहुलहुगा कस्स अगीयत्थसुत्तं तु"

चूर्णिस्तु एवं–सीओदगं फासुयं । १ । सीओदगं अफासुयं । २ । उसिणोदगं फासुयं । ३ । उसिणोदगं अफासुयं । ४ । पढमे भंगे उसिणोदगं सीती भूतं, चाउलोदगाइ वा, विइयभंगे वि तं चेव अपरिणयं पहरतिगादि उड्डं वा, तइये भंगे उसिणोदगं उव्वत्तदंडं, चउत्थभंगेवि तापोदगाइ पढमतइयभंगे ठायंतस्स मास लहु, बीयचउत्थेसु चउलहु, एयं कस्स पच्छित्तं, आयरिओ भणइ, एयं अगीयत्थस्स पच्छित्तं ति, किंच यद्यपि अव्यक्तचेतनावत्त्वात्, शीतोदकं स्वभावतः सचित्तमेव तथापि उपघातकद्रव्यान्तरसम्बन्धात् प्रासुकमपि भवत्येव, यदुक्तं निशीथे "कामं खलु चेयन्नं सव्वेसिं एगिंदिआण अवत्तं । परिणामो पुण तेसिं वण्णाई इंधणं पप्पेति" केवलं कियति अपि कालेऽतिक्रान्ते न पुनस्तत् क्षणादेव, अत एवोक्तं निशीथसूत्रे "जे भिक्खू उस्सेइमं वा, संसेइमं वा, चाउलोदगं वा, वारगोदगं वा, तिलोदगं वा, तुसोदगं वा, जवोदगं वा, भुसोदगं वा, आयामं वा, सोवीरं वा, अंबकंजियं वा, सुद्धवियडं वा, अहुणाधोयं, अणंबिलं, अवक्कंतं, अपरिणयं अविद्धत्थं, पडिगाहेइ, तस्स

पच्छित्तं" इत्यादि तस्माद् अधुना धौतत्वादिविशेषणोपेतत्वेन मिश्रत्वाद् अमीषाम् अग्राह्यत्वं, न पुनः सचित्तत्वाद्, इत्यसिद्धोऽयं हेतुः ॥ नापि तृतीयः भागासिद्धत्वात्, नहि एलादिभावितं सर्वमपि जलं त्रसजीवयुक्तमेव भवतीति नियमोऽस्ति, तद्रहित-स्यापि तस्य दर्शनात्, ततो यत् त्रसयुक्तम् तद् अपेयं भवतु, शेषं तु कथं, नहि त्रिदिनातिक्रान्तं दधि जीवयुक्तत्वाद् अपेयम् इति, इतरत् अपि अपेयं भवति, यदपि त्रसयुक्तं, तदपि अतिनिबिडवस्त्रेण गालितं सन्निर्जीवं भवति, नच वस्त्रेण न गाल्यते 'वस्त्रपूतं पिबेज्जलम्' इतिवचनात्, लौकिका अपि वस्त्रेण जलं गालयन्ति, किं पुनर्लोकोत्तरिकाः, किंच श्रावकाः स्नानमपि गालितेनैव जलेन कुर्वन्ति, किं पुनः पानं, तथा चोक्तं दिनकृत्ये 'तसादिजीवरहिए भूमीभाएसु सुद्धए फासुएणं तु नीरेणं इयरेणं गालिएणं उ काऊण विहिणा न्हाणं, इत्यादि, अत्र 'इयरेणं गालिएण उ' इति वदता प्रायः प्रासुकं गालितमेव भवति, इति सूचितम्, अप्रासुकस्य उभयथापि भावात्, इति विशेषणम् उक्तं, तथा च कथं यतीनां त्रसयुक्तस्य तस्य ग्रहणं भविष्यति, प्रायः प्रबुद्धश्राद्धगृहेष्वेव तस्य तैर्गृह्यमाणत्वात्, यदि वा भवतु कथंचित् सत्रसमपि इदं गृहस्थगृहेषु, तथापि स्वयमेव एते गालयित्वा गृह्णन्ति, नच एतेषां गालनकं न भवति एवेति वाच्यम्?, आगमे तस्यापि उक्तत्वात्, तथाहि कल्पभाष्ये "उवग्गहियं चीरं गालणहेउं घणं तु गिण्हंति, तहवि हु असुज्झमाणे असई अद्धाण जयणाओ त्ति" किंच साधव उष्णोदकमपि गालयन्ति, किं पुनः सम्भाव्यमानत्रसशीतोदकं, यदुक्तं पर्युषणाकल्पे "अट्ठमभत्तिअस्स भिक्खुस्स कप्पइ एगे उसिणोदगे से चेवणं परिपूए नो चेवणं अपरिपूए" इति परिपूतं गालितम् इत्यर्थः ॥

तथा 'कञ्जिय आयामासइ संसट्ठुसिणोदएसु वा असई फासुयमुदगं तसजढंतस्स सई लसेहिं जं रहियं, इति निशीथभाष्यगाथाचूर्णावपि उक्तम् 'पुव्वं ताव कञ्जियं गिण्हइ, कञ्जियं देसियभासाए आरनालं भण्णइ, आयामं अवस्सावणं एएसिं असइए ससट्ठुसिणोदगं गिण्हइ, गंधरसभायणनिक्केयणं जं तं संसट्ठुसिणोदगं भण्णइ, अहवा कोसलविसयाइसु सव्वोदणोचिणस्सण भया सीउदगे छुब्भइ, तम्मि ओयणे भुत्ते तं अंनीभूयं जइअतसागं तो घिप्पइ, एयं वा संसट्ठुसिओदगं एयस्स असईए जं चप्पाईसु फासुयमुदगं तं तसजढ घिप्पइ, तस्स असइ त्ति" फासुय अतसागस्स असइ, फासुगं सतसागं धम्मकरगाइ परिपूयं विप्पइ, इत्यादि, सुघननिविडवद्धगालनकेन कमण्डल्वादिधर्मसाधनभाजनेन गालितं, धर्मकरकपरिपूरितम् उच्यते, आदिशब्दात् प्रकारान्तरेण गालितं गृह्यते इत्यर्थः, नच वय त्रसयुक्त पेयम् इति ब्रुवन्तः स्म, किं तर्हि प्रासुकं पेयमिति, प्रासुकं च गालितमेव भवति, इत्यनगमेव इदम्, इति अनभ्युपगमनाधितत्वाद् भागासिद्धत्वात् चाहेतुरेवासौ ॥ नापि चतुर्थः काञ्जिकादीनामपि अपेयत्वप्रसङ्गात्, अयम् अभिप्रायः यदि गालितत्वाद् अत्रसे ऽपि प्रासुकोदके भाजनदोषाद् वा, ग्रीष्मकालादिवशाद् वा, क्षेत्रगुणाद् वा, क्षणान्तरे पुनस्त्रसा उत्पद्यन्ते, इति इदम् अपेयम्, तर्हि काञ्जिकाद्यपि अपेयम्, तत्रापि एवं पुनस्त्रसोत्पत्तेर्दर्शनात्, आगमे प्रतिपादितत्वाच्च, तथाहि आवश्यके पारिष्ठापनिकानिर्युक्तौ "विकलिंदिएहिं जा सासा तिविहा होइ, आणुपुव्वीए विय तिय चउरो याविय तज्जाय तहा अतज्जाया, इति गाथाचूर्णौ जत्थ पाणगं वि वीयपाए पडिलेहित्ता, उग्गाहिए छुब्भइ, संमत्तं जायं रसएहि ताहे सपडिग्गहं वोसिरउ, इत्यादि नच इदम् अपेयम् तस्मात् तदपि पुनर्गालयित्वा शोध्यते,

यदि शुद्ध्यति तदा पीयते, निर्जीवत्वात् कंजिकवत्, काञ्जिकं हि द्वत्रसमपि निर्जीवीभूतं सती पीयते एव, यदुक्तम् तत्रैव
चूर्णौ 'जे य पाणा दिट्ठा ते मया हुआ, एगेणं पडिलेहियं, बीएणं, तइएणं, सुद्धं परिभुञ्जति त्ति, अथ कथमपि न शुद्ध्यति,
तदा आकरविधिना परिष्ठाप्यते, ननु ते जीवाः कथं कर्त्तव्याः ? उच्यते यतिभिर्येषां गृहे तद् विहृतं तेषामेव यतनया दत्त्वा
व्युत्सर्जनीयाः, गृहस्थैश्च यस्य कूपस्य तडागस्य वा, तज्जलं, तत्रैव यतनया प्रक्षेपणीयाः, ननु एवं तद्गताप्कायविराधना ?
जीवपानीयस्य विभिन्नवर्णगन्धरसस्पर्शत्वेन तं प्रतिशस्त्रत्वात्, यदुक्तम् आचाराङ्गनिर्युक्तौ "किंची सकायसत्थं, किंची परकाय
तदुभययं किंची, एयं तु दव्वसत्थं, भावेउ असंजमो सत्थं" वृत्तिस्तु एवं किंचित् स्वकायशस्त्रं नादेयं तडागस्य, किंचित्
परकायशस्त्रं मृत्तिकास्नेहतिलक्षारादिकं, किंचिच्च उभयम् उदकमिश्रामृत्तिकोदकस्य, एतद् द्रव्यशस्त्रम् ॥ भावशस्त्रं तु असंयमः,
प्रमत्तस्य दुःप्रणिहितमनोवाक्कायलक्षण इति, अथ घटादावेव धार्यन्ते तदा तद् भङ्गे, कथमपि जलस्य शोषे वा, तेषामेव वि-
नाशः स्यात्, इत्युभयथापि विराधनाभावात् प्रासुकीकरण–मृक्षकर्णाग्रहणवद् दुःखावहम् ? इति चेद् नैवं तस्या विराधनाया
अपि यतनापूर्वकत्वेन निर्जराहेतुत्वात् ॥ यदुक्तम् 'जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स । सा होइ, निज्जरफला
अज्झत्थ विसोहि जुत्तस्स इति' 'ईरियावहमाइया जे चेव हवंति कम्मबंधाय अजयाणं, ते चेव उ जयाण निव्वाण गमणाय,
इति यश्च कुतोऽपि कदवलेपात् जीवान् जले न प्रत्युपेक्षते, स विराधक एव, यदुक्तम् ओघनिर्युक्तौ 'पडिलेहणा पमत्तो छण्हं पि
विराहओ भणिओ त्ति, तस्मात् यत् किंचिदेतत्, एतेन पञ्चमो ऽपि पक्षो निरस्तः, उष्णोदकस्यापि अपेयत्वप्रसङ्गात्, तदापि

हि क्षणान्तरेण शीतीभूतत्वात् त्रसयुक्तमपि भवति, प्रहरत्रयादेरूर्ध्वं सचित्तमपि भवति, ततो यदि तत् तथाभूतं कूपादौ प्रक्षिप्यते, तदा तद्गतजीवविराधना, तस्य विरसीभूतत्वेन तान् प्रति शस्त्रत्वात्, अथ भूमौ प्रक्षिप्यते, घटादौ वा धार्यते, तदा जलशोषे तेषामेव, विनाशः, अथ तत्परिमितमेव क्रियते ? ततो नोक्तदोषावकाशः, तर्हि शीतोदकमपि परिमितं प्रासुकीक्रियतां, को नाम वारयिता ॥ किंच परिमितं कर्तुं न शक्यते, अष्टम्यादौ प्रायः सकलस्य कुटुम्बस्य विभिन्नप्रत्याख्यानवचनेन तन्मानस्य दुर्लक्षत्वात् ? यदि वा क्रियतां, कथमपि, परिमितं, तथापि तृषाद्यभावात्, आकस्मिकदेशान्तरादिगमनाद् वा, राजाद्यवग्रहाद् वाऽन्यतो वा, कुतोऽपि पानासंभवे तद् वर्द्धते एव, यदि वा मा वर्द्धिष्ट, तथापि प्राघूर्णिकसाधर्म्मिकाणां साधूनां वा, तदर्थं गृहागतानां, यदि सदपि तन्न दीयते, तदा 'साहूण कप्पणिज्जं जं न विभिन्नं,' इत्यादि वचनात् पातुं न कल्पते, अथ दीयते तदा सार्थं पुनरन्यत्कार्यं स्यात्, तृष्णायाश्च प्रायः आर्त्तध्यानहेतुत्वेन व्ययहेतुत्वेन च सोढुम् अयुक्तत्वात्, अशक्यत्वाच्च तथाच पुनः षड्जीवनिकायविराधना, तस्मात् महात्मन्नत्र समदृष्ट्या विमृश्यतां, किम् एलादिभिर्भावकद्रव्यैः प्रासुकीक्रियमाणे जले बह्वी जीवविराधना, अथवा अग्निना त्रीन् उत्कालान्यावत् उत्काल्यमाने वयं च जानीम उत्काल्यमाने एव, अग्न्यारम्भस्य षड्जीवनिकायोपमर्द्दारम्भकत्वात् विरूपगालितत्वेन, तत्र सतां त्रसजीवानां निर्दयम् उत्कालनाच्च ॥ ननु एवम् अस्ति परम् अस्मद्गुरुः कथयति प्रासुकजले बह्वीविराधना इति ? तत् किं मूर्ख परवचनानां विश्वस्यते, न आत्मनयनयोः ॥ ननु एवं तर्हि किम् इत्यागमे यतीनाम् उष्णोदकपानम् उपदिष्टम् ? उच्यते तेषां प्रासुकोदकापेक्षया उष्णोदकं त्रसजीवरहितत्वने प्रायो

वैधर्म्मिकगृहेषु अपि सुलभत्वेन बहुगुणं, श्राद्धानां तु प्रासुकोदकमेव बहुगुणं सुकरत्वात्, अल्पजीवविराधनात्मकत्वात्, प्रायः सर्वजनप्रियत्वाच्च, नतु उष्णोदकं विपरीतत्वादिति ॥ नापि षष्ठः, अप्रतिबन्धात् नहि यद् यद् गृद्धिहेतुस्तत् तद् अपेयम् इति व्याप्तिरस्ति, क्षीरादिभिर्व्यभिचारात्, तेहि गृद्धिहेतवो ऽपि प्रत्याख्याने पीयन्ते एव, किंच यदि गृद्धिहेतुत्वात् शीतोदकम् अपेयम् ? तर्हि उष्णोदकमपि अपेयम्, तस्यापि केषांचिद् अतिपथ्यत्वेन प्रियत्वेन च गृद्धिहेतुत्वात्, अपि च न एलादिवासितमिति, शीतलमिति वा जलं गृद्धिहेतुः ? किं तर्हि ? असंविग्नेन पीतमिति, यतः केचित् अतिसंविग्नतया तादृशमपि जलं पिबन्त आज्ञाभङ्गादिदोषभयात् न गृद्धिं कुर्वन्ति, अन्यच्च यद्यपि मनोज्ञवर्णगन्धरसोपेतत्वात् तत् कस्यापि गृद्धिहेतुस्तथापि तत्पानं सिद्धान्ते यतीनामपि अनुज्ञातम् एव, केवलं रागद्वेषौ एव तत्र अविधेयौ, अन्यथा दोष इत्येव उक्तम्, तथाहि निशीथे जं गंधरसोवेयं अच्छ च दव्वं च तं भवे पुप्फं, जं दुब्भिगंधमरसं, कलुसं वा, तं भवे कसायं, धित्तूण दुन्नि व्वि दवे पत्तेयं, अहव इक्कओ चेव, जे पुप्फमादिइत्ता कुज्जा कसाए विगिंचणया सो आणा अणवत्थं मिच्छत्त विराहणं पावेइ, इत्यादि ततः कथं गृहस्थानां न कल्पिष्यते ॥ नापि सप्तमः, तन्दुलोदकादिभि–र्हेतो–र्व्यभिचारात्, तानि हि शीतोदकानि अपि प्रत्याख्याने पीयन्ते एव, अथ एतानि अनुज्ञातानि विरसत्वात् ? तर्हि बिभीतकदाडिमच्छल्यादिरसभावितोदकमप्यनुज्ञातं तस्यापि विरसत्वात्, किं च यदि सरसत्वात् एलादिवासितोदकस्य अपेयत्वं ? तर्हि द्राक्षापानकखर्जूरपानकादीनाम् आचाराङ्गाद्यागमानुज्ञातानामपि अपेयत्वप्रसङ्गः, तेषामपि शीतोदकत्वात् ॥ नापि अष्टमः, असिद्धत्वात् नहि एलादिवासितमिति, शीतलम्

इति वा तत् तृपापरिषहप्रतिपन्थि ? किं तर्हि सचित्तमिति तस्यैव एकान्ततो ऽकल्पनीयत्वात्, इदं च न सचित्तं, नापि अकल्पनीयं, ततः कथं तृपापरिषहप्रतिपन्थि, अन्यथा परमान्नाद्यपि बुभुक्षापरीषहप्रतिपन्थि स्यात्, तथा च तदपि अभक्ष्यं स्यात्, किंच तृपापरीषहोऽपि साधुभिरेव सोढव्यो न श्राद्धैः, तेषाम् अप्रतिपन्नव्रतत्वेन स्वेच्छाचारित्वात्, सोऽपि न लभ्यमानं पानकं नपेयम् इत्येवं रूपः ? किं तर्हि अलभ्यमाने प्रासुके एषणीये तस्मिन् तृषार्त्तत्वात् अप्रासुकम् अनेषणीयं वा न अभिलषेद् इत्येवंरूपः, यदुक्तम् 'पिपासितः पथिस्थोऽपि तत्त्वविद् दैन्यवर्जितः । शीतोदकं नाभिलषेत् मृगयेत् कल्पितोदकम्' इति, अत्र शीतोदकं सचित्तोदकम् एव, इत्ययम् अर्थोऽग्रे प्रकटयिष्यते तस्मात् भिक्षावृत्तित्वात् तपस्विनो ऽपि मधुकरवृत्त्यनुल्लंघनेन लभ्यमानम् एलादिवासितोदकमपि प्रासुकत्वात् पिबन्ति, किं पुनः गृहस्थाः, तेषां सुखशीलत्वात्, किंच शीतोदकं प्रासुकमपि, यदि यतीनाम् अकल्प्यम् अभविष्यत् ? तदा श्रीसुधर्मस्वामिगणधरः तिलोदकादीनि नानुज्ञास्यत तेषामपि शीतोदकत्वात्, अनुज्ञातानि च तानि तेन भगवता, तथाहि आचाराङ्गे "तिलोदगं वा, तुसोदगं वा, जवोदगं वा, आयामं वा, सोवीरं वा, सुद्धवियडं वा, अन्नयरं वा, तहप्पगारं पाणगजायं" इत्यादि वृत्तिकृता ऽपि तथैव व्याख्यातानि, यथा तिलैः केनचित् प्रकारेण प्रासुकीकृतम् उदकं तिलोदकम्, एवं तुषैर्यवैर्वेति, आचाम्लम् अवश्यानं, सौवीरम् आरनालं, शुद्धविकटं प्रासुकम्, उदकम्, अन्यद् वा, तथा प्रकारं द्राक्षापानकादिपानकजातम् इति, तस्मात् कल्प्यमेव, तथाच प्रयोगः "एलादिवासितोदकं, यतीनां कल्पते, आगमोक्तत्वात् उष्णोदकवत्" नचायम् असिद्धो हेतुः, आगमेहि शुद्धविकटशब्देन तस्यैव उक्तत्वात्, प्रसि-

कारैस्तथैव व्याख्यातत्वादिति ॥ नापि नवमः, कर्पूरादिवासितैरिक्षुरसचिञ्चापानकादिभिर्व्यभिचारात्, ते हि प्रत्याख्यान मुनिभिरपि पीयन्ते किं पुनः श्राद्धैः, किंच कर्पूरादिसुगन्धिद्रव्यभावितं मोदकाद्यपि साधवः परिभोगयन्ति किं पुनः पानीयं तस्य तादृशस्यापि अविकारकत्वेन उभयसंमतत्वात्, केवलं यस्तत्र रागद्वेषकारी स एव दोषभागित्वेन उक्तः, तथाहि निशीथे "वन्नेण य, गंधेण य, रसेण फासेण जं तु उववेयं। तं भोयणं तु सुब्भि तव्विवरीयं भवे दुब्भि ॥ धित्तूण भोयणदुगं पत्तेयं, अहव इकओ चेव। जे सुब्भि भुंजित्ता दुब्भि च विगिंचणं कुज्जा, ॥ सो आणा अणवत्थ इत्यादि, अपि च "ककोलय सेवंते सोही साहुस्स होय भत्तट्ठं। पूगीफल जाईफल लवंगतंबोल माईसु य" इति वचनेन कक्कोलयादिभोगाद्द्रव्यलक्षणं प्रायश्चित्तविपयत्वेन साधूनामेव निषिद्धं न श्राद्धानाम्, इति ते साक्षादेव सुरभिद्रव्यं भक्षयन्ति, किं पुनस्तद् वासितम् अन्यत्, तथाच तान् प्रति कालात्ययापदिष्टो हेतुः, प्रत्यक्षबाधितत्वात् ॥ नापि दशमः, असिद्धत्वात्, आगमेहि द्रव्यान्तरेण उपहतं जलं प्रासुकत्वात् सर्वविरतानामपि मुनीनामपि पेयत्वेन उक्तं, तथाहि ओघनिर्युक्तौ "सीओण्ह खारखत्ते अग्गी लोणूस अंबिलेणेहो वक्कन्तजोणिएणं, पओयणं तेणिमं होइ ॥ १ ॥ परिसेयपियणहत्थाइ धोवणे चीरधोवणे चेव आयमण भाणुधुवणे, एमाइ पयोयणं बहुहेति ॥ २ ॥" ततः कथं देशविरतानाम् अपेयं भविष्यति, तेषाम् असंयतत्वेन विशेषेण पेयमेव ॥ ननु एवं तर्हि 'सीओदगं न सेविज्जा', इत्याद्यागमैः प्राग्दर्शितैः किमित्यस्य प्रतिषेधः कृतः ? इति चेत्, उच्यते कः कथयति कृत इति, एतानि एव अक्षराणि प्रकटार्थत्वात् कथयन्ति ? इति चेत्, नैवं तर्हि अनेकार्थशब्दे प्रयुक्ते लोकप्रसिद्धत्वात् यो ऽर्थः, प्रकटो

ऽवगम्यते, स एव प्रमाणीक्रियते, अन्यथा 'किइ कम्मकरो हवइ साहू' इत्यत्रापि गृहस्थार्थ एव साधुशब्दः स्यात्, द्रव्याढ्यव्यावहारिकनरवाचकतया अस्य लोकेऽतिरूढत्वात्, तथाच पंचमहव्वयजुत्तो, इति विशेषणेन सहविरोधः ॥ तत्किं साधुशब्दवत् शीतोदकशब्दोऽनेकार्थः ? इति चेत् एव, कथम् इति चेत् उच्यते, शीतोदकम् अनुष्णोदकमेव लोके प्रसिद्धम्, आगमे तु सचित्तोदकमपि, यतः 'सीतोदमीसियम्मि उदव्वम्मि उमग्गणा होइ', इति कल्पभाष्यप्रथमोद्देशके स्थितशीतोदकशब्दश्चूर्णौ तथैव व्याख्यातः, तथाहि—शीतोदकमिश्रिते द्रव्ये ऽधिकारः, सचित्तोदकमिश्रितेन इत्यर्थ इति ॥ एवंच यत्र क्वापि द्व्यर्थशब्दः प्रयुक्तो भवति, तत्र विवक्षितार्थावगमाय पूर्वाचार्या एव आदरणीयाः, तेषां प्रायः साम्नायत्वेन सर्वसम्मतत्वात्, तथाच यत्तैर्व्याख्यातं, तदेव पूर्वापराविरोधित्वेन प्रमाणीक्रियते, नेतरत्, पूर्वापरव्याघातादिदोषभावात्, पूर्वाचार्यैश्च युष्मद्दर्शितेषु सूत्रपदेषु सर्वेषु अपि शीतोदकशब्दः सचित्तोदकार्थतया एव व्याख्यातस्तथाहि 'सीओदगं न सेविज्जा' इत्यत्र शीतोदकं, पृथिव्युद्भवसचित्तोदकम् इति, सीओदगं न पिबे, न पियावए, इत्यत्र च सचित्तं पानीयम्, इतिच श्रीहरिभद्रसूरिभिः, तथा 'सीओदगपडिदुगुंछिणो' इत्यत्र शीतोदकम् अप्रासुकोदकं तत्प्रतिजुगुप्सकस्य अप्रासुकोदकपरिहारिणः, इति शीलाङ्काचार्येण, तथा 'सीओदगं न सेविज्जा, इत्युत्तराध्ययनगाथायां, शीतोदकं सचित्तोदकं स्वरूपस्थं जलमिति वृत्तिकारैर्विवृतं, तस्मात् तथैव प्रतिपत्तव्यः ॥ एवं च, सीओदगाइभोगं विवागकडुयं ति न करिंति, इति पञ्चवस्तुकगाथायाम् शीतोदकं नाभिलषेत मृगयेत् कल्पितोदकम् इति द्वितीयपरीषहश्लोके च, शीतोदकशब्दः सचित्तोदकार्थ एव सिद्धः ॥ अन्यथा स्ववचनविरोधः सिद्धान्त-

हस्तपादादिप्रक्षालणमात्रमेव यतीनां प्रतिषिद्धम्, नतु तयोर्ग्रहणं
विरोधश्च स्यात्, सिद्धान्ते हि प्रासुकशीतोदकोष्णोदकाभ्यां हस्तपादादिप्रक्षालणमात्रमेव यतीनां प्रतिषिद्धम्, नतु तयोर्ग्रहणं
पानं वा, तथाहि आचाराङ्गे "से भिक्खू वा भिक्खुणी वा सिज्जं पुण उवस्सयं जाणिज्जा, तंजहा खंधंसि वा, मंचंसि वा,
पासायंसि वा, हम्मियतलंसि वा, अन्नयरंसि वा, तहप्पगारंसि वा, अंतलिक्खजायंसि वा, नन्नत्थ आगाढगाढकारणेहिं ठाणं
वा हे हज्जा सेय आहच्च चेइयासिया नो तत्थ सीतोदग वियडेण वा, उसिणोदगवियडेण वा, पादाणि वा, हत्थाणि वा,
अच्छीणि वा, दंताणि वा, मुहं वा, उच्छोलिज्ज वा, पहोएज्ज वा त्ति, 'विकटेन' प्रासुकेन, यदि पुनः शीतोदकविकटं
प्रथमत एव अकल्प्यं स्यात्, तदा हस्तादिप्रक्षालणनिषेधनम् असंगतमेव स्यात्, तद्विधिसंभावनाया अपि अभावात्,
नहि अकल्प्यं गृह्यते, नापि अगृहीतेन प्रधाव्यते, तस्मात् इदं कल्प्यम् एव, अन्यथा उष्णोदकविकटस्यापि अक-
ल्प्यत्वप्रसङ्गः, समानत्वेन द्वयोरपि अत्र उपन्यस्तत्वात् 'एवं तम्हा तेण सिणायंते सीएण उसिणेण वा' इत्यादि अपि
भावनीयं, 'समानयोगक्षेमत्वात्' ॥ किंच न शीतम् इत्युदकम् अभोग्यं ? किं तर्हि अनुपहतमिति, नापि उष्णमिति तद्भोग्यं ?
किं तर्हि उपहतमिति, अनुपहतस्य उष्णस्यापि तस्य वर्ज्यत्वेन उपदिष्टत्वात्, तथाहि—तहेव चाउलं पिट्ठं, वियडं वा, तत्तनि-
व्वुडं तिलपिट्ठपूइ पिन्नागं आमगं परिवज्जए ॥ इति गाथावृत्तौ 'विकटं, शुद्धोदकं, तथा तप्तनिर्वृत्तं क्वथितं सत् शीतीभूतं,
तप्तानिर्वृत्तं वा, अप्रवृत्तत्रिदण्डम्, इति श्रीहरिभद्रसूरिभि–र्व्याख्यातं, तथा च शुद्धोदकोष्णोदके द्वे अपि आमत्वात् वर्ज्ये,
उपहतत्वात् कल्प्ये एवेति सिद्धं, तथाच प्रयोगः, एलादिवासितं जलं, शीतलमपि यतीनां कल्पते, आगमाप्रतिषिद्धत्वात्, उ-

प्णोदकवत् इति, न श्रुतधरैः प्रतिषिद्धम् अविगानेन प्रवर्त्तमानत्वात्, स्वग्रन्थेषु तैरपि तस्य कल्प्यत्वेन व्यवस्थापितत्वात् च, तथाहि—प्रवचनसारोद्धारसूत्रवृत्त्यो', उसिणोदगं तिदडुकलियं फासुयजलं च जइकप्पं, नवरि गिलाणाइकए पहरतिगोवरि-विधिरियव्वं, त्रिभिर्दण्डैरुत्कालैरुत्कलितम् आवृत्त यद् उष्णोदकम्, तथा यत् प्रासुकं, स्वकायपरकायशस्त्राद्युपहतत्वेन अचि-त्तीभूतं जलं तदेव यतीनां कल्प्यं (ग्रहीतुम् उचितम्)? इत्यागमश्रुतधरसंमतिदर्शनेन अनेकधा साधितमपि प्रासुकोदकथानम् अनुमानेनापि साध्यते—एलामुस्तादिवासित जल, सुविहितानामपि पेयम्, अगर्हत्वे सति शीतोदकविकटत्वात्, तंदुलोद-कवत् इति, शरीरधावनादिजलैर्व्यभिचारो मा भूत् इत्यत्र अगर्हत्वे सतीति विशेषणं कृतं ॥ ननु एवं शास्त्रान्तरेण सह विरोधः? तत्र हि द्रमकसाधुम् उद्दिश्य सर्वसङ्गपरित्यागम् उपहसता जनानां प्रतिबोधनार्थं परमार्हता श्रीअभयकुमारमन्त्रिणा महार्घरत्न-राशित्रयं दर्शयित्वा भणितं, यथा यः शीतलं जलमग्निं स्त्रियं च यावज्जीवं त्यजति, स इदं गृह्णातु इति, एतच्च श्रुत्वा जिघृक्षु-रपि निष्फलत्वाद् यावन्न कोऽपि गृह्णाति, तावद् अभयकुमारमन्त्रिणा पुनरपि भणितम्, अहो निःसत्त्वाः? किम् इत्येनं महा-सत्त्वम् मुनिं यूयम् उपसहत, अनेनहि महात्मना महार्घरत्नराशित्रयमूल्येनापि युष्माकं दुस्त्यजं शीतलजलादिवस्तुत्रयं त्यक्तम्, इत्यादिना शीतलजलत्यागस्यैव साधूनां समर्थितत्वात्? इति चेत् न विरोधोहि तदैव स्यात्, यदि साधवः शीतलजलं मन-साऽपि अभिलषेयुः, न चैवम् अस्ति, ननु एलादिवासितोदकं पिबन्ति नच शीतलजलम् अभिलषन्तीति प्रतीतिविरुद्धम्? इति चेन्न, तेहि प्रासुकमिति तत्पिबन्ति, न शीतलमिति, अन्यथा निर्झरणादिस्थमपि पिबेयुः, नच शीतलोदकं त्यक्तम् इति प्रासु-

कमपि तन्न पेयम् ? इति वाच्यम्, एवं तर्हि तन्दुलोदकादीनामपि अपानप्रसङ्गः ॥ अथ एलादिवासितम् अतिशीतलम् इति
त्यागार्हम् एव ? तर्हि षष्टिकतन्दुलोदकादि अपि त्यागार्हम् एव, तस्यापि परिणतौ अतिशीतलत्वाद् ॥ अथ एलादिवासितोदकं
शीतलजलात्मकं शीतलजलविकारो वा इति तत्पाने तदपरित्याग एव ? तर्हि अग्नेरपि अपरित्याग एव तत्सत्वेन तदात्मकानाम्
उष्णोदकादीनाम् अग्निजन्यत्वेन तत्कार्याणां च भसादीनां साधुभिः परिभोग्यमानत्वात्, आगमेऽपि च उष्णोदकादयो य-
तीनाम् अनुज्ञाता एव, तथाहि ओघनिर्युक्तौ "ओअण वंजण पाणग आयामुसिणोदगं च कुम्मासा । डगलगसरक्खसूई पिप्प-
लगाई उवओगो त्ति" अथ अग्निकार्याणि एव एतानि नाग्निः, तत्कथं तत्परिभोगे वह्निपरिभोगः ? इति चेत् उच्यते, अग्नि-
कार्यपरित्यागेनैव हि अग्निः परित्यक्तो भवति, अन्यथा महर्द्धिकानां तत्त्यागः सुकर एव, नहि एते साक्षाद् अग्निसेवां विना
स्थातुं न शक्नुवन्ति, ततोऽनर्घरत्नराशित्रयमूल्येन ते तं त्यजेयुरेव, अथाग्निः साधुभिस्त्यक्त एव तदारम्भनिर्वृत्तत्वात् ? तर्हि
शीतलजलमपि तैस्त्यक्तमेव, नहि एतद् आरम्भम् अपि यतयः कुर्वन्ति, किं तर्हि ? गृहस्था एव, यत आरम्भो जीवानाम्
अपद्रावणम् उच्यते यदुक्तं "संकप्पो संरंभो, परितावकरो भवे समारंभो, उद्दवओ आरंभो सुद्धनयाणं च सव्वेसिं" इति, गृह-
स्थाश्च श्रेयोऽर्थित्वात् सदयत्वाच्च स्वार्थमेव जलं गालयन्ति, प्रासुकाम्बुपायित्वात् लोलत्वाद् वा पथ्यप्रियत्वात् अन्यतो वा
कुतोऽपि द्रव्यान्तरेण उपघ्नन्ति अपि, ततस्तद्गृहेषु निर्जीवमेव सत् तन्मधुकरवृत्त्या गृह्णतां यतीनां कथं तदारम्भकरणसंभवः,
तर्हि निष्परिग्रहत्वेन वस्तुवृत्त्या तत्त्यक्तमेव, केवलं भिक्षाचरत्वेन यदि ते कदाचित् तादृशमपि जलं लभ्यमानं प्रासुकत्वात् अत्र

सत्वाच्च गृह्णन्ति, इति एतावता तदपरित्यागिनः तर्हि वस्त्रपात्रकम्बलादिपरिधारित्वेन निष्परिग्रहा अपि न, तस्माद् यथा द्विचत्वारिंशद्दोषविशुद्धतया लभ्यमानं पिण्डं, वस्त्रादि वा, परिभुञ्जानानां यतीनां न कश्चिद् दोषः, तथा एलादिवासितोदकमपि, इति सिद्धं यतीनाम् इदं पेयम् ॥ एवं च विशेषेण इदं श्राद्धानां पातुम् उचितं, पूर्वोक्तप्रकारेण निर्दोषत्वात् अल्पारम्भत्वादिभिर्बहुगुणत्वाच्च इति, युक्ता एव कृता आचार्येण एकानेकद्रव्यचिन्ता एतद्विषया इति भावः ॥ ६३ ॥

आह-सामायिकारोपणादिवशात् यस्य उभयकालम् एककालं वा सामायिकग्रहणादौ नियमो भवति, तस्य यदि कुतोऽपि व्याप्तिविशेषात् काले प्रतिलेखितुं विस्मृता मुखपोत्तिका, ततस्तया सामायिकं ग्रहीतुं कल्पते नवा इत्यत आह—

अप्पडिलेहियमुहणंतगे य सामाइयं करिज्जा उ ॥ अविहिकए पच्छित्तं थोवं तेणं पडिक्कमइ ॥ ६४ ॥

व्याख्या—अप्रतिलेखितमुखानन्तकेन तृतीयार्थे सप्तमी प्राकृतत्वात्, अप्रत्युपेक्षितमुखवस्त्रकया, चकारो ऽनुक्तसमुच्चये, ततो न केवलम् अप्रतिलेखिते पादप्रोञ्छनककाष्ठासनादौ पोषधशालादिस्थानके वा सामायिकं क्रियते, मुखानन्तके ऽपि 'सामायिकम्' अनुष्ठानविशेषम्, उपलक्षणत्वात् पोषधादि अपि, 'कुर्यादेव, विदध्यादेव, तुरेवार्थः, नियमभङ्गस्य महादोषत्वात्, यदुक्तं 'वयभंगे गुरुदोसो थोवस्स य पालणा गुणकरीओ त्ति' एवं च क्रियमाणे दोषापेक्षया गुणस्य महत्त्वम् आह 'अविहित्ति' 'अविधिना' भणितरीत्यतिक्रमेण, कृते, विहिते 'प्रायश्चित्तं' पञ्चकादि 'स्तोकं' स्वल्प, दोषस्य लघुत्वात्, गुणस्य महत्त्वाच्च, एतदेव दर्शयितुम् आह 'तेणं ति' तेन सामायिकेन अनुस्वारः प्राकृतत्वात्, 'प्रतिक्रामति' पूर्वकृतदुष्कृतेभ्यो निवर्त्तते,

आलोचननिन्दनगर्हणपूर्वकं तेषां मिथ्यादुष्कृतं ददाति इत्यर्थः ॥ प्रतिक्रमणं तु पठनादि, समस्तसामायिकव्यापाराणाम् उप-
लक्षणं, तेषामपि च निर्जराहेतुत्वात्, यदुक्तं 'कम्ममसंखिज्जभवं खवेइ अणुसमयमेव माउत्तो । अन्नयरंमि वि जोगे सज्झायंमि
विसेसेण इत्यादि, तथाच तान् कुर्वतो महान् लाभः, किं पुनः वक्तव्यम् अविधिकरणस्य प्रायश्चित्तग्रहणे, एतदेव वसतिमार्ग-
प्रकाशकश्रीजिनेश्वरसूरिभि-रुक्तम् 'अविहिकया-वरमकयं असूयवयणं भणंति समयन्नू पायच्छित्तं तम्हा, अकए गरुयं कए ल-
हुयं, इति, केवलम् अतिप्रसङ्गो निवार्य इति भावः ॥ ६४ ॥

ननु—सामायिके गृह्यमाणे तत्सूत्रोच्चारणानन्तरं तेजस्कायादिस्पर्शे जाते किम् ऐर्यापथिकीप्रतिक्रमस्यैव अस्य भङ्गो भवति,
अथ चैत्यवन्दनस्य इव न? इति प्रश्नस्य उत्तरम् आह—

**सामाइकसुत्तम्मि उच्चरिए कहवि होइ जइ फुसणं ॥ तो तं आलोएज्जा भंगो से नत्थि सामाइए ॥ ६५ ॥**

व्याख्या—सामायिकसूत्रे, करेमि भंते सामाइयं, इत्यादिके, 'उच्चरिते' सामायिकग्रहणार्थं भणिते, 'कथमपि, केनापि
प्रकारेण, 'भवति' जायते, 'यदीति, संभावनायां 'स्पर्शनं, संघट्टः, अर्थात् तेजस्कायादेः, 'तो' तदा तत् स्पर्शनं, सान्तरं, नि-
रन्तरं वा, यादृशं जातं तादृशम् आलोचयेत्, तच्छुद्ध्यर्थं तत्क्षणमेव ऐर्यापथिकीं प्रतिक्रम्य पश्चाद् यथावसरं गुरूणां निवेद-
येत्, गुरुदत्तं च प्रायश्चित्तम् आचरेत् इत्यर्थः, 'भङ्गः' सर्वथा विराधनारूपः 'से' तस्य श्राद्धस्य नास्ति, सामायिके आकस्मि-
कत्वात् तस्य, अन्यथा सर्वविरतिसामायिकस्य विशेषतो भङ्गः स्यात्, यतीनामपि अकस्मात् स्पर्शनस्य भावात्, ततः पूर्वगृही-

तमेव प्रमाणं, ननु पुनरपि ग्रासम्, ऐर्यापथिकी तु पुनरपि प्रतिक्रम्यते, तत्कारणस्य जीवविराधनायाः पुनर्जातत्वात्, ननु यदि पूर्वप्रतिक्रान्ता असौ स्पर्शनाद् अप्रमाणीभूता ? तर्हि सामायिकमपि अप्रमाणीभूतं तत्पूर्वकत्वात् अस्य ? इति चेन्नैवं, हेतोरसिद्धत्वात्, नहि सामायिकम् ऐर्यापथिकीप्रतिक्रमणपूर्वकम् आगमे सामायिकग्रहणानन्तरमेव ऐर्यापथिकीप्रतिक्रमणस्य उक्तत्वात्, तथाहि आवश्यकचूर्णिवृत्त्योः ॥ करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेण जाव साहू पज्जुवासामीति काऊणं ईरियावहियाए पडिक्कमइ त्ति, ननु सामायिकसूत्रं गणधरप्रणीतत्वेन सिद्धान्तः, ततो ऽस्य अप्रतिक्रान्तायाम् ऐर्यापथिक्यां पाठो ऽपि न कल्पते, किं पुनरनुष्ठानम् तस्य तत्पाठाविनाभूतत्वात् ? इति चेद् न ऐर्यापथिक्या व्यभिचारात् सा हि गणधरप्रणीतत्वेन सिद्धान्तेऽपि अप्रतिक्रान्तायामपि ऐर्यापथिक्यां पठ्यते प्रतिक्रम्यते च, अथ एषा ऽपि प्रतिक्रान्तायामेव अस्यां प्रतिक्रम्यते ? तर्हि अनवस्था, अस्यां हि प्रतिक्रान्तायाममौ प्रतिक्रम्यते, सा ऽन्यस्यामेव प्रतिक्रान्तायां प्रतिक्रमितुं युज्यते, अन्यापि अन्यतरस्यामेव, अन्यतरा ऽपि अन्यतमायामेवेति ॥ किंच यदि प्रतिक्रान्तायामेव अस्यां प्रतिक्रम्यतेऽसौ, तर्हि सदा तत्प्रतिक्रमणप्रसङ्गः निरपेक्षत्वात्, यदुक्तं, नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्, अपेक्षातो हि भावानां कादाचित्कत्वसंभव इति, अथ विराधनायामेव जातायाम् असौ प्रतिक्रम्यते, विराधना च कदाचिदेव भवति, न सर्वदा इति कथं सदा तत्प्रतिक्रमणप्रसङ्गः ? इति चेद्, एवं तर्हि विराधनापूर्वकमेव ऐर्यापथिकीप्रतिक्रमणं, न स्वप्रतिक्रमणपूर्वकम्, आद्यतरप्रतिक्रमणेन व्यभिचारात्, विराधना च प्रतिक्रान्तायामपि तस्यां जायते, किं पुनरप्रतिक्रान्तायां, तत्कारणस्य प्रमादस्य

तदा विशेषेण भावात्, सा च जाता सती पूर्वप्रतिक्रान्तामपि ताम् अप्रमाणयति एव, छायातपयोरिव तयोर्मिथो विरोधात्, अन्यथा पुनः प्रतिक्रमणस्य वैयर्थ्यप्रसङ्गः, ततो ऽवश्यं पूर्वप्रतिक्रान्ताम् एनाम् अनपेक्ष्यैव असौ प्रतिक्रम्यते, अथ एतस्याम-प्रतिक्रान्तायामेव असौ पठ्यते आगमोक्तत्वात्, वृद्धव्यवहारे तथैवावगतत्वाच्च, ततस्तथैव प्रतिक्रम्यते, सामायिकं तु अप्रति-क्रान्तायां पठ्यते एव न तत्कथम् अनुष्ठीयते ? इति चेत्, उच्यते यदि प्रतिक्रान्तायामेव अस्याम् असौ पठ्यते तदा इतरेतरा-श्रयदोषः स्याद्, यथा प्रतिक्रान्ता सती पठ्यते, पठिता च सती प्रतिक्रम्यते, इति परस्परापेक्षया द्वयोरपि अभाव एव स्यात्, इति अप्रतिक्रान्तायाम् असौ पठ्यते प्रतिक्रम्यते च सामायिकं तु प्रतिक्रान्तायामेव पठ्यते सूत्रपठनविध्यतिक्रमे पुष्टालम्बनस्य अभावात्, अनुष्ठीयते तु अप्रतिक्रान्तायाम्, आगमोक्तत्वाद् वृद्धव्यवहारे तथैव प्रवृत्तत्वाच्च ॥ किंच यथा कालवेलायाम् अ-पाठ्यमपि षड्विधावश्यकम् अस्यामेव वेलायाम् अनुष्ठीयते आप्तोपदिष्टत्वात्, तथा ऐर्यापथिक्याम् अप्रतिक्रान्तायाम् अपा-ठ्यमपि सामायिकम् अनुष्ठीयते, आप्तोपदेशप्रतिपालनस्य बहुफलत्वादिति ॥ एतेन यत्केचिद् ब्रुवते प्रतिक्रान्तायाम् एव ऐर्यापथिक्यां पोषधवत् सामायिकं गृह्यते इति ॥ तदपास्तं वेदितव्यं, पोषधमेव हि एवंविधनियमविषयत्वेन उक्तम्, नतु सामायिकमिति भावः ॥ ६५ ॥

आह–यथा राद्धम् अराद्धं वा द्विदलान्नं गोरसेन मिलितं संसजति, तथा गोरसेनापि क्थितेन अक्थितेन च मिलितं तत्संसक्ष्यति ? समानत्वात् तथाच श्राद्धस्य द्विदलान्नं भुञ्जानस्य तेमनमत्तुं न कल्पते, तस्य प्रायो गोरसात्मकत्वात् गोरसस्य

तु द्विदलेन सह विरुद्धत्वात्? इत्यत आह—

उक्कालियम्मि तक्के विदलक्खेवे वि नत्थि तद्दोसो। अतत्तगोरसम्मि पडियं संसज्जए विदलं ॥ ६६ ॥

व्याख्या—उत्कालिते अग्नितापात् अत्युष्णीभूते, 'तक्रे' गोरसे, तक्रं गोरसभेदानां दध्यादीनाम् उपलक्षणं, द्वे दले यस्य तद् द्विदलं मुद्गादि, तस्य 'क्षेपे' ऽपि, न्यासे ऽपि, किं पुनः द्विदलकवलगिलनान्तरम् उत्कालिततक्राद्यात्मकभलेहादिपाने इत्यपेरर्थः, 'नास्ति' न भवति 'तद्दोषः, द्विदलदोषो जीवविराधना-लक्षणः, अत्र हेतुमाह, यत इत्यध्याहार्यं, यतः कारणात् 'अतप्तगोरसे' आमगोरसे, 'पतितं' संगतं 'द्विदलं' पालक्यालट्टशोकमुद्गादि संसर्पति, संसजति संमूर्छत्सूक्ष्मत्रसजीवयुक्तं भवति इत्यर्थः ॥ ६६ ॥ यदुक्तं कल्पभाष्ये "पालक लट्ट सागा मुग्गगयं आमगोरसुम्मीसं संसज्जए य अइरा तहवि हु नियमा दु दोसाय त्ति, आत्मसंयमविराधनारूपौ द्वौ दोषौ इत्यर्थः, तथा श्रीदुर्लभराजसभालब्धजयवाद-श्रीजिनेश्वरसूरिभि-रपि उक्तं 'जइ मुग्गमासपमुहं विदलं आमम्मि गोरसे पडइ, ता तसजीवुप्पत्तिं भणंति दहियम्मि तिदिणुवरिं इति, श्रीकुमारपालभूपालप्रतिबोधितश्रीहेमचन्द्रसूरिभि-रपि उक्तम्, आमगोरससंपृक्तद्विदलादिषु जन्तवः ॥ दृष्टाः केवलिभिः सूक्ष्मास्तस्मात्तानि विवर्जयेद् ॥ १ ॥ तथाच एतद्वचनप्रामाण्यात् पक्वेन गोरसेन मिलितं द्विदलान्नं न संसजतीति भावः ॥ ६६ ॥

ननु—विभिन्नरसानि अनेकवस्तूनि एकीकृत्य कटाहे पक्वानि सन्ति किं विकृतिः? आहो परस्परसोपहतत्वात् उत्कृष्टद्रव्यम्? इत्यत आह—

गोहुमघयगुलदुद्धाणि मेलिउं तो कडाहगे पयइ ॥ तं घणुहुज्जा पक्कन्नविगइ नियमा न दव्वं तं ॥ ६७ ॥

व्याख्या—गोधूमघृतगुडदुग्धादीनि प्रसिद्धानि, केवलं गोधूमाः सकला अत्र विवक्षिताश्चूर्णीकृता वेति सम्यग् न ज्ञा-
यते, अपरिचितत्वात्, तानि मेलयित्वा एकीकृत्य संयोज्य इति यावत्, 'ततो' ऽनन्तरं कटाहके लोहमयभाजनविशेषे, पचति,
तलयति, साधयति वा, तद्वस्तु, घणुहुज्जानामकं सपादलक्षादिदेशप्रसिद्धम्, उपलक्षणत्वात् अन्यदपि एवंविधं पकान्नं, वि-
कृतिः गुडधानावत् लपनश्रीवद्वा, नियमात् निश्चयेन, अग्नितापवार्द्धितरसै-र्गुडघृतदुग्धैः गोधूमान् आसाद्य विकृत्यनन्तरस्यैव
आरब्धत्वात्, न तद् द्रव्यं' न उत्कृष्टद्रव्यं पायसवद् इति भावः ॥ ६७ ॥

ननु—इतरस्य कस्यापि श्राद्धादेः परिग्रहपरिमाणटिप्पनकं दृष्ट्वा श्रद्धामुग्धतया तत्क्षणादेव स्वयमेव कश्चित् तल्लिखितनियमा-
ऽनङ्गीकृत्य स्वबुद्धिसंभावितनियमव्यवस्थया प्रवर्त्तमानो, यदा सुगुरूणां मिलति, तद्विचारं च शृणोति, तदा यदि भङ्गसंभाव-
नया मुत्कलतरांस्तान् कर्तुम् इच्छति, ततो ऽसौ तथा करोति, नवेति ? प्रश्ने प्रत्युत्तरम् आह—

जइ कोवि अभिग्गहिओ, टिप्पणयं अन्नसावयग्गहियं ॥ पालिंतो वि हु तं सुगुरुदंसणे कुणइ मुक्कलयं ॥ ६८ ॥

व्याख्या—यदि कोऽपि प्रान्तग्रामादिवासी, आभिग्रहिकः धर्मश्रद्धालुतया स्वसाक्षिकप्रतिपन्नद्वादशव्रतनियमः, टिप्पनक-
शब्देन आधाराधेययोरभेदोपचारात् मञ्चाः क्रोशन्ति, इतिवत् टिप्पनकस्थपरिग्रहपरिमाणम् उच्यते, तथाच 'टिप्पनकं' परि-
ग्रहपरिमाणम् अन्यश्रावकगृहीतं तदितरश्राद्धप्रतिपन्नं, 'पालयन्नपि' तदुक्तव्यवस्थावर्त्तितया निर्वाहयन्नपि हुशब्दो ऽत्र संभा-

चनायां तदर्थस्यापि अस्य सत्त्वात्, यदुक्तं, प्राकृतलक्षणे हु खु निश्चयवितर्कसंभावनविसये ॥ २ ॥ १९८ ॥ इति, ततः संकुचितनियमत्वात् इदं यावज्जीवं निर्वाहयितुं न शक्ष्यामि इत्येवं कुतोऽपि, संभावयन् तत्परिग्रहपरिमाणं 'सुगुरुदर्शने' सुगुरुमेलके करोति, मुत्कलमेव मुत्कलकं, गुरुसाक्षिकी एव हि व्रतप्रतिपत्तिः प्रामाणिकी न स्वसाक्षिकी, तस्याः कदाचित् कुतोऽपि विचारहीनाया अपि संभवात्, अत एव पाण्मासिककायोत्सर्गादौ स्वयं चिन्तितं प्रत्याख्यानं कुतोऽपि गुरुनियोगे सति अवगणय, कदाचित् ततो लघुतरं महत्तरं वा गुरुपार्श्वे प्रत्याख्यायते इति भावः ॥ ६८ ॥

अथानन्तरं यद्यपि 'तो बहुकज्जेत्यादिगाथा पठ्यते' तथापि 'जत्थासणे निसन्नो' इत्यादिगाथाया ऊर्ध्वम् असौ अर्थेन संगच्छते इत्येषा एव प्रथमं व्याख्यायते, व्यतिक्रमस्तु लेखकवैगुण्यादिना जातः संभाव्यते, तत्रैवं पातनिका, ननु यत्रासने शयने वा चिरकालम् आस्यते सुप्यते वा, तदेव भोगोपभोगव्रतेषु आसनशयनसंख्यायां गण्यते ? उत यत्र क्षणमात्रमपि आस्यते पश्चात् स्थीयते वा तदपि, गण्यते चेत् तदा बहुव्यवसायिनः तन्नियमो भज्यते, तादृशानां शयनासनानां तस्य कार्यवशाद् इतस्ततो भ्राम्यतः प्रभूतानामपि भावाद् ? इति प्रश्नस्य उत्तरमाह—

जत्थासणे निसन्नो, खणं पि तं लग्गए उ संखाए ॥ जत्थ कडिं पि हु दिज्जइ गणिज्जए सा वि सिज्जत्ति ॥ ६९ ॥

व्याख्या—यत्रासने चतुष्किकादौ 'निषण्णः' उपविष्टः 'क्षणमपि' अक्षिनिमेषमात्रमपि तत् लगति एव, पतति एव तुरेवार्थः, 'संख्यायाम्' आसनगणनायां यत्र फलकादौ कटीमपि पृष्ठप्रान्तमात्रमपि, हु विस्मये, दीयते, न्यस्यते, 'गण्यते' संख्यायते,

इतिशब्द आसनशयनलक्षण-
'सापि' शय्या, शयनीयं, किं पुनः खट्वातूलकादिः, तत्र स्वापरीत्या सुप्यमानत्वाद् इत्यपेरर्थः, समाप्तौ इत्यर्थः ॥ ६९ ॥

ततश्च किम् इत्यत आह—

तो बहुकज्जपसाहणकए वि परिभमइ सुबहुट्ठाणेसु ॥ सो सयणासणमाणं लंघइ जइ कुणइ किर थोवं ॥ ७० ॥

व्याख्या—तत एवंविधशयनासनस्थितौ सत्यां, बहुकार्यप्रसाधनकृते ऽपि प्रभूतप्रयोजननिष्पादननिमित्ते ऽपि किं पुनः कार्यं विनापि अनर्थदण्डेन इत्यपेरर्थः, 'परिभ्रमति' हिण्डते, य इत्यत्र दृश्यं, यः परिग्रहपरिमाणी, प्रत्याख्यानी वा, सामान्य-प्रत्याख्याने ऽपि हि शयनादिमानकरणस्य, सूत्रे भणितत्वात्, तथाहि आवश्यकचूर्णौ "सचित्तदव्वविगई पाणहतंबोलवत्थ-कुसुमेसु ॥ वाहणसयणविलेवणइंत्थी दीसिन्हाणभत्तेसुत्ति" सुबहुस्थानेषु प्रभूतगृहहट्टप्रासादादिषु 'सः' शयनानि मञ्चकफल-कसंस्तरादीनि आसनानि पट्टकमसूरिकामञ्चिकागद्दिकादीनि, तेषां मानं संख्या, शयनासनमानं, 'लंघते' अतिक्रामति, तावद् अवधानस्य दातुम् अशक्यत्वात्, यदि किं स्याद् इत्यत आह 'जईति' यदि करोति, परिग्रहपरिमाणग्रहणकाले एकासनादि-प्रत्याख्यानकरणकाले वा, किलेति सत्ये 'स्तोकं' स्वल्पं सङ्कटनियमप्रतिपालनस्य बृहदप्रमादसाध्यत्वात् तस्मात् प्रतिपत्तिकाले प्रभूततरं करोतीत्यर्थः ॥ ७० ॥

आह—नानाजातयस्तन्दुलाः पृथग्भाजनपकाः सन्तः, किम् एकं द्रव्यम् अनेकानि वा ? इत्यत आह—

नाणाजाइसंभुब्भयतंडुलसिद्धं पुढो भवे दव्वं ॥ निच्छयनयेण ववहारओ नये दव्वमेगं ति ॥ ७१ ॥

व्याख्या—नानाविधाः जातयः षष्टिककलमशाल्यादयो ऽवान्तरजातिविशेषाः, नानाच ता जातयश्च नानाजातयः, तासु समुद्भवन्ति इति नानाजातिसमुद्भवाः, ते च ते तन्दुलाश्च, नानाजातिसमुद्भवतन्दुलाः 'सिद्धमिति' प्राकृतत्वात् लिङ्गवचनव्यत्ययः, ततः सिद्धाः पृथग्भाजनेषु राद्धाः, अद्विरुक्तो ऽपि पृथक्शब्दो ऽत्र वीप्सायां ज्ञेयः, ततः पृथक् पृथक् भिन्नं भिन्नं 'भवेत्' स्यात्, 'द्रव्यं' निश्चयनयेन तेषां सर्वेषामपि विभिन्नरसवीर्यविपाकत्वात्, 'व्यवहारतो' व्यवहारम् आश्रित्य नये व्यवहारनये इत्यर्थः, द्रव्यम् एकमेव, तुरेवार्थः, सर्वेषामपि तेषाम् एकजातीयत्वात् ॥ ननु अयुक्ता इयं गाथा पुनरुक्तत्वात्? तन्दुला हि कणविशेषा एव, कणानां च विविधजात्याश्रितम् एकद्रव्यत्वम्, 'एवं जलकणेत्यादि गाथायां, प्रागेव साधितं, यच्च कणानां साधितं' तत् तद्विशेषाणां तन्दुलानाम् अर्थात् एव सिद्धम् ॥ नहि वृक्षो वनस्पतिरित्युक्ते आम्रो वनस्पतिरिति भिन्नं वक्तुम् उचितम्, तत्र वनस्पतित्वस्य वृक्षविशेषत्वेनैव अर्थापन्नत्वात्, अर्थापन्नं च भण्यमानं पुनरुक्तमेव, यदुक्तम् 'अर्थादुक्तस्य साक्षाद् वा वचनं पुनरुक्तम् इति ? इति चेत् सत्यं किन्तु भिन्नपृच्छानुरोधाद् एवमुक्तम्' अत एव भङ्गयन्तरेण उक्तं, यदि वा पूर्वत्र अराद्धानां धान्यानाम् एकद्रव्यत्वम् उक्तम्, अत्र तु राद्धानामिति न पौनरुक्त्यमिति भावः ॥ ७१ ॥

अथ अवन्द्यत्वेन सप्रपञ्चम् उपपादितान् अपि पार्श्वस्थादीन् उद्दिश्य कश्चिद् आचष्टे ननु अमी वन्दनीया एव भवन्ति, नवाङ्गवृत्तिकारकत्वेन महाश्रुतधरैर्भट्टारकश्रीमदभयदेवसूरिभिः पञ्चाशकवृत्तौ अमीभिः सह संवासस्य अमीषाम् आलोचना-

तथाहि एकादशपञ्चाशके 'ता गीयम्मि इमं खलु' इत्यादि गाथावृत्तौ
दानस्य च, सिद्धान्तसंवाददानपूर्वकं समर्थितत्वात्, तथाहि एकादशपञ्चाशके 'ता गीयम्मि इमं खलु' इत्यादि गाथावृत्तौ
अन्यथा ससहायतैव यतीनां युक्ता, यतोऽभिधीयते पञ्चकल्पे 'कालम्मि संकिलिट्ठे छक्कायदयावरो वि संविग्गो। जय जोगीण
नमलंभे पणगं नयरेण संवसइ' पार्श्वस्थावसन्नकुशीलसंसक्तयथाच्छन्दाऽभिधानानां, पञ्चानां साधूनाम् एकतरेण सह वसति इत्यर्थ
इति, पञ्चदशपञ्चाशकवृत्तौ तु तैरेव पूज्यैरपवादतः पार्श्वस्थादीनाम् आलोचनाचार्यत्वमपि 'आलोयणनिमित्तं गीयत्थस्सन्नेसणा उ
कायव्वा' इत्यादि गाथायां समर्थितम्, यथा इह च शेषविशेषणानुपादानेन यद् गीतार्थग्रहणं कृतं, तत् सकलोक्तगुणयुक्ताचार्या-
ऽलाभे संविग्नगीतार्थमात्रस्यापि आलोचनाचार्यत्वज्ञापनार्थम्, यतः श्रूयते अपवादतो गीतार्थसंविग्नपाक्षिकसिद्धपुत्रप्रवचनदेव-
तानाम् अलाभे सिद्धानामपि आलोचना देया, सशल्यमरणस्य संसारकारणत्वात् इति ॥ आह च 'संविग्गे गीयत्थे असइ पा-
सत्थमाइ सारूवि' इति, ननु यदि पञ्चाशकवृत्तौ पार्श्वस्थादीनां पार्श्वे संवासालोचनादाने विधेयतया उक्ते, ततः किम् आ-
यातं वन्दनकस्य ? इति चेद् उच्यते वन्दनकाऽविनाभूते संवासालोचनादाने इति, तदुक्तौ युक्तमेव तेषां वन्दनं धूमसत्तोक्ता-
विव धूमध्वजसत्ता इत्यत आह—

पंचासगेसु पंचसु वंदणगा नेव साहुसड्ढाणं ॥ लिंगिया गीयत्थेहिं अन्नेसु य समयगंथेसु ॥ ७२ ॥

व्याख्या—पञ्चाशकयोः यतिधर्मपञ्चाशकालोचनापञ्चाशकयोः, द्वित्वे बहुवचनं प्राकृतत्वात्, पञ्चसु पार्श्वस्थावसन्नकुशील-
संसक्तयथाच्छन्दाभिधानेषु यत्याभासेषु वन्दनकानि वन्दनानि, पुल्लिङ्गत्वं प्राकृतत्वात्, नैव साधुश्राद्धानां श्रमणश्रमणोपास-

कानां 'लिखितानि' उपन्यस्तानि उत्सर्गेण विधेयतया समर्थितानि इति यावत्, आवश्यकादिसिद्धान्तविरोधावहत्वात्, गीतार्थैः संविग्नश्रुतधरैः' 'अन्येषु' अपरेषु, चः समुच्चये, ततो न केवलं पञ्चाशकयोरन्येषु च समयग्रन्थेषु आगमग्रन्थेषु, अयमभिप्रायः, यद्यपि साक्षाद् अनुक्तमपि पार्श्वस्थादीनां वन्दनं, संवासाद्यन्यथाऽनुपपत्त्या एवात्र लभ्यते, तथापि आपवादिकमेव एतत्, तद्धेतूनां संवासादीनामेव तावत् आपवादिकत्वात्, अन्यथा 'लया लभिज्जा निउणं सहायं गुणाहियं, वा गुणओ समं वा, इक्को वि पावाइं विवज्जयंतो विहरिज्ज कामेसु असज्जमाणो, इति गाथावृत्तौ वरम् एकाकी एव विहरेत्, न पुनः पापमित्रैः पार्श्वस्थादिभिः सह मिलेद् इति, न निर्द्धारयेयुः, श्रीहरिभद्रसूरयः, तथा पासत्थसंकमो वि य वयलोवो तो वरम–संगो, इत्यनेन पार्श्वस्थादिसङ्गं व्रतलोपहेतुत्वेन न प्रतिपादयेयुः, श्रीधर्मदासगणिमिश्राः, निर्द्धारितं च प्रतिपादितं च एतच्चैः तस्माद् आपवादिकमेव, आपवादिकं च पार्श्वस्थादिवन्दनम् अस्माकम् अभिमतमेव, आवश्यके साक्षाद् उक्तत्वात्, केवलं यत्तेन सदा वन्द्यत्वं साध्यते तदस्माकं न सुखयति, मातुर्वन्ध्यात्वसाधनस्य इव तस्य स्ववचनबाधितत्वात् ॥ तथाहि कस्मिंश्चिदपि महति कारणे उपस्थिते, ये वन्द्यन्ते ते अपवादवन्द्याः, कारणं च तादृशं न सर्वदा उपतिष्ठते कादाचित्कत्वात्, तथाच कारणापेक्षत्वेन कादाचित्कमेव तेषां वन्द्यत्वं, सदा वन्द्याश्च उत्सर्गवन्द्याः सामान्योक्तविधित्वात्, ततो यदि अपवादवन्द्याः कथम् उत्सर्गवन्द्याः, उत्सर्गवन्द्याश्चेत् कथम् अपवादवन्द्याः, अपवादवन्दनस्य पुष्टालम्बनापेक्षत्वेन विशेषोक्तविधित्वात्, किंच उत्सर्गवन्द्यानाम् अपवादवन्दनत्वं विराधनाहेतुः ॥ यदुक्तं निशीथे 'उस्सग्गे अववायं आयरमाणो विराहओ भणिओ त्ति' यत्र संवास

योग्यत्वात् पार्श्वस्थादीनां वन्द्यत्वं साध्यते, तन्मिथ्यादृष्टियक्षायतनादिभि-रनैकान्तिकं, मुनयो हि तत्रापि वसन्ति, नच मि-
थ्यादृष्टियक्षादीन् वन्दन्ते, यत्पुनरुक्तं। सशल्यमरणं माभूत् इति पार्श्वस्थादीनामपि अग्रे आलोचनादातुम् अनुज्ञाता इत्येते
वन्द्या एव, आलोचनाचार्यत्वार्हत्त्वस्य अन्यथा अनुपपत्तेरिति, तदत्यन्तम् अनुपपन्नम्, एवं हि सम्यग्दृष्टिदेवतानामपि वन्द्य-
त्वप्रसङ्गः, तासामपि आलोचनाचार्यत्वार्हत्त्वस्य हेतोः सत्त्वात्, यतो गीतार्थसंविग्नपाक्षिकपार्श्वस्थसारूपिकपश्चात्कृतानाम् अभावे
तासामपि पार्श्वे आलोचनाग्रहणं सूत्रे उक्तमस्ति, तथाहि—व्यवहारप्रथमोद्देशकसूत्रे जत्थेव संमभावियाइं चेइयाइं पासिज्जा,
कप्पइ से तस्संतिए आलोइत्तए वा, पडिकमित्तए वा, निंदित्तए वा, गरहित्तए वा, विउट्टित्तए वा, विसोहित्तए वा, अकरणयाए
अब्भुट्ठित्तए वा, अहारिहं तवो कम्मं पायच्छित्तं पडिवज्जित्तए, इति 'सम्मभावियाइंति' सम्यक्त्वभाविता देवताः पश्येद्
इत्यर्थः, नच ता वन्द्याः, ततो वन्द्यत्वमन्तरेणापि उपपद्यमानम् आलोचनाचार्यत्वार्हत्त्वं, न साधनम्, अनैकान्तिकत्वात् ॥
किञ्च यदि पार्श्वस्थादय आलोचनाग्रहणकाले वन्द्यन्ते, इति शेषकाले ऽपि वन्दितुम् उचिताः स्युः, तदा सारूपिकाः पश्चात्कृता
देवता अपि सदा सुविहितानां वन्द्याः प्रसजेयुः, तेषामपि आलोचनाग्रहणकाले वन्द्यत्वात्, तथाच व्यवहारभाष्ये—
"लिंगकरणं निसिज्जा, कितिकम्ममणिच्छओ पणामो य, एमेव देवताए नवरं सामाइयं मुत्तुं"
व्याख्या—पश्चात्कृतस्य इत्वरकालसामायिकारोपणापुरस्सरं कालं, 'लिङ्गकरणं' रजोहरणसमर्पणं, तदनन्तरनिषद्याकरणं,
ततः 'कृतिकर्म' वन्दनकं दातव्यम्, अथ स वन्दनकं नेच्छति, ततस्तस्य कृतिकर्माऽनिच्छतः 'प्रणामो' वाचा कायेन च

प्रणाममात्रं कर्त्तव्यं, पार्श्वस्थादीनां सारूपिकस्य च कृतिकर्मानिच्छायां प्रणामः कर्त्तव्यः, एवमेव अनेनैव प्रकारेण देवताया अपि सम्यक्त्वभाविताया: पुरत आलोचयति, नवरं, सामायिकाऽऽरोपणं लिङ्गसमर्प्पणं च न कर्त्तव्यम्, अविरतत्वेन तस्यास्तद् योग्यताया अभावादिति ॥ किञ्च एकस्य कस्यचित् पार्श्वस्थादेरत्यन्तापवादेन अन्त्यालोचनाग्रहनादिकाले केनचिद् विधीयते, तच्चेद् अन्यैरपि सर्वैः सर्वदा सर्वेषा पार्श्वस्थादीनां विधेयम् अभविष्यत्, तदेकस्य कस्यचित् चाण्डालस्य विद्याग्रहणावसरे सिंहासनाध्यासनादिप्रतिपत्तिः श्रेणिकनृपेण कृता, इति सर्वेषां तेषां सर्वदा सा सर्वैरपि अकरिष्यत ? नच क्रियते, अथ हीनत्वात् तेषां न सर्वदा सर्वैः क्रियते ? एवं तर्हि पार्श्वस्थादीनामपि मा कारि, हीनत्वस्य तेषामपि आगमे उक्तत्वात् ॥ अथ चाण्डालानां प्रतिपत्त्ययोग्यत्वं सहोत्थत्वान्नित्यकृत्यं, प्रतिपत्तियोग्यत्वं तु कादाचित्कत्वात् नैमित्तिकं ? तच्चेद् नित्यकृत्यीक्रियते, तदा स्थितिलोपप्रसङ्गः, आप्तोपदिष्टं नित्यकृत्यव्याघातश्च, तथाच इह लोकेऽपि उपहासादयोऽनेके दोषाः स्युरिति कथं तेषां सदा प्रतिपत्तिः क्रियते ? इति चेद् एवं तर्हि पार्श्वस्थादीनामपि मा कारि, युक्तेः समानत्वात्, तथाहि ओसन्नो पासत्थो होइ कुसीलो तहेव संसत्तो। अहच्छन्दो वि य एए अवन्दनिज्जा जिणमयम्मि, इत्यादि-वचनाद् औत्सर्गिकं तेषाम् अवन्द्यत्वं, कदाचित्कत्वाद् आपवादिक तु वन्द्यत्वं, तच्चेत् पुष्टालम्बनमन्तरेणापि क्रियमाणतया औत्सर्गिकी क्रियते, तदा पूर्वोक्ता एव दोषाः, इत्यवन्द्या एव एते इति भावः ॥ ७२ ॥

आह-जं तु पुण अणिस्सकडं पूरिंति तहिं समोसरणं । पूरिंति समोसरणं अन्नासइ निस्सचेइएसुं पि, इत्यादिवचनात् चैत्ये

वसत्यादौ वा यदि कश्चित् श्रोता भवति, तदा सुविहिताः समवसरणं पूरयन्ति एव, ततः श्रावकवत् श्राविका अपि यदा तदापि
गत्वा धर्माक्षरं शृण्वन्ति, अथ साध्वीवत् न यदा तदापि इत्यत आह—

**देवालयम्मि सावयपोसहसालाइ सावगाणेगे ॥ जइ हुंति तेवि तिपणट्ठ साविया जंति निसुणंति ॥ ७२ ॥**

व्याख्या—देवालये जिनमन्दिरे, श्रावकाणां पोषधस्य शाला श्रावकपोषधशाला तस्यां, वा शब्दो ऽनुक्तो ऽपि अत्र द्रष्टव्यः, श्रावकग्रहणं यतिसत्कश्राविकासत्कपोषधशालाव्यवच्छेदार्थं, तत्र हि सुविहिता नावतिष्ठन्ते, आधाकर्मिकलोकापवादाद्यनेकदोषविलग्नभयात्, उपलक्षणत्वात् वसतौ वा, श्रावका अनेके यदि 'भवन्ति' विद्यन्ते, अनेकशब्दो द्वावपि वक्ति, ततस्तद् व्यवच्छेदार्थम् आह 'तेवीति' तेपि, यदि, जघन्यतस्त्रयः, मध्यमतः पञ्च, अष्टौ वा उत्कर्षतः, तदूर्ध्वं भवन्ति, त्रिभ्य ऊर्ध्वमेव यदि भवन्ति इत्यभिप्रायः, तदा श्राविका यान्ति, बहुवचनं तु एकाकिन्याः स्त्रियाः साधूपाश्रये गमननिषेधार्थं, निशृण्वन्ति च साधूपदेशं नान्यदा, श्रावकरहिते हि साधुस्थाने गन्तुमपि न कल्पते स्त्रीणां, किं पुनर्धर्मकथां श्रोतुं, केवला हि स्त्रीरूद्दिश्य धर्मकथारम्भस्य सदोषत्वेन मुनीनां निषिद्धत्वात्, तथाहि उत्तराध्ययनेषु "नो इत्थीणं कहं कहित्ता हवइ, से निग्गन्थे तं कहं ? इति चेत् आचार्यः निग्गन्थस्स खलु इत्थीणं कहं कहेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पजिज्जा, भेदं वा लभिज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ वा धम्माओ भंसिज्जा, तम्हा नो इत्थीणं कहं कहिज्जा, इति तथा निशीथे ऽपि उक्तम् अविमायरं पि सद्धिं कहाओ एगाणियस्स पडिसिद्धा, किं पुण

अणारगादी तरुणत्थीहिं सह गयस्स इत्यर्थः ॥ ७३ ॥

ननु—यत्र देशे सुविहिता न भवन्ति, तत्र श्रावको यत्किंचिज्जानाति, तदन्येषां लोकानाम् अग्रे कथयति नवेति पृच्छां सार्धगाथया ऽनूद्य शेषगाथार्द्धेन उत्तरम् आह—

जत्थ न हु सुविहिया हुंति, साहुणो सुविहिया वि ते इत्थ जे॥ गीयत्था सुत्तत्थदेसगा तेसिं विरहम्मि ॥७४॥
जं मुणइ सावओ, तं कहेइ सेसाणं किं न जं पुट्ठं ॥ पच्चुत्तरमेयं तत्थ कहइ जइ सोवि याणाइ तं ॥ ७५ ॥

व्याख्या—यत्र देशे नैव हुरवधारणे 'सुविहिताः' क्रियापराः, 'भवन्ति' सन्ति, साधवो यतयः, के नाम सुविहिताः, इत्यत आह—सुविहिता अपि, ते अत्र प्रस्तावे, ये गीतार्थाः, अवधारितप्रवचनरहस्याः, सूत्रार्थदेशका उपदेष्टारः, तेषामेव प्रदीपवत् स्वपरप्रकाशकत्वात्, यदुक्तम् "जह दीवा दीवसयं पईवइ सो वि दीप्पइ दीवो, दीवसमा आयरिया दिप्पं च परं च दीवंति त्ति" न पुनरनुपदेशका आहिण्डकयतयः, तेषां 'विरहे' अभावे, यं विचारं प्रकरणविशेषं वा जानाति, सम्यग् बुध्यते, श्रावकः तं कथयति, भणति, शेषाणां शुश्रूषुलोकानाम्, अग्रे इत्यत्र ज्ञेयम् ॥ 'किं नेति' पक्षान्तरद्योतको वा शब्दः, प्रश्नपूर्त्तिद्योतक इति शब्दश्च, अत्र अध्याहार्यौ, ततो नवेति यत्पृष्टं प्रत्युत्तरम् एतद् वक्ष्यमाणं तत्र प्रश्ने, कथयति, व्याख्याति, यदि स श्राद्धस्तं विचारं प्रकरणविशेषं वा, विजानाति, विशेषेण वेत्ति, गुरुभिरयम् अर्थ एवम् उक्त इति, यदि सम्यग् सरति इत्यर्थः, नान्यथा इति भावः ॥ ७५ ॥

अमुम् एव अर्थं मुग्धहिताय विशेषतः माह—

सुगुरूणं च विहारो जत्थ न देसम्मि जायए कहवि ॥ पयरणवियारकुसलो सुसावगो अत्थि ता कहइ ॥ ७६ ॥

व्याख्या—सुगुरूणां शुद्धप्ररूपकानां, पुनः, चः पुनरर्थः, विहार आगमनं, यत्र देशे न जायते, न भवति, 'कथमपि' मार्गदौस्थ्यादिकारणेन, 'प्रकरणविचारकुशलः' व्याचिख्यासितग्रन्थार्थप्रवीणः, सुश्रावकः षट्स्थानगुणयुक्तत्वेन उत्कृष्टश्रावकः, यदुक्तं कयवयकम्मयभावो सीलत्तं चेव तह य गुणवत्तं ॥ रिउमइ ववहरणं, चिय गुरुसुस्सूसाइ बोद्धव्वा ॥ १ ॥ पवयणकोसल्लं पुण छट्ठं ट्ठाणं तु होइ नायव्वं ॥ छट्ठाणगुणेहिं जुत्तो, उक्कोसो सावगो होइ त्ति ॥ २ ॥ यदि इत्यत्र अध्याहार्यं, यदि अस्ति भवति, तदा कथयतु, व्याख्यातु, गीतार्थत्वेन तस्य दोषाभावात्, अत एव श्रीजिनवल्लभसूरिप्रतिबोधितो गणदेवश्रावको वागड़देशे लोकप्रतिबोधनार्थं पूज्यप्रेषितलेखलिखितमहार्थकुलकानि सुगुरूपदिष्टरीत्या व्याख्यान्, एवं च न पोषधविधिना सह विरोध इत्यर्थः ॥ ७६ ॥

आह-यत्र देशे संयमप्रतिकूलत्वादिकारणात् सुगुरवो न विहरन्ति, तत्रत्यलोकः स्वसंकल्पितसंगमगुरुमूलविप्रकृतालोचनानिमित्तं, तपः करोति, नवा ? करोति एवेति चेत् ननु यदि करोति ? नहि कथं करोति इति प्रश्नम् अनूद्य उत्तरं दातुं तच्छ्रवणे प्रच्छकं सावधानं कुर्वन्नाह—

आलोयणानिमित्तं कहं तवं कुणइ साविगा सड्ढो ॥ इय पुट्ठे इणमुत्तरमित्तु भव्व भो निसामेह ॥ ७७ ॥

अणारगादी तरुणत्थीहिं सह गयसा इत्यर्थः ॥ ७३ ॥

ननु—यत्र देशे सुविहिता न भवन्ति, तत्र श्रावको यत्किञ्चिज्जानाति, तदन्येषां लोकानाम् अग्रे कथयति नवेति पृच्छां सार्धगाथया ऽनूद्य शेषगाथार्द्धेन उत्तरम् आह—

जत्थ न हु सुविहिया हुंति, साहुणो सुविहिया वि ते इत्थ जे ॥ गीयत्था सुत्तत्थदेसगा तेसिं विरहम्मि ॥७४॥
जं मुणइ सावओ, तं कहेइ सेसाणं किं न जं पुट्ठं ॥ पच्चुत्तरमेगं तत्थ कहइ जइ सोवि याणाइ तं ॥ ७५ ॥

व्याख्या—यत्र देशे नैव हुरवधारणे 'सुविहिताः' क्रियापराः, 'भवन्ति' सन्ति, साधवो यतयः, के नाम सुविहिताः, इत्यत आह—सुविहिता अपि, ते अत्र प्रस्तावे, ये गीतार्थाः, अवधारितप्रवचनरहस्याः, सूत्रार्थदेशका उपदेष्टारः, तेषामेव प्रदीपवत् स्वपरप्रकाशकत्वात्, यदुक्तम् "जह दीवा दीवसयं पईवइ सो वि दीप्पइ दीवो, दीवसमा आयरिया दिप्पं न परं च दीवंति त्ति" न पुनरनुपदेशका आहिण्डकयतयः, तेषां 'विरहे' अभावे, यं विचारं प्रकरणविशेषं वा जानाति, सम्यग् बुध्यते, श्रावकः तं कथयति, भणति, शेषाणां शुश्रूषुलोकानाम्, अग्रे इत्यत्र ज्ञेयम् ॥ 'किं नेति' पक्षान्तरद्योतको वा शब्दः, प्रश्नपूर्विद्योतक इति शब्दश्च, अत्र अध्याहार्यौ, ततो नवेति यत्पृष्टं प्रत्युत्तरम् एतद् वक्ष्यमाणं तत्र प्रश्ने, कथयति, व्याख्याति, यदि स श्राद्धस्तं विचारं प्रकरणविशेषं वा, विजानाति, विशेषेण वेत्ति, गुरुभिरयम् अर्थ एवम् उक्त इति, यदि सम्यग् स्मरति इत्यर्थः, नान्यथा इति गाथार्थः ॥ ७५ ॥

संदिसाविज्जा, ॥ आलोयणातवं तो दिज्जा अप्पणं खमासमणं ॥ ७९ ॥
तत्तो दुआलसावत्तवन्दणंते य
एवं भणइ तत्तो करेमि आलोयणातवं उचियं ॥ उस्सग्गेणं तत्तो कुणइ तवं अत्तसुद्धिकए ॥ ८० ॥

व्याख्या—पञ्चपरमेष्ठिन उद्दिश्य क्रियमाणो नमस्कारोऽपि पञ्चपरमेष्ठी भण्यते, यथा क्षमाश्रमणम् उद्दिश्य क्रियमाणं स्थोभावन्दनकमपि क्षमाश्रमणं, सपूर्वं यत्र, तत्पञ्चपरमेष्ठिपूर्वं नमस्कारोच्चारणपुरस्सरं, क्रियाविशेषणम् इदं केचिद् एकेनैव नमस्कारेण स्थापनाचार्यं स्थापयन्ति, केचित्तु त्रिभिरिति संख्यानियमो नोक्तः, ततः स्वस्वधर्माचार्यगच्छसामाचारी एवात्र प्रमाणं, स्थापनाचार्यम् अक्षादिकं स्थापयित्वा, स्थिरीकृत्य, विधिनैव पूर्वाचार्यपरंपरागतसामाचार्या एव, तुरेवार्थः, ततः, प्रतिलेखितप्रमार्जितभूमिकायां तदग्रे प्रथमम् ईर्यापथिकीं, प्रतिक्रामति इति गम्यं, तदन्तरेण उत्तरक्रियाणाम् अकार्यत्वात्, क्षमाश्रमणशब्देन स्थोभावन्दनकम् उच्यते, उपचारात्, तयोर्द्विकं क्षमाश्रमणद्विकं, द्वे क्षमाश्रमणे इत्यर्थः, 'दत्त्वा' 'मुखपोत्तिका, मुखवस्त्रिका तस्याः 'प्रत्युपेक्षणं' प्रतिलेखनं मुखपोत्तिकाप्रत्युपेक्षणं, तदेव मुखपोत्तिकाप्रत्युपेक्षणकं करोतीति क्रिया ऽध्याहार्या इत्यर्थः ॥ ७८ ॥

ततो ऽनन्तरं, द्वादशावर्त्तवन्दनांते. द्वादशावर्त्तवन्दनं दत्त्वा, तदन्ते इत्यर्थः ॥ चकारो ऽनुक्तं क्षमाश्रमणदानं समुच्चिनोति, तत्पूर्वकत्वात् उत्तरकृत्यस्य, ततः क्षमाश्रमणं दत्त्वा, संदेशयेत् मुत्कलापयेत्, 'आलोचना' शुद्धिः, तस्य तपः, आलोचनातपः, तपोहि शोधकम् उच्यते, तथाहि आवश्यके "नाणं पगासगं सोहओ तवो संजमो सुगुत्तिकरो । तिण्हं पि समाजोगे

व्याख्या—आलोचना, शुद्धिः, सा चात्र जिघृक्षिता ज्ञेया, नतु गृहीता, तस्या निमित्तं योग्यम्, आलोचनानिमित्तम् जिघृक्षिताऽऽलोचनानिमित्तम् इत्यर्थः 'कथ' केन विधिना, तप एकाशनादिकं, करोति अनुतिष्ठति, श्राविका श्राद्धय, वात्र द्रष्टव्यः, कालमहात्म्यात् सप्रति प्रायः श्राविका एव आलोचनाग्रहणे सोत्साहा इति ताः प्रथमम् उपन्यस्ताः। 'इति' एवं पृष्टे सति, 'इदं' वक्ष्यमाणम्, उत्तरं, प्रतिवचनम्, इह जिनमते, भण्यते, कथ्यते, भो इति पृच्छकामन्त्रणं, निशमय शृणु, अत्र भो निशमय इति पद, प्रच्छक श्रवणाभिमुखीकर्तुं न्यस्तम्, अनभिमुखस्य तत्त्वकथनायोग्यत्वात्, यदुक्तम् "अणुवट्टियस्स धम्मं मा हु कहिज्जा सुसुट्ठु वि पियस्स, विच्छायं होइ मुहं विज्झायग्गि धमंतस्स" इत्यर्थः ॥ ७७ ॥

तत्र अयं विधिः प्रधानस्थानके प्रमार्जितायां भुवि कालप्रतिलेखितं स्थापनाचार्यं, स्वस्वधर्माचार्यगच्छसामाचार्या पञ्चपरमेष्ठिनमस्कारभणनपूर्वकं स्थापयति, ततस्तदग्रे ईर्यापथिकीं प्रतिक्रामति, तदनन्तरं क्षमाश्रमणं दत्त्वा भणति 'इच्छाकारेण संदिसह भगवं सोधिमुहपत्तियं पडिलेहेमि, ततो द्वितीयं क्षमाश्रमणं दत्त्वा, मुखवस्त्रिकां प्रतिलिखति, ततो द्वादशावर्त्तवन्दनं ददाति, तदन्ते क्षमाश्रमणं दत्त्वा भणति 'इच्छाकारेण संदिसह भगवन् आलोअणतवु संदिसावउं, द्वितीयं क्षमाश्रमणं दत्त्वा भणति, इच्छाकारेण संदिसह भगवन् आलोयणतवु करउं, ततः करोतीति अमुमेव विधिं सावधानीभूतश्रोतृश्रोत्रयोर्निधेमुं सूत्रकारो गाथात्रयम् आह—

पंचपरमेट्ठिपुव्वं ठवणायरियं ठविउं विहिणाओ ॥ तत्थ खमासमणदुगं दाउं मुहपुत्तिपेहणयं ॥ ७८ ॥

कुरुतोऽनुतिष्ठतः, तप
वाशब्दार्थः, श्राविका वा भवेत् स्यात् 'ता' तदा अनिगूहितवीर्यौ अनपलपितशक्ती, श्राविकाश्राद्धौ
एव, एवकारो ऽत्र द्रष्टव्यः, न स्वाध्यायम्, अनौत्सर्गिकत्वात् ॥ ननु किम् इत्येवम् इत्यत आह 'आगमोत्ति' आगमे कल्प-
व्यवहारनिशीथादिसिद्धान्ते उक्तम् आगमोक्तम्, इदं तपः यत इत्यध्याहार्यं, तथाहि जीतकल्पचूर्णौ 'दसविहं पायच्छित्तं तं
जहा—आलोयणारिहं । १ । पडिक्कमणारिहं । २ । तदुभयारिहं । ३ । विवेगारिहं । ४ । काउस्सग्गारिहं । ५ । तवारिहं
। ६ । छेयारिहं । ७ । मूलारिहं । ८ । अणवट्ठारिहं । ९ । पारंचियारिहं । १० । इति, यदि पुनः स्वाध्यायोपि शुद्ध्यर्थं वि-
धेयो ऽभविष्यत् तदा तदर्हमपि प्रायश्चित्तम् अत्र अभणिष्यत्, नच भणितं तस्मान्न विधेयः ॥ अथात्र तपोऽर्हं प्रायश्चित्तम्
उक्तमस्ति, ततः स्वाध्यायार्हमपि उक्तमेव, स्वाध्यायस्य तपोभेदत्वात्? न, एवं हि शेषा अपि तद्भेदाः प्रायश्चित्तानि स्युः;
तेषामपि कर्मनिर्जरा कारित्वेन शुद्धिहेतुत्वात्, तथाच कायोत्सर्गार्हं प्रायश्चित्तं तपोऽर्हप्रायश्चित्तात् न भिन्नं वक्तुं युक्तं स्यात्,
तेनैव संगृहीतत्वात्, यदि वा कायोत्सर्गार्हवत् स्वाध्यायार्हमपि भिन्नम् उच्यते युक्तेः समानत्वात्, नच उक्तं तस्माद् नाग-
मोक्तं, स्वाध्यायार्हं प्रायश्चित्तम् ॥

ननु—एवं तर्हि किमिति आलोचनाचार्या आलोचनायां स्वाध्यायं ददति? उच्यते जीतव्यवहारात्, ननु जीतव्य-
वहारः सर्वो ऽपि श्रीजिनभद्रगणिक्षमाश्रमणविरचितजीतकल्पे ऽस्ति तन्मयत्वात् तस्य, परं तत्र समन्ततो ऽवलोकयद्भिरपि अ-
स्माभिरसौ न दृष्टः? किञ्च जीतव्यवहारो ऽपि प्रायः श्रुतधरव्यवहारानुयायी एव भवति, श्रुते च प्रायश्चित्तानि दशैव सन्ति;

मुक्खो जिणसासणे भणिओ त्ति" ततो दद्यात्, अन्यद् द्वितीयं क्षमाश्रमणम् इत्यर्थः ॥ ७९ ॥

एवं च वक्ष्यमाणप्रकारेण भण्यते कथ्यते ततो द्वितीयक्षमाश्रमणदानानन्तरं, करोमि आलोचनातप इति, उचितम्, अपराधस्य स्वशक्तेर्वा योग्यम् 'उत्सर्गेण' उत्कृष्टवृत्त्या, 'ततः' आलोचनातपः संदेशापनाऽनन्तर करोति समाचरति 'तपः' उपवासादि, आत्मशुद्धिकृते स्वजीवनिर्म्मलतानिमित्तं न पुनः प्रशंसादिनिमित्तं, तदर्थं तद्विधानस्य आगमे निषिद्धत्वात्, तथाहि दशवैकालिके "नो इह लोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए तवमहिट्ठिज्जा, नो कित्ति वण्णसद्दसिलोगट्ठयाए तवमहिट्ठिज्जा, नन्नत्थ निज्जरट्ठयाए तवमहिट्ठिज्जा" इत्यर्थः ॥ ८० ॥

इति उक्तो गुर्वभावे आलोचनातपः संदेशापनविधिः, अथ एतस्मिन्नुक्तरीत्या संदेशापिते सति तपःस्वाध्यायोभयसमर्थः, किं तप एव करोति ? उत तपोभेदत्वात् स्वाध्यायम् एव, अथ उभयमपि, द्वयोरपि अनयोः कर्मनिर्मूलनसमर्थत्वात् यदुक्तम् "पुव्विं दुच्चिण्णाणं दुप्पडिक्कंताणं कम्माणं वेइत्ता, मुक्खो नत्थि, अवेइत्ता तवसा वा झोसइत्ता, इति तथा कम्ममसंखेज्जभवं खवेइ अणुसमयमेव आउत्तो अन्नयरम्मि वि जोगे सज्झायम्मि विसेसेण त्ति" गुरुभिर्दीयमानत्वाच इति प्रश्नस्य उत्तरमाह—

सज्झायतवसमत्थो जइ सड्ढो साविगा वि अह हुज्जा ॥ ता अणिगूहियविरिया कुणंति तवमागमुत्तमिणं ॥८१॥

व्याख्या—स्वाध्यायः परिवर्त्तनारूप एवात्र ज्ञेयो न पुनर्वाचनादिकः, सापेक्षत्वात् परिमाणासंभवाच्च, 'तपः' उपवासादिरेव प्रसिद्धत्वात्, तयोर्विषये समर्थः, शक्तः, स्वाध्यायतपःसमर्थः, यदि श्राद्धः श्राविका अपि, अथ अथवार्थे निपातसमुदायो

श्राविकाश्राद्धौ कुर्वतोऽनुतिष्ठतः; 'तप
वाशब्दार्थः, श्राविका वा भवेत् स्यात् 'ता' तदा अनिगूहितवीर्यौ अनपलपितशक्ती, श्राविकाश्राद्धौ कुर्वतोऽनुतिष्ठतः; 'तप
एव, एवकारो ऽत्र द्रष्टव्यः, न स्वाध्यायम्, अनौत्सर्गिकत्वात् ॥ ननु किम् इत्येवम् इत्यत आह 'आगमोत्ति' आगमे कल्प-
व्यवहारनिशीथादिसिद्धान्ते उक्तम् आगमोक्तम्, इदं तपः यत इत्यध्याहार्य, तथाहि जीतकल्पचूर्णौ 'दसविहं पायच्छित्तं तं
जहा—आलोयणारिहं । १ । पडिक्कमणारिहं । २ । तदुभयारिहं । ३ । विवेगारिहं । ४ । काउस्सग्गारिहं । ५ । तवारिहं
। ६ । छेयारिहं । ७ । मूलारिहं । ८ । अणवट्ठारिहं । ९ । पारंचियारिहं । १० । इति, यदि पुनः स्वाध्यायोपि शुद्ध्यर्थं वि-
धेयो ऽभविष्यत् तदा तदर्हमपि प्रायश्चित्तम् अत्र अभणिष्यत्, नच भणितं तस्मान्न विधेयः ॥ अथात्र तपोऽर्हं प्रायश्चित्तम्
उक्तमस्ति, ततः स्वाध्यायार्हमपि उक्तमेव, स्वाध्यायस्य तपोभेदत्वात् ? न, एवं हि शेषा अपि तद्भेदाः प्रायश्चित्तानि स्युः,
तेषामपि कर्मनिर्जरा कारित्वेन शुद्धिहेतुत्वात्, तथाच कायोत्सर्गार्हं प्रायश्चित्तं तपोऽर्हप्रायश्चित्तात् न भिन्नं वक्तुं युक्तं स्यात्,
तेनैव संगृहीतत्वात्, यदि वा कायोत्सर्गार्हवत् स्वाध्यायार्हमपि भिन्नम् उच्यते युक्तेः समानत्वात्, नच उक्तं तस्माद् नाग-
मोक्तं, स्वाध्यायार्हं प्रायश्चित्तम् ॥

ननु—एवं तर्हि किमिति आलोचनाचार्या आलोचनायां स्वाध्यायं ददति ? उच्यते जीतव्यवहारात्, ननु जीतव्य-
वहारः सर्वो ऽपि श्रीजिनभद्रगणिक्षमाश्रमणविरचितजीतकल्पे ऽस्ति तन्मयत्वात् तस्य, परं तत्र समन्ततो ऽवलोकयद्भिरपि अ-
साभिरसौ न दृष्टः ? किञ्च जीतव्यवहारो ऽपि प्रायः श्रुतधरव्यवहारानुयायी एव भवति, श्रुते च प्रायश्चित्तानि दशैव सन्ति,

तत्कथं जीतव्यवहारे एकादश भविष्यन्ति ? सत्यं किन्तु केनापि परमार्थेन महाश्रुतधरेण सांप्रतिकलोकान् जीवकल्पनीत्याऽऽगतस्यापि तपसः प्रभूतेनापि कालेन सर्वतः कर्त्तुम् अशक्तान् वीक्ष्य, मा एते अशक्तत्वात् इदम् अन्तरे एव मुञ्चेयुः, इति तदनुकम्पया तस्य तपसः पूरणार्थं स्वाध्यायो ऽपि अनुज्ञातः, तत्कालवर्त्तिभिरन्यैरपि बहुश्रुतधरैः बहुमानितः, प्रवर्त्तितश्च, अत एवासौ तैः स्वस्वप्रणीतप्रायश्चित्तविधौ लिखितः, अतएव च सर्वेष्वपि धर्मगच्छेषु असौ वर्त्तते, इति जीतव्यवहार एव अयम् जातः, अस्य च एवं विधस्यापि उक्तत्वात्, तथाहि जीतकल्पचूर्णौ "जो वा जम्मि गच्छे केणइ कारणेण सुत्तातिरित्तो पायच्छित्तविसेसो पवत्तिओ, अन्नेहिं बहूहिं अणुवत्तिओ, न य पडिसिद्धो, सो वि जीयव्ववहारो त्ति, जीतकल्पे ऽपि उक्तम्, वत्तणुवत्तपवत्तो बहुसो आसेविओ महाजणेणं। एसो उ जीयकप्पो पंचमओ होइ ववहारो त्ति" ततो युक्त एव तपोऽशक्तौ स्वाध्यायोपि शुद्ध्यर्थम् अनुष्ठातुं, केवलं तपः शक्तौ सत्यां तप एव कर्त्तव्यं न स्वाध्यायः, तस्य गीतार्थाचीर्णत्वेन आपवादिकत्वात् इति भावः ॥ ८१ ॥

ननु—अस्मिन् क्रियमाणे किं किं कर्त्तव्यम् ? इति प्रश्नस्य उत्तरम् गाथाष्टकेन आह तत्रेयं प्रथमा गाथा—

आलोअणानिमित्तं पारद्धं तवम्मि फासुगाहारो, ॥ सच्चित्तचयणं बंभचेरकरणं च अचिमूत्ता ॥ ८२ ॥

व्याख्या—'आलोचनानिमित्तं' शुद्धिकृते, पारद्धे प्रक्रान्ते, विभक्तिलोपः प्राकृतत्वात्, आलोचनातपो ऽपि उत्सर्गतो नैरन्तर्येण कार्यमिति ज्ञापनार्थम् प्रारब्धग्रहणं, तपसि, वक्ष्यमाणे, प्रासुकाहारः, उपलक्षणत्वात् एषणीयश्च, यदुक्तम् 'मोयणे

उ सङ्ढेणं भुत्तव्वं फासुएसणियदव्वं, तदभावे णेसणियं नवरं सचित्त परिवज्जंति, तत्र गृहस्थस्य असौ प्रासुक एषणीय आहारो, यः सति संभवे कुटुम्बार्थं निष्पन्नो भवति, स्वार्थं तत्पाचनस्य हिंसात्मकत्वेन अयुक्तत्वात्, सचित्तवर्जनं, न किमपि सचित्तं भक्षयतीत्यर्थः, ब्रह्मचर्यकरणं, ब्रह्मचर्यं करोति, शीलं पालयति महाधर्मत्वात्, मैथुनप्रसक्तयोर्हि स्त्रीपुंसयोरुत्कृष्टतो ऽष्टादशलक्षजीवा विनश्यन्ति, यदुक्तं "मेहुणसन्नारूढो नवलक्ख हणेइ सुहुमजीवाणं । केवलिणा पन्नत्ता सद्दहियव्वा सया कालं, तथाहि इत्थीजोणीए संभवन्ति वेइंदिया उ जे जीवा । इक्को वा दो व तिण्णि च लक्खपुहुत्तं च उक्कोसं ॥ पुरिसेणं सह गयाए नेसिं जीवाण होइ उद्दवणं । वेणुगदिट्ठंतेणं तत्तायसलागनाएणं" संसक्तायां योनौ द्वीन्द्रिया एते, शुक्रशोणितसंभवास्तु गर्भजपञ्चेन्द्रिया इमे, "पञ्चेन्दिया मणुस्सा एगनरभुत्तनारिगब्भम्मि । उक्कोसं नव लक्खा जायंति एगहेलाए ॥ १ ॥ नवलक्खाणं मज्झे जायइ, इक्कस्स दुण्हं व संमत्ती ॥ सेसा पुण एमेव य विलयं वचन्ति तत्थेव ॥ २ ॥ इति घोरपापहेतुत्वान्मैथुनं वर्ज्यमेव, अत्र चः समुच्चये, 'अविभूषा' स्नानाङ्गरागकुसुमनखकर्त्तनकेशसमारचनादिकां विभूषां वर्जयन्ति, प्राणिवधात्मकत्वेन औद्धत्यात्मकत्वेन च तस्याश्चिक्कणकर्मबन्धहेतुत्वात् इति भावः ॥ ८२ ॥

अथ द्वितीयगाथाम् आह—

इंगालाई पनरसकम्मादाणाण होइ परिहारो ॥ विकहोवहासकलहं पमाय भोगतिरेगं च ॥ ८३ ॥

व्याख्या—अङ्गारोऽङ्गारकर्म्म-आदिर्येषां तानि तथा पञ्चदशेति संख्यावचनः, कर्मणां पापप्रकृतीनाम्, आदानानि ग्रहण-

कारणानि, कर्मादानानि, ततः कर्मधारयसमासः दीर्घत्वं प्राकृतत्वात्, अङ्गारादि पञ्चदशकर्म्मादानानां भवति, परिहारोऽकरणम्, अयमाशयः यद्यपि अङ्गारकर्म-वणकर्म-शकटकर्म-भाटककर्म-स्फोटककर्म-दन्तवाणिज्य-लाक्षावाणिज्य-रसवाणिज्य-केशवाणिज्य-विषवाणिज्यं यन्त्रपीडना-निर्लाञ्छनं दावदानं-सरोहृदादिशोषं-असतीपोषणां मध्ये कुलक्रमागतवृत्तिवशात् अनन्यगत्या वा जीविकादिनिमित्तं, कोऽपि किमपि कर्म्मादानं समाचरति, तथापि आलोचनातपः कुर्वन्नवश्यमेव परित्यजति, महादोषत्वात्, एतेषां च व्याख्यानं सुप्रसिद्धमेव, इत्यत्र ग्रन्थगौरवभयान्न कृतं, याः कथाः पापहेतुत्वेन धर्मार्थिनां विरुद्धा अनिष्टा वा ता विकथा भण्यन्ते, ताश्च सप्त, भवन्ति, तद्यथा स्त्रीकथा भक्तकथा देशकथा राजकथा मृदुकारुणिकी दर्शनभेदिनी चारित्रभेदिनी इति, यदुक्तं स्थानाङ्गे सत्त विकहाउ पन्नत्ताओ, त जहा इत्थिकहा भत्तकहा देसकहा रायकहा मिउकोलुणिया दंसणभेयणी चरित्तभेयणी त्ति ॥ तत्र स्त्रीणां कथा स्त्रीकथा, सा च चतुर्विधा, जातिकथा कुलकथा रूपकथा नेपथ्यकथा, तत्र जातिकथा ब्राह्मणीप्रभृतीनाम् मध्ये अन्यतमां जातिं प्रशंसति, निन्दति वा, एवं कुलकथाद्या अपि ज्ञेयाः ॥ भक्तमोदनादि, तस्य कथा भक्तकथा, सापि चतुर्धा, द्रव्यकथादिका, तत्र घृतादिद्रव्यकथा व्यञ्जनभेदकथा छागतित्तिराद्यारम्भकथा, रूपकशतादिमूल्यपाकरसवती कथा, देशो जनपदस्तस्य कथा, देशकथा इयमपि छन्दादिभेदादिना चतुर्विधा एव, छन्दो विधिर्विकल्पो नेपथ्यं चेति, तत्र छन्दः कचिद् देशे किंचिन्मातुलदुहित्रादिगम्यम् अगम्यं वा, विधिः भोजनविवाहादिविधानक्रमभेदो देशभेदात्, विकल्पः कूपवप्रसारणादिना सस्यनिष्पत्तिः, गृहदेवकुलादिविकल्पो वा, नेपथ्यं, स्त्रीणां

पुरुषाणां वा स्वाभाविक्यादिका नेपथ्यरचना, कापि कश्चिद्देशे इति, राज्ञां कथा राजकथा, इयमपि निर्गमादिभेदात् चतुर्धा निर्गमोऽतिगमनं वलं कोशकोष्टागारादि चेति, तत्र निर्गम एवं भूत्या राजा पुरान्निर्गत इत्यादि, अतिगमनम् एवं प्रविष्ट इत्यादि, वलम् एतावन्तो ऽश्वहस्त्यादयो राज्ञः कोश एतावंत्य:, के ऽद्यः कोष्टागाराश्च एतावन्त इत्यादि ॥ ४ ॥ मृदुकारुणिकी श्रोतृहृदयमार्दवजननात् मृद्वी, सा चासौ कारुणिकी या कारुण्यवती, मृदुकारुणिकी, पुत्रादिवियोगदुःखदुःखितमात्रादिकृतकारुण्यरसगर्भप्रलापप्रधाना इत्यर्थः, तद्यथा हा पुत्र हा पुत्र हा वत्स हा वत्स मुक्कामि कहमणाहा हं एवं कलुणविलावाजलंतजलणेज्जसा पडिया इति, ॥ ५ ॥ दर्शनभेदिनी ज्ञानाद्यतिशयतः कुतीर्थिकप्रशंसादिरूपा तद्यथा—

सूक्ष्मयुक्तिशतोपेतं सूक्ष्मवुद्धिकरं परं । सूक्ष्मार्थदर्शिभिर्दृष्टं, श्रोतव्यं, बौद्धदर्शनम् ॥ १ ॥

इत्यादि, एवं हि श्रोतॄणां तदनुरागात् सम्यग्दर्शनभेदः स्याद्, इति । ६ । चारित्रभेदिनी न संभवन्ति इदानीं महाव्रतानि साधूनां प्रमादवहुलत्वात्, अतिचारशोधकाचार्य–तत्कारकशुद्धीनाम् अभावाच इति, ज्ञानदर्शनाभ्यां तीर्थं वर्त्तते, इति ज्ञानदर्शनकर्त्तव्येषु एव यत्नो विधेय इति, भणितं च 'सोही य नत्थि न विदिंति करिंता नवि य केइ दीसंति । तित्थं च नाणदंसणनिज्जवगा चेव वुच्छिन्ना' इत्यादि, अनया हि प्रतिपन्नचारित्रस्यापि तद् वैमुख्यम् उपजायते, किं पुनस्तदभिमुखस्य इति चारित्रभेदिनी ॥७॥ तथा 'उपहासो' मर्मभेदिवचनैः मूर्खदुर्वलादीनाम् अभिभवनं, कलहो, राटिः, एतेषां समाहारद्वन्द्वः, प्रमाद्शब्देन प्रमादाचरितम् इह ज्ञेयम्, नतु मद्यादि, तद्वर्जनस्य पदान्तरैरेव कृतत्वात्, प्रमादाचरितं च गीतनृत्यनाटकजीव-

योधनद्यूतजलक्रीडान्दोलनादिकं भोगाऽतिरेको भोगोपभोगयोग्यद्रव्याधिक्यकरणं, तयोः समाहारः, पञ्चम्दात् पापोपदेशहिंस्रप्रदाने गृह्येते, ततश्च वृषभान् दमय, तुरङ्गमान् षण्ढय, क्षेत्रं कृष, इत्यादिकं पापोपदेशं, शस्त्राग्निमुसलोदूखलहलयन्त्रादिहिंस्रवस्तुप्रदानं च वर्जयति, क्रियाया अत्र अध्याहारः विकथादीनाम् अनर्थदण्डत्वात्, आलोचनाकारी तु अर्थाय अपि दण्डं न करोति, महापापत्वात् किं पुनरनर्थाय इति भावः ॥ ८३ ॥

अथ तृतीयगाथाम् आह—

कुज्जा नाहिगनिद्दं परपरिवायं च पावट्ठाणाणं ॥ परिहरणं अप्पमाओ कायव्वो सुद्धसम्मत्ते ॥ ८४ ॥

व्याख्या—कुर्यात् विदध्यात्, नाधिकनिद्राम् अधिकस्वापं, प्रमादत्वात्, अयम् आशयो दिवा तावत् सर्वथापि न शयीत, रात्रावपि प्रथमान्त्यप्रहरयोः स्वाध्यायादिधर्मकृत्यकरणार्थं जागृयात् एव, प्रभूतजागरणं हि धार्मिकाणाम् एकान्तहितमेव, अत एव भगवता महावीरेण इदं शतानीकनृपभगिन्या जयन्त्या अग्रे प्रशंसितं, तथाहि निशीथे "जागरिया धम्मीणं आहम्मीणं उ सुत्तया सेया वत्थाहिव भइणीए अकहिंसु जिणो जयंतीए त्ति" परेषां परिवादो ऽपवादः परपरिवादः, परदोषोद्घाटनं तं च, चः समुच्चये, ततो न केवलम् अधिकनिद्रां न कुर्यात्, परपरिवादं च वैरानुबन्धहेतुत्वात्, यदुक्तं 'सन्तेहिं असंतेहिं य परस्स किं जंपिएहिं दोसेहिं, अत्थो जसो न लब्भइ, सो य अमित्तो कओ होइ, अतिनिबिडनीचैर्गोत्रकर्मबन्धहेतुत्वात् च, यदुक्तम् उमास्वातिवाचकेन, परपरिभवपरिवादादात्मोत्कर्षाच्च बध्यते कर्मनीचैर्गोत्रं प्रतिभवम् अनेकभवकोटि-

दुर्मोचम्, पापस्थानानां प्राणिवधादीनां परिहरणम् अकरणम्, अयम् आशयः, आलोचनाकारी तत्र करोत्येव यत्र जीवविनाशो भवति, यथा श्लेष्मणि प्रस्रवणादौ वा अविधिना व्युत्सृष्टे, तत्रहि पञ्चेन्द्रियमनुष्याः संमूर्च्छयन्ते, यदुक्तं 'प्रज्ञापनायाम् "गब्भवक्कंति य मणुस्साणं चेव उच्चारेसु वा, पासवणेसु वा, खेलेसु वा, सिंहाणेसु वा, वन्तेसु वा, पित्तेसु वा, सोणितेसु वा, सुक्कपुग्गलपरिसाडेसु वा, विगयकलेवरेसु वा, थीपुरिससंजोगेसु वा, नगरनिद्धमणेसु वा, सव्वेसुं चेव, असुइट्ठाणेसु, इत्थ णं संमुच्छिममणुस्सा संमुच्छंति त्ति" ततस्तेषाम् अन्येषां च जीवानां रक्षार्थं विधिनैव तत् व्युत्सृजन्ति, विधिश्च अयं श्लेष्माणं भस्मादिना गृह्णाति, प्रस्रवणं च तत्र व्युत्सृजति, यत्र व्युत्सृज्यमानमेव तच्छुष्यति, नतु छिद्रं बध्नाति, एवम् अन्यत्रापि यतते। १। असत्यं न ब्रूते, सत्यमपि तन्न ब्रूते येन परो दूयते। २। परद्रव्यं नापहरति । ३। मैथुनं मनसाऽपि न आकांक्षति। ४। स्वद्रव्यादौ अपि मूर्च्छां त्यजति। ५। न कस्मैचित् कुप्यति। ६। नात्मानं बहुमन्यते । ७। न कमपि वञ्चयते। ८। यावन्मात्रं निरवद्यव्यवहारादिना संपद्यते तावतैव संतुष्यति। ९। नच कुत्रापि रज्यते । १०। नापि कमपि द्वेष्टि। ११। नच केनापि सह वाचापि युध्यति। १२। न च कस्यापि चौरजारादिकं कलङ्कम् आरोपयति। १३। कस्यापि पैशुन्यं न करोति। १४। दुःखकारणेषु सत्सु अरतिं, सुखकारणेषु सत्सु रतिं च न करोति। १५। परं न खिंसति। १६। मायामृषां च त्यजति। १७। मिथ्यात्वं न सेवते। १८। इति, पापस्थानानि हि अल्पादरेण क्रियमाणान्यपि आलोचनातपस्तर्णकचर्वमाणान्धवल्यमाणरज्जुवद् आयासफलमेव कुर्वन्ति, इति तत्परिहरणोपदेशः, अप्रमादश्च चोऽत्र समुच्चयार्थो द्रष्टव्यः,

अशैथिल्यम् उद्यम इत्यर्थः, कर्त्तव्यः, कार्यः, 'शुद्धधर्मार्थे' अविधिकरणादिमालिन्यरहितधर्मप्रयोजने, तस्य स्वेन्द्रियाणां शुभव्यापारव्यासङ्गहेतुत्वेन अन्यलोकानां श्रद्धोत्पादकत्वेन च महापुण्योपार्जनाकारणत्वाद् इति भावः ॥ ८४ ॥

अथ येषु धर्मकार्येषु अप्रमादः कार्यस्तानि प्रतिपादयितुं चतुर्थगाथाम् आह—

तिक्कालं चिइवंदणमित्थ जहन्नेण मज्झिमेण पुणो ॥ वारा उ पंच सत्त य उक्कोसेणं फुडं कुज्जा ॥ ८५ ॥

व्याख्या—'त्रिकालं' त्रिसन्ध्यं, चैत्यवन्दनं देववन्दनम्, अत्र आलोचनातपसि कर्तुम् आरब्ध, जघन्येन हीनमङ्गकेन, मध्यमेन पुनर्वारान् पञ्च, सप्त च वारान् उत्कर्षेण उत्सर्गेण अनुस्वारः प्राकृतत्वात्, स्फुटं निश्चितं, कुर्यात् सम्यक्त्वशुद्धिनिबन्धनत्वात् एतस्य, यदुक्तं "मिच्छा दंसणमहणं सम्मदंसण विसुद्धिहेउं च चिइवन्दणाइ विहिणा पन्नत्तं वीयरागेहिं" इति भावः ॥ ८५ ॥

ननु—एवं चैत्यवन्दनम् अहोरात्रमध्ये कस्य कियतो वारान् संभवति इत्यत आह—

पडिक्कमणे चेइयहरे भोयणसमयम्मि तह य संवरणे ॥ पडिक्कमणसुयणपडिबोहकालियं सत्तहा जइणो, ॥८६॥

व्याख्या—प्रतिक्रमणे प्राभातिकप्रतिक्रमणप्रान्ते । १ । चैत्यगृहे देवगृहे । २ । भोजनसमये भोजनारम्भे । ३ । 'तथा' चेति समुच्चये, 'संवरणे' संवरणनिमित्तं, भोजनानन्तरकरिष्यमाणप्रत्याख्यानस्य आदावित्यर्थः । ४ । प्रतिक्रमणे प्रादोषिकप्रतिक्रमणारम्भे । ५ । स्वापे, शयनवेलायां । ६ । प्रतिबोधिकालिकं, जागरणानन्तरभावि ।७। प्रतिक्रमणस्वप्नप्रतिबोधानां द्वन्द्वानां,

काल:, समय:, प्रतिक्रमणस्वप्नप्रतिबोधकाल:, स विषयतया विद्यते यस्य तत् प्रतिक्रमणस्वप्नप्रतिबोधकालिकं, प्रतिक्रमणकालिकं स्वप्नकालिकं प्रतिबोधकालिकम् इत्यर्थः, चैत्यवन्दनम् इति पदम् अत्रानुवर्त्तनीयं, 'सप्तधा' यतेर्जातिनिर्देशाद् एकवचनं, यतीनामित्यर्थः, अत्र कश्चिदाह–ननु सप्तधा चैत्यवन्दनं, मुनीनां प्रतिदिनं न घटते, तदर्थं चैत्यगमनस्यापि तेषां पाक्षिकादिपर्वसु एव भावात्, न शेषकाले? आगमे तस्य तथैव उक्तत्वात्, तथाहि व्यवहारे 'भन्नइ कुलगणकज्जे चेइयगमणे य पव्वेसु' इति भाष्यस्य चूर्णौ पव्वेसु पक्खियाईसु, चेइयेसु, चेइयवन्दणट्ठयाए निग्गंतव्वं, इति चेन्न, एते हि व्यवहारभाष्यचूर्णौ पर्वसु सामस्त्येन सर्वचैत्यवन्दनविधायिके, पर्वसु हि अवश्यं भावेन सर्वाणि अपि चैत्यानि गत्वा वन्द्यन्ते यदुक्तम् आवश्यकचूर्णौ 'अट्ठमी चउद्दसीसुं पव्वे अरहंता साहुणो य वंदियव्वा त्ति' न पुनरपर्वणि, सर्वथा चैत्यवन्दननिषेधिके, यदि पुनरपर्वणि एकस्यापि चैत्यस्य चैत्यवन्दननिषेधिकेऽभविष्यतां, तदा चतुर्थादितपःसाधुवन्दनादीनि अपि अपर्वणि अकार्याणि स्युः तेषामपि पर्वोद्दिश्याऽऽवश्यकचूर्ण्यादिषु उक्तत्वात्, नच न क्रियन्ते, तस्माद् यथा अपर्वस्वपि साधवो वन्द्यन्ते, चतुर्थादितपश्च क्रियते, तथा चैत्यमपि वन्द्यते एव ॥ किंच यदि अपर्वणि चैत्यवन्दनं साधूनाम् अविधेयं स्यात्, तदा व्यवहारचूर्ण्या एव सह विरोधः, तत्रहि उभयोरपि सन्ध्ययोः प्रतिदिनं निकटस्थचैत्यवन्दनं, व्यतिरेकमुखेन व्यवस्थापितम् अस्ति, तथाहि 'जइ चेइयहरेठिया वियालियं कालं पडिकंता, अकए आवस्सए, गोसे य कए, आवस्सए, जइ चेइए न वंदइ मासलहु त्ति' तथा कल्पचूर्ण्याऽपि सह विरोधः, तत्र हि विहारक्रमवशेन नगरादौ यदा तदापि प्राप्ताः, सुविहिताचार्या गृहप्रतिमा अपि वन्दन्ते,

किं पुनर्देवगृहप्रतिमा इत्युक्तम् अस्ति, तथा हि, देवकुल चेइयाणि वंदित्ता घरचेइयाणि वंदियव्वाणि, तत्थ कइहिं वि जणेहिं माद्धिं आयरिओ वंदउं जाइ, इयरे पुण भिक्खं हिंडता चेव वंदंति त्ति, तथा आवश्यकचूर्ण्या अपि सह विरोधः, तत्र हि प्राभातिकप्रतिक्रमणविधौ स्तुतित्रयदानकालप्रवेदनानन्तरम् अपर्वणि अपि चैत्यवन्दनस्य उक्तत्वात् तद्यथा 'जइ चेइयाणि अत्थि तो वंदंति त्ति' तस्मात् सति संभवे नित्यकृत्यमेव इदम्, अत एव जीतकल्पे सामान्येनैव चैत्यगमनम् उक्तम्, यथा 'चेइय जइ वंदणाईसु त्ति' अस्य च सूत्रस्य चूर्णि-यथा-चेइयवंदणनिमित्तं आसन्नं दूरं वा गच्छिज्ज त्ति, यदि पुनर्नैमित्तिकं चैत्यवन्दनं स्यात्, तदा अत्रापि 'पव्वेसु त्ति' पदं न्यसेदेव, ननु इदं नैमित्तिकमेव पर्वस्वेव हि तदकरणे प्रायश्चित्तम् उक्तम्, तथाहि व्यवहारे 'चउत्थछट्ठट्ठमकरणे अट्ठमि पक्ख चउमास वरिसे य लहुगुरु लहुगा गुरुगा अवंदणे चेइये साहूणं' इति भाष्यस्य चूर्णौ 'अट्ठमीए चउत्थं न करेइ मासलहू, पक्खिए चउत्थं न करेइ मासगुरू, चउम्मासिए छट्ठं न करेइ चउलहू, संवच्छरिए अट्ठं न करेइ चउगुरू' चशब्देन 'एएसु चेव चेइयाणि साहुणो वा जे अन्नाए वसहीए ठिया ते न वंदइ मासलहू' इति यदि पुनर्नित्यकृत्यम् अभविष्यत् तदा यत्र दिने इदं न क्रियते तत्रापि पर्वस्विव तदकरणजं प्रायश्चित्तम् आपद्येत, न च आपद्यते अनुक्तत्वात्? इति चेत्, न, एवं हि चतुर्थादितपांसि अपि नैमित्तिकानि एव स्युः, पर्वस्वेव तेषामपि अकरणे प्रायश्चित्तस्य उक्तत्वात्, अथ एतानि बहुगुणत्वात् सदापि क्रियन्ते एव यदि शक्ति-र्भवति? एवं तर्हि चैत्यवन्दनमपि सदापि क्रियतां, हेतोः समानत्वात्, किंच यथा प्रतिदिनम् अन्यवसतिस्थितसाधुवन्दनेऽपि निकटस्थाः साधवो वन्द्यन्ते एव, तथा भिक्षाचर्या

परिभ्रमणादि व्यासंगान्तरवशात् नित्यं सर्वचैत्यावन्दनेऽपि प्रत्यासन्नं चैत्यं वन्द्यते एव, यत्तु पर्वसु सर्वचैत्यावन्दने प्रायश्चि-
त्तम् उक्तं तद्युक्तमेव उक्तं, तत्रहि आप्तोक्तत्वात् प्रायः सर्वैरपि साधुभिरवश्यमेव चतुर्थादितपः क्रियते तस्मिंश्च कृते प्रतिव-
न्धकाभावाद्. यः पर्वण्यपि चैत्यानि न वन्दते स निर्धर्म इति, प्रमत्त इति वा निश्चितं, प्रायश्चित्तयोग्य एव, अन्यदा तु सर्वचै-
त्याऽवन्दने ऽपि न प्रायश्चित्तम् अवश्यकार्येण भिक्षाभ्रमणादिधर्मकार्यान्तरेण तस्य अवष्टब्धत्वात्, यदि वा, तदापि प्रायश्चित्तं,
यद्याकुट्टितो दर्प्पतः प्रमादतो वा सर्वाण्यपि चैत्यानि न वन्द्यन्ते, कल्पतस्तु तदवन्दने ऽपि न शुद्धत्वात्, एवं च पर्वणि स-
र्वाणि अपि चैत्यानि नियमेन वन्द्यन्ते, तदा उक्ततपसो हि एतत्फलत्वेन उक्तत्वात्, तथाहि निशीथे "उत्तरकरणं एगग्गयाय
आलोयचेइयवंदणया मंगल धम्मकहा वि य पव्वेसु तवो गुणा हुंति त्ति" अन्यदा तु न नियमः, तद्धेतोः सर्वसाधूनाम् उप-
वासस्य अभावात्, अतो अन्यदा एकं द्वे वा यथा प्रभवं वन्द्यन्ते, तदापि यः प्रमादेन, कदवलेपेन, निर्द्धर्मतया वा, एकमपि
न वन्दते, स प्रायश्चित्तयोग्य एव ॥ अतएव गीतार्थाश्च तस्य प्रायश्चित्तं ददति, यदि पुनरन्यदा सर्वथापि न वन्द्यन्ते, तदा
पर्वण्यपि अवन्द्यत्वप्रसङ्गः, नहि यच्छेपकाले सर्वथा ऽपि अकृत्यं, तत्पर्वणि क्रियते, एवं हि हिंसाद्यपि तदा क्रियेत ॥ ननु
पोषधं प्रतिदिनम् अक्रियमाणमपि पर्वणि क्रियते एव, एवं चैत्यवन्दनमपि करिष्यते ? इति चेत्, आहाराद्यन्यतरपोषधकरणस्य
अन्यदा निषिद्धत्वात्, केवलं पर्वणि तच्चतुर्विधमपि क्रियते, एवं चैत्यवन्दनमपि प्रतिदिनमेकत्र क्रियमाणमपि पर्वणि सर्वत्र
कर्त्तुं युज्यते, एवं च पर्वणि सर्वाण्यपि चैत्यानि वन्दितव्यानि इत्युक्ते अर्थादेवापन्नम् अन्यदा स्वल्पानि वन्द्यानीति, अन्यदा

न्धत्वमन्तरेण पर्वचन्धत्वस्य अयुक्तत्वात्, नहि अन्यदा अपन्याः पत्नीर्थिकाशर्भ्यादयः पर्वाणि विशेषतो वन्द्यन्ते, अथ स्वाध्यायपलिमन्थभयात् चैत्ये प्रत्यहं न गम्यते यत्र? न, एवं हि चक्रस्तूपादिष्वपि अगम्यता स्यात्, तत्र तस्य सुतरां भावात्; अथ तत्रापि सुविहिता न गच्छन्त्येव? न, सिद्धान्ते तत्र गमनस्य उक्तत्वात्, तथाहि ओघनिर्युक्तौ, चक्के थूभे पडिमाजम्मणनिक्खमणनाणनिव्वाणे, इति गाथार्द्धभाष्ये 'चक्कंति धम्मचक्कं, थूभो सुरनिम्मिओ य महुराए, पडिमजियगामि पडिमा जम्मणनिक्खमणमाईणि, जं जहिं तित्थगराणं सव्वमेतासिं वंदओ जाइ त्ति' अथ तत्र गतानां स्वाध्यायपलिमन्थलक्षणाच्छेदान्महत्तरः सम्यक्त्वशुद्धिरूपो लाभो भवतीति गम्यते? हन्तागौ प्रत्यहं चैत्यगमनेऽपि भवत्केन वार्यते; किञ्च 'वंदइ उभओ कालं पि चेइयाइं थयथुई परमो, इत्याद्युपदेशमपि यतीनां तदैव गृहस्थाः प्रतिपाद्यन्ते, यदि एते स्वयं प्रत्यहं चैत्ये गच्छन्ति, नितस्यैव स्थापकत्वात्, यदुक्तं 'ठिइठावए परं' इति, ननु यदि चैत्यवन्दनं नित्यकृत्यं तर्हि, यदा चैत्यरहिते स्थाने सुविहिता, विहरन्ति, तत्र कथम्? इति चेद्, ननु भवन्तमपि पृच्छामि नैमित्तिकं यदि तदापि कथं? तत्रहि अष्टम्यादिनिमित्तानामपि भावात्, अथ तदा स्थापनाचार्यस्य अग्रे चैत्यानि वन्द्यन्ते; यतस्तत्र पञ्चापि परमेष्ठिनः स्थाप्यन्ते; आत्मकृतस्थापनार्हदाकारो अपि चैत्यवन्दनार्हत्वेन; एवं तर्हि शेषकाले अपि तदग्रे वन्दन्तां, तुल्ययोगक्षेमत्वादिति सिद्धं चैत्यवन्दनस्य नित्यकृत्यत्वम्, तत्सिद्धौ च गमधातत्वमपि अस्य सिद्धमेव, आचार्यपरम्परागतत्वात्, यस्तु स्तोकोऽपि कदाग्रहलेपात् मन्यते, स मिथ्यादृष्टिरेव, यदुक्तम् ग्रन्थकृदवनिर्युक्तौ "आयरियपरंपरएणागयं जो उ छेयबुद्धीए, सो चेइव्वयवाई जमालिणासं स णासिही" इति भावः ॥८६॥

ननु—गृहिणः कथं सप्त पञ्च त्रीन् वारान् वा चैत्यवन्दनम्? इति पृच्छायाम् उत्तरमाह,—

पडिकमिओ गिहिणो वि हु सत्तविहं पंचहा उ इयरस्स॥ होइ जहन्नेण पुणो तीसुवि संझासु इय तिविहं ॥८७॥

व्याख्या—प्रतिक्रामत उभयकालम् आवश्यकं कुर्वतः, गृहिणोऽपि गृहस्थस्यापि, अपिः समुच्चये न केवलं यतेरित्यर्थः, हु निश्चये 'सप्तविधं' सप्तवेलं, पञ्चधैव पञ्चवेलमेव, तुरेवार्थः इतरस्य अप्रतिक्रामतः 'भवति' जघन्येन पुनः तिसृषु अपि दिवसादिमध्यान्तरूपासु, सन्ध्यासु कालवेलासु, चैत्यवन्दनम् इति, अनया रीत्या त्रिविधम्, उत्कृष्टमध्यमजघन्यरूपम् इत्यर्थः ॥ ८७ ॥

इत्युक्तं चैत्यवन्दने तत्प्रसङ्गेन षोढावश्यकेऽपि अप्रमादकरणं, सम्प्रत्यालोचनाकारिणं शुभभावहेतौ द्रव्यस्तवे भावस्तवे च प्रवर्त्तयितुमाह—

सुसाहुजिणाणं पूयणं च साहम्मियाणं चिंतं च॥ अपुव्व पढणसवणं तदत्थपरिभावणं कुज्जा ॥ ८८ ॥

व्याख्या—सुसाधुजिनानां पूजनं, तत्र सुसाधूनां प्रासुकैषणीयेनैव वस्त्रपात्रान्नादिना प्रतिलाभनं, नतु अप्रासुकानेषणीयादिनाऽपि तस्य अल्पायुष्कताहेतुत्वात्, यदुक्तं भगवत्यां कहण्णं भंते जीवा अप्पाउयत्ताए कम्मं पकरेंति? गोयमा पाणे अतिवाइत्ता, मुसं वइत्ता, तहा रूवं समणं वा माहणं वा, अफासुएणं अणेसणिज्जेणं, असणपाणखाइमसाइमेणं पडिलाभित्ता, एवं खलु जीवा अप्पाउयत्ताए कम्मं पकरन्ति त्ति" जिनानां च पूजनं पुष्पामिषस्तुतिप्रतिपत्तिरूपामेव पूजां, यदुक्तम्

उत्तराध्ययनचूर्णौ 'तित्थयरो अरहंतो तस्स चेव भत्ती कायव्वा, सा य पूया वंदणाईहिं हवइ' एवं च पुप्फामिसथुइ पडिवत्ति भेएण चउव्विहं पि जहा सत्तीए कुज्जा, इति देवतत्त्वगुरुतत्त्वाद्युपदर्शकत्वेन आसन्नोपकारिणः सुसाधव इति, तेषां पूजनं प्रथमम् अत्र उक्तम् 'साधर्म्मिकाणा' समानधर्माणा, चिन्ता यथाशक्तिप्रस्तावोचितोपचारेण संभालनाम्, अस्या महाधर्मत्वेन महापुरुषैरादृतत्वात्, यदुक्तं वत्थन्नपाणासणखाइमेहिं पुप्फेहिं पत्तेहिं हि य पुप्फलेहि सुस्सावयाणं करणिज्जमेयं, कयं उ जम्हा भरहाहिवेणं तं अत्थं तं च सामत्थं त विन्नाण सुउत्तमं, साहम्मियाण कज्जम्मि जं विचंति सुसावया" इति, चः समुच्चये, 'अपूर्वस्य' अपरिचितश्रुतस्य 'पठनम्' अध्ययनं, श्रवणं, सूत्रतोऽर्थतश्च आकर्णनम्, अपूर्वपठनश्रवणं, समाहारत्वाद् एकवचनम्, अनेन वाचनारूपः स्वाध्याय उक्तः, 'तदर्थपरिभावनम्' अपूर्वपठितश्रुतग्रन्थार्थचिन्तनम्, अनेन तु अनुपेक्षारूप उक्तः, एतौ च शुभध्यानहेतूनाम् अन्येषामपि त्रयाणां तद्भेदानाम् उपलक्षणं, स्वाध्यायो हि पञ्चविधो, यदुक्तं, स्थानाङ्गे "सज्झाओ पञ्चविहो पन्नत्तो, तं जहा-वायणा। १। पडिपुच्छणा। २। परियट्टणा। ३। अणुप्पेहा। ४। धम्मकहा। ५। त्ति" कुर्यादिति क्रियापदं सर्वपदेषु योज्यं, कर्तृपदं तु प्रायश्चित्ततपोग्राही, प्रस्तावाद् अत्र ज्ञेयम् इत्यर्थः ॥ ८८ ॥

ननु—यस्य तथाविधसामर्थ्याभावात् पठनश्रवणादिकं न संभवति; स किं करोति? इति पृच्छायाम् उत्तरमाह—

रुद्दट्ट झाणदुगं, वज्जित्ता तह करिज्ज सज्झायं॥ आयारे पंचविहे सया वि, अब्भुज्जमं कुज्जा ॥ ८९ ॥

व्याख्या—हिंसाद्यतिक्रूराध्यवसायानुगतो रुद्रः, तस्य इदं, रौद्रम्, ऋतं, दुःखं, तत्रेह अर्थकामासंतोषजं ज्ञेयं, तत्र

भवं आर्त्तम्, राज्यस्त्रीभोगादिकाम्यवस्त्वभिलाषि, यदुक्तं 'कामाणुरंजियं अट्टं, रोद्दं हिंसाणुरंजियं, धम्माणुरंजियं, धम्मं, सुक्क-
ज्झाणं निरंजणं' इति रौद्रार्त्तं, रौद्रार्त्तनामकं, ध्यातिर्ध्यानं, कचित् ध्येये स्थिरमध्यवसानम् यदुक्तं 'जं थिरमज्झवसाणं तज्झा-
णंति, ध्यानं च ध्यानं च ध्याने, सरूपाणाम् एकशेष इति वचनाद्, एकस्य ध्यानशब्दस्य लोपः, ध्यानयोर्द्विकं ध्यानद्विकं,
वर्जयित्वा नरकतिर्यग्गतिहेतुत्वात्, परिहृत्य वर्जयितुं वा तथा 'पढमं पडिकमिऊणं ईरियावहियंमि' इत्यादिवक्ष्यमाणगाथा-
द्वयविधिना कुर्यात् विदध्यात् स्वाध्यायं, पूर्वपठितगुणनं नमस्कारपरावर्त्तनं वा, सहि शुभध्यानहेतुरेव, यदुक्तं 'सज्झाएण प-
सत्थं झाणं जाणइ य सव्वपरमत्थं, सज्झाए वट्टंतो खणे खणे जाइ वेरग्गं ति' आचारे 'नाणं' इत्यादि गाथया वक्ष्यमाण-
स्वरूपे 'पञ्चविहे' पञ्चप्रकारे, सदापि, सर्वकालमपि न पुनरालोचनापूर्त्ति यावद् इत्यपेरर्थः, 'अभ्युद्यमम्' अत्युत्साहं कुर्यात्,
'आलोचितं हि' स्वालोचितं तदैव स्यात्, यदि पुनरपि आलोचनायोग्यं कश्मलकर्म किमपि न क्रियते, तच्च तदैव प्रायो न क्रि-
यते, यदि ध्यानाद्याचारेषु सदैव सम्यक् प्रवर्त्तते इति भावः ॥ ८९ ॥

इत्युक्तो गाथाऽष्टकेनाऽऽलोचनातपःकरणविधिः, अथ सुसाधूनां पूजनं कार्यमिति यदुक्तं, ततो दुष्करक्रियामात्रदर्शनेन,
भ्रमितमतिरुत्सूत्रभाषिणो ऽपि सुसाधुतया मन्वानः, कश्चित् तेषां पूजनं तत्पार्श्वे चापूर्वपाठश्रवणादिकं मा कार्षीत्, इति त-
त्प्रतिबोधनार्थमाह—

उस्सुत्तभासगा जे ते दुक्कर कारगा वि सच्छंदा। ताणं न दंसणं पि हु कप्पइ कप्पे जओ भणियं ॥ ९० ॥

व्याख्या—'उत्सूत्रभाषकाः' आभिनिवेशिकमिथ्यात्वविशापहृतगुचैतन्यत्वेन सिद्धान्तोत्तीर्णवादिनः ये अनिर्दिष्टनामानो यतयः, ते दुष्करकारका अपि दुरनुष्ठेयानुष्ठानकारिणोऽपि, न केवलं क्रियाशिथिला इत्यपेरर्थः, 'स्वच्छन्दाः' यथाच्छन्दाः, तीर्थकराज्ञा बहिर्भूतत्वेन स्वेच्छाचारिण इत्यर्थः, यदुक्तम् "उस्सुत्तमायरंतो उस्सुत्तं चेव पन्नवेमाणो। एसो उ यहाछंदो इच्छा छंदो त्ति एगट्ठो त्ति" तथा च तेषां मलधारणादिका इत्युग्राऽपि सा क्रिया निरर्थका एव, भगवदाज्ञान्यथाकरणस्य महानर्थहेतुत्वात्, यदुक्तम् अल्पादपि मृषावादाद् रौरवादिषु संभवः, अन्यथा वदतां जैनीं वाचं त्वहह का गतिः ॥ १ ॥ ततः किमित्यत आह—तेषां दर्शनमपि, अवलोकनमपि, दूरे तद्वन्दनपूजनादयः, हुरवधारणे, नैव कल्पते, श्रुताशातनाकारित्वेन महापातकित्वात्, स्वोक्तं समर्थयितुं सिद्धान्तसंवादमाह, 'कल्पे' कल्पाध्ययने यतो भणितमिति, कल्पोक्तमेव इदम् न स्वमनीषिकोक्तम् इत्यर्थः ॥ ९० ॥

अथ तद्भणितमेव आह—

जे जिणवयणुत्तिन्नं वयणं भासंति जे य मन्नंति। सद्दिट्ठीणं तद्दंसणं पि संसारवुड्ढिकरं ॥ ९१ ॥

व्याख्या—'ये' कदवलेपिनो जिनवचनोत्तीर्णम्, आगमबाह्यं, 'वचनं' वाक्यं 'भाषन्ते' ब्रुवते, ये च, 'चः' समुच्चये तद् बहुमानात् मन्यन्ते, श्रद्दधते, सद्दृष्टीनां सम्यग्दृष्टीनां, तेषाम् उभयेषामपि दर्शनं, तद्दर्शनं, तदपि दूरे तद्वन्दनपूजनादयः इत्यपेरर्थः, संसारवृद्धिकरम्, अनन्तसंसारपातहेतुः, अर्हद्वचनान्यथाकरणाऽऽस्याजनकत्वेन तस्यापि महापापत्वादिति, यद्यपि

कथमपि दर्शनादौ जाते उपदेशयोग्यत्वं ज्ञात्वा अनुकम्पा एव कर्त्तव्या, यथा
एवमस्ति, तथापि एवंविधानामपि अमीषां कथमपि दर्शनादौ जाते उपदेशयोग्यत्वं ज्ञात्वा अनुकम्पा एव कर्त्तव्या, यथा
आः कथम् एते भविष्यन्तीति ? न पुनर्निन्दनगर्हणादिकम् अमनोज्ञाहारादिदानं वा कार्यं, तयोर्मत्सरविस्फूर्जितत्वेन अशुभ-
दीर्घायुष्कताहेतुत्वात् यदुक्तं भगवत्यां, "कहं णं भंते जीवा असुहदीहाउत्ताए कम्मं पकरिंति ? गोयमा पाणेअइवाइत्ता
मुसंवाइत्ता तहा रूवं समणं वा माहणं वा हीलित्ता निंदित्ता खिंसित्ता गरहित्ता अवमंणित्ता, अन्नयरेणं अमणुन्नेणं अपीइ-
करणेणं असणपाणखाइमसाइमेणं पडिलाभित्ता, एवं खलु जीवा असुहदीहाउत्ताए कम्मं पकरिंति" इति भावः ॥ ९१ ॥

अथ उद्यमविषयतया उपदिष्टं पञ्चविधम् आचारं सिंहावलोकितन्यायेन अवलोक्य, तत्स्वरूपं विवरीतुं भूमिकां रचयति, 'तत्थ इमे आयारभेया' तत्र तस्मिन् पूर्वोपदिष्टकृत्यमध्ये, इमे वक्ष्यमाणाः, 'आचारभेदाः, नीतिप्रकाराः, तानेवाह

**'नाणम्मि दंसणम्मि य चरणम्मि तवम्मि तह य वीरियम्मि ॥ आयरणं आयारो इय एसो पंचहा भणिओ' ॥९२॥**

व्याख्या—'ज्ञाने' श्रुतज्ञाने, 'दर्शने' सम्यक्त्वे, 'चरणे' चारित्रे, 'तपसि' अनशनादिरूपे, तथाचेति समुच्चये, वीर्ये, शक्तौ, विषयसप्तमी चेयं, ततो ज्ञानविषये, दर्शनविषये, चरणविषये, तपोविषये, वीर्यविषये, आचरणं प्रवर्त्तनम्, आचार इति, एवम् एष आचारः, पञ्चधा भणितः, तीर्थंकरैरिति शेषः ॥ ९२ ॥

अथ अस्य पञ्चभेदस्यापि आचारस्य प्रत्येकं प्रभेदभणनपूर्वकं सर्वप्रभेदसंख्याम् आह

**नाणं दंसणमहचरणमित्थ पत्तेयमट्ठभेइल्लं ॥ बारस तवम्मि छत्तीस वीरिए हुंति इमे मिलिया ॥ ९३ ॥**

व्याख्या—'ज्ञान' ज्ञानाचारः, पदैकदेशे पदसमुदायोपचारात्, यथा भीमो भीमसेन इति, एवम् उत्तरत्रापि ज्ञेयम्, 'दर्शनम्' दर्शनाचारः, अथ दर्शनानन्तरं, 'चरणं' चरणाचारः, अत्र एषु पञ्चसु आचारेषु, 'प्रत्येकम्' एकैकम् अष्टभेदवत्, वतुस्थाने इछादेशः, अष्टभेदयुक्तं तथाहि काले १ विणए २ बहुमाणे ३ उवहाने ४ तह अ निण्हवणे ५ वंजण ६ अत्थ तदुभए अट्ठ विहो नाणमायारो ॥ १ ॥ निस्संकिय १ निकंखिय २ निव्वितिगिच्छा ३ अमूढदिट्ठीय ४ उववूह ५ थिरीकरणे ६ वच्छल्ल ७ प्रभावणे ८ अट्ठ ॥ २ ॥

इत्यष्टविधो दर्शनाचारः 'पणिहाणजोगजुत्तो पंचहिं समिईहिं तीहिं गुत्तीहिं, एस चरित्तायारो अट्ठविहो होइ नायव्वो । अष्टौ प्रवचनमातरश्चारित्राचारः, अष्टौ च त्रिभिर्गुणिता जाताश्चतुर्विंशतिः, 'द्वादश' भेदा इत्यत्राध्याहार्यं ततो द्वादशभेदाः, 'तपसि' तपआचारे, यथा—अणसणमूणोदरया २ वित्तीसंखेवणं ३ रसच्चाओ ४ कायकिलेसो ५ संलीणयाय ६ वज्झो तवो होइ, पायच्छित्तं १ विणओ २ वेयावच्चं ३ तहेव सज्झाओ ४ झाणं ५ उस्सग्गोवि य ६ अब्भिंतरओ तवो होइ त्ति" इमे पूर्वोक्तज्ञानाचारादयः, मिलिता एकीभूताः, षट्त्रिंशद् भेदा भवन्ति, 'वीर्ये' वीर्याचारे, अयमभिप्रायः, एते एव षट्त्रिंशद् भेदाः, शक्त्या निगूहनेन अनुष्ठीयमाना वीर्याचारो न पुनरन्यः, कश्चिद् इत्यर्थः ॥ ९३ ॥

यया व्यवस्थया क्रियमाणम् आलोचनातपः सफलं भवति, सा इत्थं भणिता, संप्रति तदेव तपो यथा क्रियते तथाचाह—

आलोयणातवो पुण इत्थं, एगासणं तिहाहारं । पुरिमड्ढलवो इह जो सो सव्वाहारच्चागाओ ॥ ९४ ॥

व्याख्या—आलोचनातपः, पुनरित्थं वक्ष्यमाणनीत्या क्रियते इत्यध्याहारः, तथाहि 'एकाशनम्, एकभक्तं,' त्रिधा त्रिप्रकारोऽशनखादिमस्वादिमलक्षणः आहारः, प्रत्याख्येयो यत्र तत् त्रिधाहारं, 'पुरिमार्द्धतपः' पूर्वार्द्धप्रत्याख्यानम्, इह आलोचनायां, यत् पुल्लिङ्गत्वं प्राकृतत्वात्, तत्, सर्वाहारत्यागात् चतुर्विधाहारप्रत्याख्यानेन, आलोचनायां हि प्राय एकाशनं त्रिविधाहारमेव, पुरिमार्द्धं तु दिवसस्य आद्यप्रहरद्वयं यावत् चतुर्विधाहारमेव, ऊर्ध्वं च आलोचनासम्बन्धि एकाशनादिकं यदि करोति, तदा त्रिधाहारमेव, अन्यथा तु अनियमः ॥

ननु—अत्र प्रथमं निर्विकृतिकस्य, ततः पुरिमार्द्धस्य, तत एकाशनस्य स्थितिर्वक्तुम् उचिता, आगमे हि अनेनैव क्रमेण असीषां महत्त्वस्य उक्तत्वात्, लघुनि महति महत्तरे चापराधेऽनेनैव क्रमेण आपद्यमानत्वेन दीयमानत्वेन चोक्तत्वाच्च, तथाहि जीतकल्पे 'उद्देसज्झयणे सुयखंधे अंगेसु, कमसो पमाइस्स कालाइक्कमणादिसु, नाणायारातिचारेसु, निव्वियपुरिमड्ढेगभत्त आयंबिलं चणागाढे पुरिमाई खमणं तं आगाढे एवमत्थे वि, इत्यनेन नोगाढश्रुतसम्बन्धिनि प्रमादात् कालनियमाद्यष्टविधाचारातिक्रमेण वाच्यमाने पठ्यमाने गुण्यमाने व्याख्यायमाने वा उद्देशे प्रायश्चित्तं निर्विकृतिकम्, अध्ययने तु पुरिमार्द्धं, श्रुतस्कन्धे तु एकाशनम्, अङ्गे च आचाम्लम् आगाढश्रुतसम्बन्धिनि तु उद्देशे पुरिमार्द्धम्, अध्ययने तु एकाशनम् उक्तम्, यदि वा भवतु कथंचित् निर्विकृतिकं महत्? तथापि पुरिमार्द्धम् एकाशनात् लघु एव, यतोऽस्य स्वयमेव सूत्रकारः 'चतुरिक्कासणएहिं उववासो,' इत्यादि गाथायां लघुत्वं व्यवस्थापयिष्यति, इति पुरिमार्द्धमेव प्राग् वक्तुं युक्तं नतु एकाशनम्? इतिचेत्, सत्यं; किन्तु छेदग्रन्थेषु निर्वि-

कृतिकस्य पुरिमार्द्धस्य च प्रत्याख्यानान्तररहिततया एव लघुत्वमुक्तम्, पुरिमार्द्धस्य चात्रापि वक्ष्यते सांप्रतं तु प्रत्याख्यानान्तरेण सहिते एवैते, प्रायः क्रियेते, इत्येकाशनात् महती एव, इत्येकाशनम् पूर्वमुक्तम्, इति न कश्चिद्दोष इत्यर्थः ॥ ९४ ॥

इत्युक्त एकाशनपुरिमार्द्धयोर्विधि', अथ निर्विकृतिकस्य तत्त्याज्यवस्तुश्रवणं प्रति प्रोत्साहनं चाह—

तं होइ निव्विगइयं जं किर उक्कोसदव्वचाएण । कीरइ जं उक्कोसं तं दव्वं पुण निसामेह ॥ ९५ ॥

व्याख्या—तद् भवति निर्विकृतिकं, यत् किलेति आप्तवादे, तत् उत्कर्षद्रव्यत्यागेन उत्कृष्टद्रव्याभक्षणेन क्रियते, इत्याप्ता ब्रुवते, निर्विकृतिकं हि न विकृतीनामेव केवलानां त्यागेन शुद्धं भवति, किं तर्हि? उत्कृष्टद्रव्यत्यागसहितानां; यत्पुनर्द्रव्यम् उत्कर्षम् उत्कर्षवत् उत्कृष्टमित्यर्थः ॥ तन्निशामय, तच्छृणुत इत्यर्थः ॥ ९५ ॥

तदेवाह—

खीरी खंडं खज्जूर सक्करादक्खदाडिमाईं य ॥ तिलवट्टी वडयाइं, करंबओ चूरिमं च तहा ॥ ९६ ॥

नालिएरं मोहयभंडिया संतलिय भज्जियाचणए ॥ आसुरिअंबिलियापाणगाइ किल्लाडियाइ तहा ॥ ९७ ॥

तन्दुलकढिअं दुग्धं घोलं पयाइं भूरिभेयाणि ॥ उक्कोसगदव्वाइं वज्जिज्जा निव्विगइयम्मि ॥ ९८ ॥

व्याख्या—'खीरी' परमान्नम् इयं च दुग्धशाटकविकादीनाम् उपलक्षणं, 'खण्डखर्ज्जूरशर्कराद्राक्षादाडिमादीनि, प्रसिद्धानि, नवरं दाडिमं दाडिमकुलिकाः, आदिशब्दाच्च सहकारराजादन-कदलीफल-नारङ्गादिशुष्काशुष्कभेदभिन्नप्रधानफला-

नचु असिन्नपि निर्विकृतिप्रत्याख्याने सचित्तानि नियम्यन्ते, किं पुनरालोचनासम्बन्धिनि, द्राक्षादीनि तु
फलिकाग्रहः, नचु असिन्नपि निर्विकृतिप्रत्याख्याने सचित्तानि ... उच्यते मांसवर्जितं सर्वमपि सचित्तम् उपायेन प्रासुकी
सचित्तानि तत् कथं तद्भक्षणसंभवो येन वर्जनोपदेशः सफलः स्यात् ? उच्यते मांसवर्जितं सर्वमपि सचित्तम् उपायेन प्रासुकी
भवत्येव, ततः संभवत्येव अत्र तद् भक्षणम्, इति युक्त एव तद्वर्जनोपदेशः; चकारात् गुडपर्पटिका गुडधाना कर्करीयकफा-
णितेक्षुरसकसारवर्षोपलशर्करातलिकाऽमृतिकादीनां ग्रहः, 'तिलवर्त्तिः, तिलकुट्टिः' सा च यदि सचित्ततिलानां तदा पर्युषिता
एवात्र ज्ञेया, नतु सद्यस्का तस्या अचित्तत्वेन अव्यवह्रियमाणत्वात्, अग्नितापतप्ता च सद्यस्कापि, अथ प्रासुकतिलानां तदा
सद्यस्कापि, 'वटकानि' प्रतीतानि, तान्यपि कथिततक्रकाञ्जिकभिन्नानि अत्र ज्ञेयानि, अभिन्नानां पक्वान्नविकृतित्वेन, घोलभि-
न्नानां जीवसंसक्तिमत्त्वेन निर्विकृतिकेऽभक्ष्यत्वात्, 'करम्बः' प्रसिद्धः, सोऽपि दधिकृतो दुग्धकृतो वा ज्ञेयः, नतु तक्रकृतः; तस्य
वदरचूर्णवन्नीरसत्वेन अनुत्कृष्टत्वात्, 'चूरिमं' घृतखण्डादिमिश्रितं मोदकादिचूर्णं, चकारात् स्नेहमर्दितशकुकुट्टिरिसिद्धपिण्डका
घृततैलाद्येकतरप्रक्षितमण्डकरोट्टिका आस्त्यानकाम्लिका, वटकव्याघ्राते दुरिकापुरणादि तेमनप्रलेहादीनां ग्रहः, तथाशब्दः
समुच्चये इति गाथार्थः ॥ ९६ ॥

नालिकेरशब्देन नालिकेरसारोऽभेदोपचारात् उच्यते, यो लोके खुडहुडीगिरिकानामभ्यां प्रसिद्धः, तस्यैव अतिसरसत्वेन
भक्ष्यत्वात्, दृश्यते चाभेदोपचाराद् बीजपूरस्य सारो बीजपूरशब्देन उच्यमानः, मोदिकाः स्नेहमिश्रितकनिकानिष्पन्नाः, म-
ण्डिका अग्नितापगलितपुटद्वयान्तर्न्यस्तगुडमिश्ररोट्टिका, घृताद्यतिप्रक्षितरोट्टिका वा, भर्जिका वस्तुलादिशाकः, चनका अशुष्का

एवात्र ज्ञेयाः, तेषामेव संकल्पमानत्वात्, 'संवलिता, उत्कालिते घृते तैले वा पक्वा, मर्जिकाश्चनकाः सन्वलितभर्जिका चनकाः, तान् अन्येषामपि छमकितशालनकानाम् उपलक्षणम्, एते आसुरी, राजिका, यदुक्तम् अमरकोशे, 'राजिका कृष्णिकाऽऽसुरीति' अभिधानकोशेऽपि उक्तम् 'असुरी कृष्णिका' चासाविति, ताभिर्निष्पन्ना आसुरी राजिका, संस्कृतघोलदध्याद्यन्तर्निक्षिप्तखण्डीकृतशर्षपशाकादिः, इयं च सिन्ध्वादिदेशे आहुरि इति नाम्ना, जालन्धरे आसुरमिति नाम्ना अन्यत्र राजिका तिक्तमिति नाम्ना च प्रसिद्धा, एषा च दधिकृता एवात्र ज्ञेया, यदुक्तं योगविधौ 'तद्दिवसकया दहीकया आसुरी न कप्पइ जोगवाहीणं' इति, अतः काञ्जिकवटकपानीयभक्षणेऽपि न दोषः, 'अम्लिकापानकं, चिञ्चापानकं, तद् आदिर्यस्य तत्तथा, आदिशब्दात् द्राक्षापानकनालिकेरपानक-खर्जूरपानक-गुडपानकादयो गृह्यन्ते, किलाटिका अम्लरसविस्रुटितदुग्धवराटिकानिर्मिता घारिकाकाराः पिण्डिकाः, एताश्च सिन्धुदेशे प्रसिद्धाः, तत्र च अतिघनदधिपिण्डस्यापि किलाटिका भवन्ति, परं ता द्रव्यान्तरानुपहतत्वेन विकृतिरेव संभाव्यन्ते, किलाटिका आदिर्यस्य तत्तथा, आदिशब्दात् दुग्धसिद्धद्राक्षाखुड्डुडीसारिकमरिचवटिकादिव्यञ्जनानि गृह्यन्ते, तथा समुच्चये ॥ ९७ ॥

तन्दुलैः षष्टिकादिभिर्धान्यसारैरल्पैः सह कथितम् उत्कालितं, तन्दुलकथितं, 'दुग्धं' क्षीर पेया इत्यर्थः, इदं तु तलस्थितसहपक्वतन्दुलानाम् उपरिचत्वार्यङ्गुलानि यावत् दृढं ज्ञेयम्, तदूर्ध्वं वर्द्धमानं विकृतिरेव, क्षीरेयी तु सान्द्रा भवतीति न तथा पौनरुक्त्यं, हस्तविलोडितं दधि घोल उच्यते, स च द्विधा निर्जलः सजलश्च, तत्र आद्यस्य मथिताऽपरनाम्नोऽत्र न ग्रहणं विकृति-

एवमादीनि, आदिशब्दात् गुडमाधुरशिखरिणीनिर्भञ्जनादीनि गृ-
त्वात्, द्वितीयस्तु द्रव्यान्तरापहतरसत्वाद् उत्कृष्टद्रव्यमेव, एवमादीनि, आदिशब्दात् गुडमाधुरशिखरिणीनिर्भञ्जनादीनि गृ- पुनर्वर्जनोपदेशोऽत्यादरख्यापनार्थः, शुद्धिकामीति,
ह्यन्ते, भूरिभेदानि अनेकप्रकाराणि, उत्कर्षकद्रव्याणि वर्जयेत् परिहरेत्, पुनर्वर्जनोपदेशोऽत्यादरख्यापनार्थः, शुद्धिकामीति,
कर्तृपदं ज्ञेयम् ॥ निर्विकृतिके एवंविधस्यैव अस्य महानिर्जरा हेतुत्वादिति भावः ॥ ९८ ॥
इत्युक्तानि नामग्राहम् अनेकानि उत्कृष्टद्रव्याणि, अथ एतेषामेव विकृतिनिष्पन्नानां नानादेशजत्वेन दुर्लक्षानां सुखावबोधार्थं
व्यापकलक्षणमाह—

विगई दव्वेण हया जायं उक्कोसियं भवे दव्वं ॥ केइतयं विगइगयं भणंति तं सुयमयं न त्थि ॥ ९९ ॥

व्याख्या—'विकृतिः' क्षीरादिका, द्रव्येण तन्दुलादिना, हता भग्ना, मारिता, निर्वीर्यीकृतेति यावत्, या काचन पायसादि
उत्कर्षितं उत्कर्षितसंज्ञं भवेत्, 'द्रव्यम्' उत्पन्नरसवीर्यविपाकान्तरत्वात् यथा मथितं, खण्डादिरसेन हतं शिखरणी ।१। घृतं क-
णिकादिना मिश्रितं कुल्लिरिचूरिमं वा ।२। वटिकादि पकान्नं काञ्जिकादिनोपहतं काञ्जिकवटिकादीनि ।३। पर्पटसुकुमारिकादिरसेन
हतं तैलं घृतं वा निर्भञ्जनं ।४। शुण्ठी चूर्णरसेन हतो गुडपाको गुडपर्पटिका ।५। इत्यर्थः, इत्युक्तं विकृतिमयोत्कृष्टद्रव्यस्य लक्षणम्
अथैतन्नामान्तरप्रतिपादकं मतान्तरम् अनूद्य तत्र श्रुतस्यासंमतिमाह 'केइतयं विगइगयं भणंति तं सुयमयं नत्थि, केचित् आ-
चार्याः' तदेव तकत् स्वार्थे, अन्त्यस्वरात्पूर्वम् अक्, क्षैरेय्यादिकं 'विकृतिगतं' विकृतिसंज्ञकं 'भणन्ति, ब्रुवते, तथाहि प्रवचन-
सारोद्धारसूत्रवृत्तौ 'दव्वहया विगइगयं विगई पुण तेण तं हयं दव्वं ति' द्रव्येण तन्दुलादिना हता निर्वीर्यीकृता सती विकृतिः,

पुनः क्षीरादिका विकृतिगतम् इत्युच्यते, तेन कारणेन तन्दुलादि हतं क्षीरादिकं द्रव्यमेव भवति न विकृतिः, अत एव निर्विकृतिकप्रत्याख्यानवतामपि केषांचित् किमपि तत्कल्पत एव, इति, तत् श्रुतमतम् आगमसंमतं नास्ति, न भवति, आगमे हि कृतविकृतिगतसंज्ञाया अदर्शनात्, यदि पुनः सामयिकी संज्ञा सा अभविष्यत्, तदा विकृतिसंज्ञावद् एषापि वृद्धव्यवहारे व्यस्तरिष्यत्, न च विस्तृता, नापि अन्येन केनापि श्रुतधरेण स्वोपज्ञे शास्त्रे नियामकत्वेन प्रयुक्ता, तस्माद् ज्ञायते अर्वाचीनेन केनापि कल्पिता इति, ननु एवं मा वादीः, इयं हि यदि समयभाषा नाभविष्यत्, तदा श्रीभद्रबाहुस्वामी स्वग्रन्थेषु न प्रायुक्ष्यत, प्रयुक्ता चेयं तेन, तथाहि दशाश्रुतस्कन्धनिर्युक्तौ 'विगई विगई भीओ, विगइगयं जो उ भुञ्जए साहू, विगई विगई सहावा विगई विगई बलाणेइ, इति, गाथायाम् इयं च गाथा निशीथभाष्ये पञ्चवस्तुकेऽन्यत्रापि चास्ति, ततो ज्ञायते श्रुतधरैरपि बहुमानितैव, अन्यथा ते स्वस्वग्रन्थान्ते न निक्षिप्सन्त, विकृतिगतशब्दस्तु विकृतिसंबद्धोत्कृष्टद्रव्यवाचकतयैव तैर्व्याख्यातस्तथाहि निशीथचूर्णौ 'निक्कारणे विगई भुंजन्तस्स इमे दोसा विगई गाहा, घृतादि विगई विइया विगइ गहणेण कुगइ विगई एयकयं, विगइकयं, जहा विसंदणं विगई वा गया जम्मि दव्वे तं विगइगयं जहा 'दधोदण विगईए भुत्ताए साहू विगयस्सहा वो हवइ, सा य विगई भुत्ता विगई नरगाइयं बलानेइ त्ति' तस्मात् विकृतमिति समयभाषा एवेति ? चेन्न, अत्रहि विकृतिः केवलाऽपि द्रव्यान्तरेण सहापि विकृतिकृतं विस्यन्दनाद्यपि कारणमन्तरेण भक्षिता कुगतिहेतुरित्याद्युक्तं, न पुनर्विकृतिकृतं विकृतिमिश्रं वा विकृतिगतसंज्ञं भवति इत्युक्तम् ॥ निष्कारणभक्ष्यमाणविकृतीनामेव सदोषत्वेनात्र व्याख्यातुम्

पक्कान्नदधिघृताद्यपि तत्काल-
आरब्धत्वात्, यदि पुनर्निकृतिमिश्रं वा विकृतिगतसंज्ञं स्यात्, तदा घृतदुग्धनवनीतादिकृतत्वेन पक्कान्नदधिघृताद्यपि तत्काल-
कृतदध्योदनोऽपि विकृतिगतसंज्ञः स्यात्, न चैवमस्ति तस्य निर्विकृतिके अपवादतोऽपि अकल्पनीयत्वात्, तस्मात् नायं विकृति-
गतशब्दो विकृतिप्रतिबद्धोत्कृष्टद्रव्याणां संज्ञा; किं तर्हि? विकृतेरेव स्वरूपान्तरमात्रख्यापनपरः, तस्या एवात्र प्राधान्येन वि-
वक्षितत्वात्, अत एव श्रीहरिभद्रसूरिभिः पञ्चवस्तुकवृत्तौ विकृतिगतशब्दो विकृतितयैव व्याख्यातो, यथा 'विगई गाहा' विकृतिं
चेतोविकारमाश्रित्य 'विगई भीतो' दुर्गतिभीतः सन् दुष्टचेतसः कुगतिरिति मन्यमान इत्यर्थः, विगतिगतम् इत्यत्र चेतो-
विकृतिहेतुत्वाद्, विकृतिः, क्षीरादिलक्षणा परिगृह्यते, तद्गतं तज्जातं, गतविकृतिर्वा विकृतिमिश्रं यस्तु भुङ्क्ते साधुः, विगतिगतमेव
किमित्यत आह विकृतिः क्षीरादिलक्षणा, विकृतिस्वभावा चेतोविकृतिरूपा, यतश्चैवम् अतो विकृतिः परिभुज्यमाना विकृतिं
बलान्नयति, तत्कारणपोषणादिति ॥ यशोदेवसूरिणापि प्रत्याख्यानचूर्णौ एवमेवायं व्याख्यातोऽस्ति, कोहि नाम स्वहितेपी
सैद्धान्तिकम् अर्थम् अन्यथा सन्तमन्यथा करोति, तस्मात् अनागमिकी एव विकृतिगतमिति उत्कृष्टद्रव्यसंज्ञा अनादृतत्वेन
वृद्धानाम् असंमता चेति, तथा च द्राक्षादीनामिव क्षैरेय्यादीनामपि उत्कृष्टसंज्ञा एव प्रमाणकी आगमोक्तत्वात्, श्रुतधरैरादृत-
त्वाच्च, तथाहि तद्वचः "जो पुण विगई चायं काऊणं खाइ निद्धमहुराइं, उक्कोसदव्वगाइं तुच्छफलो तस्स सो नेओ, तिलमो-
यगतिलवट्टी वरिसोलग नालिकेर खंडाई, अतिबहल घोलखीरिं घयपप्पुयवंजणाइं च ॥ २ ॥ घयबहु मंडगाई दुद्धकरंबोय
पेयमाईयं । कुल्लुरि चूरिम पमुहं अकारणे केइ भुंजंति, इति तिलमोदकाः, कर्करीयकाः, यदपि च तैरुक्तम् एकैकस्यापि

विकृतेः पञ्च पञ्च विकृतिगतानि भवन्ति, यथा,

अह पेया दुद्धट्टी दुद्धवलेहीय दुद्धसाडी य ॥ पंच य विगइगयाइं दुद्धम्मि खीरसहियाइं ॥ १ ॥
अम्बिल जुयम्मि दुद्धे दुद्धट्टी दक्ख मीसरद्धंमि ॥ पयसाडी तह तंदूलचुन्नपसिद्धम्मि अवलेही ॥ २ ॥
दहिए विगइगयाइं घोलवडा घोलसिहरिणि करम्बो ॥ लवणकणदहि य महियं संगरिगायम्मि अप्पडिए ॥३॥
पक्कघयं घयकिट्टी पक्कोसहिउवरि तरियसप्पि च ॥ निब्भंजणवीसंदणगाइं घयविगइ विगइ गया ॥ ४ ॥
तिल्लमली तिलकुट्टीदद्धं तिल्लं तहो सहुचरियं, तक्खाइदव्वपक्कं तिल्लं तिल्लम्मि पंचेव ॥ ५ ॥
अद्ध कढिए इक्खुरसो गुलपाणीयं च सक्करा खंडं ॥ पक्के गुडो गुडविगई विगइगयाइं तु पंचेव ॥ ६ ॥
एगं एगस्सुवरिं तिण्हुवरिं वीयगं च जं पक्कं ॥ तुप्पेणं तेणं चिय तइयं गुलहाणिया पभिई ॥ ७ ॥
चउत्थं जलेण सिद्धा लप्पसिया पंचमं तु पूयलिया ॥ तुप्पडियतावियाए परिपक्का तीसु मिलिएसु त्ति ॥ ८ ॥

तदपि अनागमिकमेव विसंवादित्वात्, तथाहि पेया क्षैरेयी दुग्धावलेहिकानामेकत्वमेव वक्तुं युक्तं सर्वत्रापि तन्दुलाना मेव विकृतिभुजकत्वात् ॥ अथैकत्र दुग्धा—दल्पतराः तन्दुलाः, अन्यत्र समाः, अपरत्र तेषामेव चूर्णम् इत्येवं रूपभेदात् भेदोऽत्रेति चेत्? एवं तर्हि न पञ्चसंख्यत्वम्; अल्पभेदेऽपि हि भेदश्चेत्? तदा दलितादलितगोधूमजुगन्धरीप्रमुखानेकाद्विदलधान्यानां पृथक् पृथक् भाजनेषु दुग्धेन राद्धानां च विभिन्नरसवीर्यविपाकत्वेन महाभेदे सति विशेषतो भेदः स्यात्, तथा च अने-

सग्रहीष्यते किमिति पृथक् उपात्ते न
कत्वमेव, अथ ते सर्वेऽपि भेदाः क्षैरेयीपदेनैव संगृहीताः, हन्त एवं पेयावलाहिकाऽपि तत्रैव सग्रहीष्यते किमिति पृथक् उपात्ते न
हि ते तन्दुलक्षीराभ्यां न निष्पन्ने ? इति यत्किंचिदेतद्, तथा काञ्जिकयुक्तं दुग्धं तन्दुलैः सह पक्वं दुग्धाटिका भण्यते तैः, सा
च लोके स्वभावतो भवन्ती न दृश्यते; अथौषधादिकारणेन क्रियते, तदा भवतु भिन्नं विकृतिगतं काञ्जिकतन्दुलानामेव तत्र वि-
कृतिभञ्जकत्वात्, किन्तु न नैयत्यं क्वचित् किंचिच्छरीरकारणं देशाचारं वा आश्रित्य भिन्नैर्भिन्नैरौषधैः सह भिन्नरीत्या दुग्धस्य
पच्यमानत्वेनैवंविधानां विकृतिगतानाम् अनेकधा संभवात् ? तथा यैर्दुग्धाटिका वलाहिका व्याख्याता, तत्र तत्त्वं ते एव जानते,
न वयं स्थूलमतित्वात्, केवलमिदं जानीमहे यत् वलाहिकाया विकृतिगतत्वम् नागमे भणितं दृश्यत, नापि वृद्धव्यवहारागतं,
न चापि युक्तियुक्तं, तत्र हि, विकृतिभावभञ्जकद्रव्यान्तरसंपर्काभावात्, तस्मात् इदमपि न किंचित्, तथा द्राक्षामिश्रं दुग्धं राद्धं
पयःसाटिका, तैर्भणिता, पयो दुग्धं सटति गच्छति इति व्युत्पत्तेः, एषाऽपि भवतु विकृतिगतं द्राक्षारसापनीतविकृतिभावात्,
परं न पृथक् गृहीतुम् उचिता, तद् ग्रहणे हि खारिकखुड्कुडीमिरिचवटिकासेविकादीनां भिन्नभाजनेषु दुग्धेन पृथग् राद्धा-
नामपि ग्रहणप्रसङ्गः, समानयोगक्षेमत्वात्, तथा च पञ्चसंख्याभङ्गः, अथ पयःसाटिकया एवामी गृह्यन्ते ? तर्हि एकैव
क्षैरेयी अस्तु तयैव सर्वेषामपि संग्रहस्य भावात्, किं पञ्चसंख्यया निरर्थिकया कृतया इति; एवम् अन्यविकृतिप्रतिबद्धविकृति-
गतानामपि पञ्चत्वाघटनं स्वयमेव अभ्यूह्यं, ग्रन्थगौरवभयात् अत्र न दर्शिष्यते, किंचित् प्रागेव दर्शितमस्ति इति गाथार्थः ॥९९
इत्युक्तानि निर्विकृतौ वर्ज्यतया उत्कृष्टद्रव्याणि तत्प्रसङ्गेन तत्संज्ञान्तरनिराकरणं च, अथ एतानि किं निर्विकृतिमात्रे

वर्ज्यानि, उत आलोचनासम्बन्धिनि निर्विकृतिके ? इति प्रश्नस्योत्तरमाह—

कल्लाण तिहीसु पुणो जं कीरइ निव्विगइयमिह ॥ तत्थ गंडाइदिदव्वमुक्कोसियं तु उस्सग्गओ वज्जे ॥ १०० ॥

व्याख्या—कल्याणानि, कल्याणकदिनानि, तिथयो अष्टम्यादयस्तासु, पुनःशब्द आलोचनानिर्विकृतिकाद् भेदमाह, कल्याणकम् अन्यद्वा किंचिद् उद्दिश्य यत्क्रियते निर्विकृतिकम्, इह प्रवचने, तत्र निर्विकृतिमात्रे, खण्डादिद्रव्यं, पूर्वोक्तस्वरूपम्, उत्कर्षितम् उत्कटमज्ञं, तुरेवार्थो, भिन्नक्रमश्च, तत उत्सर्गत एव वर्जयेत्, नत्वपवादतः, अपवादेहि तत्सेवनस्यापि तत्रानुज्ञातत्वात्, तथाहि—'नवरं इह परिभोगो निव्विइयाणं पि कारणे वसओ, उक्कोसगदव्वाणं न उ अविसेसेण विन्नेओ त्ति' आलोचनानिर्विकृतौ त्वपवादतोऽपि वर्जयत्येव, यद्यपि स्वभावतो निर्विकृतिकमेकरूपमेव, तथापि उपाधिभेदात् भेदो भवत्येव, तथा च आलोचनात्मकमिदम् एकान्ते नोत्सर्गिकमेव उपार्जितदुष्कर्मनिर्मूलनार्थत्वेन अपवादासहत्वात्, शेषं तु अपवादिकमपि अपूर्वपुण्योपार्जनार्थत्वेन याहच्छिकत्वादिति भावः ॥ १०० ॥

ननु—अपवादपदेऽपि उपस्थिते किं स्वयमेव एतानि आसेव्यन्ते, उत गुरुणा पृच्छयैव ?, उच्यते सति संभवे गुरुणा पृच्छयैव; तर्हि गुरवः पृष्टाः सन्त उत्कटद्रव्यभक्षणं गृहस्थानामग्रे कथयन्ति उत सावद्यत्वाद् अपवादत्वात् कुप्रवृत्तिहेतुत्वात् वा नेति ? प्रश्नस्योत्तरमाह—

गीयत्था जुगपवरा आयरिया दव्वखेत्तकालन्नू ॥ उक्कोसयं तु दव्वं कहंति कप्पनिव्वियस्सा वि ॥ १०१ ॥

व्याख्या—गीतार्था उत्सर्गापवादरहस्यवेदिनः, 'युगं' वर्त्तमानकालः तत्र प्रवराः शेपलोकेभ्योऽधिकगुणत्वेन प्रधानाः, आचार्याः, 'द्रव्यम्' असारसारादिरूप आहारः, 'क्षेत्रं' स्निग्धरूक्षसाधारणलक्षणं, 'काल' उष्णशीतसाधारणस्वभावः, उपलक्षणत्वाद् भावश्च हृष्टग्लानत्वादिकः, तान् जानन्ति इति द्रव्यक्षेत्रकालज्ञाः, उत्कर्पकं पुनः, तुः पुनरर्थे, द्रव्यं क्षीरान्नादिकं, कथयन्ति कल्पनीयतया उपदिशन्ति, कृतनिर्विकृतेरपि निर्विकृतिप्रत्याख्यानिनोऽपि, न केवलं घृताद्यन्यतरैकविकृतिग्राहिण इत्यपेरर्थः, तद् भक्षणभाविगुणविशेपविमर्पणपरत्वात् तेपामिति भावः ॥ १०१ ॥

अथ भापासमितत्वाद् यथा ते कथयन्ति तथाह—

उवहाणतवपइट्ठो असमत्थो भावओ य सुविसुद्धो ॥ उक्कोसगं तु दव्वं विगइच्चाए वि तस्सुचियं ॥ १०२ ॥

व्याख्या—उपधानानि श्रुतोपचाराः, तेपां तपः उपधानतपः, उपलक्षणमिदं गीतार्थाचीर्णनिरन्तरविधेयप्रभूतनिर्विकृतिकभद्रमहाभद्रतपसां, तत्र प्रविष्टस्तद्वहनप्रवृत्तः, परम् असमर्थोऽशक्तः, असामर्थ्यं च विक्रियान्तरदर्शनात् ज्ञायते, भावतश्च भावम् आश्रित्य पुनः, चः पुनरर्थे, सुविशुद्धो, मायादिमालिन्यरहितत्वेन अतिनिर्मलः, यो भवति इत्यध्याहारः, उत्कर्पमपि तुरेवार्थे, द्रव्यं परमान्नादि विकृतित्यागेपि निर्विकृतिकेऽपि तस्योचितं युक्तं भोक्तुमितिशेपः, यदुक्तम् 'आवन्ननिव्विगईयस्स असाहुणो कुज्जए परिभोगो ॥ इंदिय जयबुद्धीए विगइच्चायम्मि तो जुत्तो, किं च महानिःस्पृहस्य यतेरपि योगवाहिनोऽशक्तौ उत्कृष्टद्रव्यभक्षणमुक्तमस्ति, तथाहि योगविधौ असहुस्स निव्भं जएणं चउत्थावाणे गाहिमं अन्नयाइ अप्पक्खोवपुव्विल्ल घय भरिय तावियाए, वीय

घाणपकं पिओ गाहिमं कप्पंति त्ति, किं पुनर्गृहस्थस्य इति भावः ॥ १०२ ॥

इत्युक्ताऽपवादतो निर्विकृतिकेऽपि उत्कृष्टद्रव्यभक्षणस्थितिः, अथ पुष्टालम्बनं विनापि उत्कृष्टद्रव्यं यस्तत्र भुंक्ते तस्य दोषमाह-

जो पुण सइ सामत्थे काऊणं सव्वविगइपरिहारं। भक्खइ खंडाइयं नियमा सो होइ पच्छित्ती ॥ १०३ ॥

व्याख्या—यः पुनः सति सामर्थ्ये शरीरशक्तौ, कृत्वा प्रत्याख्याय सर्वविकृतिपरिहारं निर्विकृतिकं, खादयति भक्षयति, खण्डादिकं तस्य तन्निर्विकृतिकं स्वल्पफलमेव भवतीति ज्ञेयम्, यदुक्तं जो पुण विगइच्चायं काऊणं खाइ निद्धमहुराइं, उक्कोसगदव्वाइं तुच्छफलो तस्स सो नेओ ।१। दीसंति य केइ इहं पच्चक्खाए वि मंदधम्माणो, कारणियं पडिसेवं अकारणेणावि कुणमाण त्ति ।२। नियमान्निश्चयेन स भवति 'मायश्चित्ती' प्रायश्चित्तम् आपद्यते इत्यर्थः, विराधकत्वात् यदुक्तम् 'उस्सग्गे अववायं आयरमाणो विराहगो भणिओ त्ति, तथा, जो सालंवणसेवा तं विइयपयं वदंति गीयत्था, द्वितीयपदम् अपवादः, स च प्रायश्चित्तविषय एव 'आलंवणरहियं पुण निसेवणं दप्पियं विंति त्ति, दर्पप्रतिसेवनाकारित्वाच्च मायानिष्पन्नं चाधिकमपि प्रायश्चित्तम् आपद्यते, तस्य शक्त्यपलापकत्वेन मायावित्वादिति भावः ॥ १०३ ॥

अथ दो तिन्नि उ विगइओ पच्चक्खंतेणं, इत्यादि सार्धगाथया वक्ष्यमाणायाः खण्डपृच्छाया उत्तरम् अत्रैव प्रस्तावे प्रसङ्गेन संक्षेपादुक्तम् इत्याह—

इत्थ पत्थावे खंडपुच्छाए उत्तरं कयं,

अत्र निष्कारणोत्कटद्रव्यभक्षणान्निर्विकृतिकप्रत्याख्यानिनो दोपभणनरूपे प्रस्तावे, खण्डपृच्छायाः त्रयस्त्रिंशदधिकशततम-सार्धगाथया वक्ष्यमाणाया उत्तरं कृतं सामान्यतः, विशेपतस्तु तत्रैव करिष्यते इत्यर्थः, इत्युक्ता प्रपञ्चेन निर्विकृतिकस्य व्यवस्था, अथ आचाम्लस्य असौ वक्तव्या, तत्र यद्यपि अथानन्तरं 'गोहुमचणगा' इत्यादि गाथा पठ्यते, तथापि एपा 'गिहिणो इह' इत्यादिगाथाया ऊर्ध्वमेव अर्थेन संगच्छते, इत्यसावेव प्रथमं व्याख्यायते, सूत्रे व्यतिक्रमस्तु लेखकवैगुण्यादिना जातः संभाव्यते, ननु आचाम्ले कृते किं गृहस्थस्य द्वे एव द्रव्ये कल्पेते, उत परार्थं निष्ठितानि यतेरिव बहून्यपि, उभयथापि प्रवृत्तेर्दृश्यमानत्वादिति ? प्रश्नस्य उत्तरमाह—

गिहिणो इह विहियायंबिलस्स कप्पंति दुन्नि दव्वाणि ॥ एगं समुच्चियमन्नं बीयं पुण फासुगं नीरं ॥ १०४ ॥

व्याख्या—गृहिणो गृहस्थस्य नतु यतेः, तस्य भिक्षाचरत्वेन द्रव्यनैयत्यासंभवात्, इह प्रवचने आचामोऽवश्रावणम् अम्लं चतुर्थो रसः ते एव प्रायेण व्यञ्जने यत्र भोजने, ओदनकुलमापशक्तुप्रभृतिके, तदाचामाम्लम्, आचाम्लमपि समयभाषया उच्यते ॥ अत्र निरुक्ताद् आचामस्य मलोपः विहितम्, आचाम्लं येन स तथा, तस्य विहिताऽऽचाम्लस्य कृताचाम्लस्य कल्पेते द्वे द्रव्ये, अत्र द्विशब्दस्य अग्रे अवधारणार्थ एवशब्दो द्रष्टव्यः, ततो द्वे एव द्रव्ये नत्वधिकानि, अन्यार्थं निष्ठितत्वेन प्रासुकैपणीयान्यपि, अत्रार्थे वृद्धपरम्परागतसामाचार्येव प्रमाणं, किमेतत् प्रामाण्यान्निर्विकृतिकाऽऽचाम्लोपवासेषु सचित्तनियममेव न कुर्वन्ति श्राद्धाः, किं च उपवासे एकमेव द्रव्यं न गृह्णन्ति, ततो यथा सूत्राक्षरदर्शनेऽपि अत्र अवश्यंतया सचित्तनियमः क्रियते,

एवं द्वयधिकद्रव्यनियमोऽपि, के ते द्वे ? इत्यत आह—एकं समुचितं स्वशरीरस्य प्रस्तुततपसो वाऽनुकूलत्वेन प्रायोग्यम् अन्नम्, उत्तममध्यमजघन्यरूप कलमशाल्यादि; द्वितीयं पुनः प्रासुकं त्रिदण्डोत्कलितत्वेन भावकद्रव्यसम्पर्कादुत्पन्नवर्णान्तरादिमत्त्वेन वा अचित्तीभूतं, समुचितमितिविशेषणम् अत्रापि योज्यते, ततश्च प्रासुकं समुचितं नीरमित्यर्थः, तथा च प्रासुकमेव ननु सचित्तम्; प्रासुकमपि समुचितमेव ननु अनुचितं, तिलोदकजवोदकतन्दुलोदककरीरोदकमङ्करोदकसंस्वेदिमादिकं, द्राक्षाखर्जूरदाडिमचिञ्चागुडखण्डादिधावनजलं वा, एतानि हि जुगुप्सनीयत्वेन गृहस्थैः पीयमानानि धर्मकुत्साहेतव एवेति अनुचितानि, यतीनां तु भिक्षाचरत्वेन नानुचितानि, उचितमपि नीरमेव, ननु काञ्जिकारनालवणतक्रेक्षुरसादीनि, तेषां हि पानकाहारत्वेऽपि शुद्ध्यहेतुत्वेन आचमनादि कार्यानर्हत्वात् अतएव प्रत्याख्यानचूर्णौ जलमेवोक्तम्, यथा 'जाव इयं उव जुज्जइ ताव इयं भायणे गहेऊणं जलनिव्वुडं काउं भुत्तव्वं एस इत्थ विही त्ति, ननु निन्द्यत्वाज्जवोदकादिकं, सरसत्वादिक्षुरसादिकं च द्वितीयं द्रव्यं यदि न भवति, मा भूत्; काञ्जिकाऽरनालयोः पुनरेकतरद् भवत्येव, अन्यथा आचामाम्लम् इत्यस्य तन्नाम्नो निरवकाशत्वेन वैयर्थ्यप्रसङ्गः ? इतिचेत् न, मुनिषु सावकाशत्वात् मुनीनेव आश्रित्यास्य प्रत्याख्यानस्य इदं नाम, मुनयो हि भिक्षाचरत्वेन कदाचित् किंचिदेव पानकं लभन्ते, इत्येते यथा लाभमेव आचाम्लं कुर्वन्ति, ततो यदैते सौवीरावश्रावणयोरेकतरमेव लभन्ते, तदा तेनापि चाचाम्लं कुर्वन्ति, इत्येतानाश्रित्य सार्थमेव अस्य नाम, यथा आवश्यकम् अन्यथा सामायिकाद्यपि आवश्यकं न स्यात्, न हि गृहस्था अवश्यमेव इदम् उभयकालं कुर्वन्ति, किं तर्हि ? यथाप्रभवमेव; यदुक्तं 'जाहे

किं च यतीनां भिक्षावृत्तित्वेन द्रव्यनैयत्यं नास्ति, ततस्ते आचामाम्लयोरेकतरेण द्वाभ्यां चेदं
खणिओ ताहे सामइयं करेइ त्ति, किं च यतीनां भिक्षावृत्तित्वेन द्रव्यनैयत्यं नास्ति, सन्तमेव आहारं भुञ्जते, न भिक्षितं तस्य
कुर्वन्ति, शुद्ध्यर्थं जलमपि आसेवन्ते, दोषाभावात्, गृहस्थास्तु पौरुषवत्त्वेन स्वगृहे सन्तमेव आहारं भुञ्जते, न भिक्षितं तस्य
धर्मलाघवकारित्वेन पौरुषघातित्वेन च श्राद्धानामनुचितत्वात्, अत एव तेषां द्रव्यनैयत्यमुक्तं, ततो यदि तेऽपि आचामाम्ल-
योरेकतरेण आचाम्लं कुर्युः, तदाऽवश्यमेव द्रव्यनियमभङ्गः, तेषां शुद्ध्यर्थं तृतीयस्यापि जलरूपस्य द्रव्यस्य ग्रहण-भावात्;
तस्मात् यथा सचित्तवर्जकत्वात् तेषां स्वार्थम् अन्नपाको न विरुद्धस्तथा जलस्य प्रासुकीकरणमपि; तथा च ते तत्र प्रासुकमेव
एकं जलं पिबन्ति, न सौवीरादिकं जलवत् यथा तथापि, तत्पानस्य लोके विरुद्धत्वात्, अत एवामी प्रत्याख्यानं कुर्वन्तः,
पानकाकारान्नोच्चरन्ति, वृद्धाननुमतत्वात्, निष्फलत्वाच्च, यादृशं हि जलं वृद्धपरम्परागतं सचित्तवर्जकत्वात् ते पिबन्ति, तादृशं
पानकाकारोच्चारणमन्तरेणापि कल्पत एव, यदुक्तं प्रत्याख्यानचूर्णौ पाणं सोवीरजवोदगाइ चित्तं सुराइयं चेव। आउक्काओ सव्वो
संगरकइराइनीरं च ॥ १ ॥ खज्जूरदक्खदाडिमचिंचापाणाइं तक्कमिक्खुरसो, । गुडखण्डाई नीरं आयामुस्सेइमाईयं ॥ २ ॥
पाणग आगारेहिं कएहिं एयाइं हुंति कप्पाइं। इहरा न हुंति कप्पा मुत्तुं उसिणोदगाईयं, इति, एवं चायामाम्लेऽपि चेद् गृह-
स्थाः पानकाकारान् नोच्चरन्ति, ततः कथं शेषप्रत्याख्यानेषूच्चरन्तीति भावः ॥ १०४ ॥
इत्युक्तं कृताऽऽचाम्लस्य द्वे एव द्रव्ये समुचिते कल्पेते इति ॥ अथ समुचितपदेन स्वविपक्षत्वेन सूचितान्यपि अनुचितद्र-
व्याणि कानि यैराचाम्लं न क्रियते? इति प्रश्नमाशङ्क्य स्वयमेव सूत्रकृदुत्तरमाह—

गोहुमचणगजयेहिँ भुग्गेहिँ सत्तुएहिँ कासीए । घुघुरियावेढिमिया इड्डुरियाहिँ न तं कुज्जा ॥ १०५ ॥

व्याख्या—गोधूमचनकयवाः प्रसिद्धाः तैः, भृष्टैः ज्वलदग्नितप्तभर्जनकभाजनस्थवालुकाजनितपाकैरुपलक्षणत्वात् मुद्गादिभिरपि, सक्तुभिः यवधान्यचूर्णैः, उपलक्षणत्वात् भृष्टमुद्गादिचूर्णैः मोक्क इत्यादि नाम प्रसिद्धैः, तत्कं पानकाहार उक्तः सिद्धान्ते तथाहि "एगे नामेइ सुद्धं एगंगी पाणगंतु सआइ खादिम फलमंसादीमाइमे महुफाणियाई णीति, कल्पभाष्यगाथाचूर्णावपि, "एगे एगंगि उपेर सुद्धो सुद्धं नामेइ, एगं असण एगंगियं, तक उदगमआइणं, एगंतरसुद्धं एवं पाणं एगंगियं, खादिमं एगंगियं फलमंसादीणं, एगयरं साइमं एगंगियं महुफाणियादीणं एगयरं सुद्धं, सुद्धं नाम नान्येन मिश्रितम् एयम् एगंगियमिति" तथा चेदं विनीतकचूर्णादिकथागुसीक्कुतजलपिदण्डोद्भूतजलव्यतिरिक्तानाम् इक्षुरसकाञ्जिकावथारणादिपानकानाम् उपलक्षणं, ततस्तक्रादिपानकैः, घुग्घुरिका वेष्टमिका इड्डुरिकादिभिः तत्र घुग्घुरिका अर्द्धश्विन्नत्वेन अविहितसिताद्धगोधूमाः ताश्च अर्द्धराद्धमुद्गादिवाल्लानाम् उपलक्षणं, वेष्टमिका मुद्गद्वयान्तर्न्यस्तकलिणिमद्दितपक्को मोदकाकारो रोटिकाविशेषः, इड्डुरिका प्रसिद्धा उपलक्षणमियम्, उंडेरिकादीनां चमिद्र्व्यस्वल्पनिर्जराकारणत्वेन शुद्धासंमतैः, तद् आचाम्लं न कुर्यादित्यर्थः ॥ १०५ ॥

इत्युक्तान्यानाम्लस्य अप्रायोग्यानि द्रव्याणि, अथाचाम्ले यदि द्वे एव द्रव्ये कल्पेते नाधिकं, तर्हि दन्तशोधनकमपि न कल्प्यते, ततः कथं मुखस्य शुद्धिरित्यत आह—

जो पुण मिन्विगइं विणा मुहसुद्धिं काउं इत्थसमत्थो ॥ सो कडुयकसायरसं मिलियं गिण्हइ न मे भंगो ॥१०२

व्याख्या—यः पुनर्विरलदन्तत्वात् शलाकया दन्तशोधनकेन, 'विना' अन्तरेण मुखशुद्धिं दन्तान्तरालप्रविष्टसिक्तापनयनं कर्तुम्, अत्र आचाम्ले मकारोऽलाक्षणिकः, असमर्थः, अशक्तः, स कटुककषायरसां कटुकरसां निम्बादिशलाकां कषायरसां विभीतकादिशलाकां गृह्णाति मुखशुद्ध्यर्थं न तस्य भङ्गः न द्रव्यद्वयनियमविराधना, अनिष्टत्वेन अनाहारत्वात् कटुकषायद्रव्याणां, यदुक्तं निंबाईणं छल्लीपत्तफलाई य मोइ भूईओ अन्नं चेय पगारं दव्वमणिट्ठं अणाहारो त्ति, तत आहारेणैव प्रत्याख्यानभङ्गो नतु अनाहारेण अप्रत्याख्याततत्वात् तस्य इति भावः ॥ १०६ ॥

इत्युक्ता आचाम्लस्य करणस्थिति–रथ उपवासस्य तां तत्प्रतिपालनफलं चाह—

**आहारतिगं वज्जिय सजियं न जलं पि पियइ पवररसं॥ जो किर कयउववासो सो वासं लहइ परमपदे॥१०७॥**

व्याख्या—आह्रियन्ते इष्टत्वेन भक्ष्यन्ते इत्याहारा भक्ष्यवस्तूनि तेषां त्रिकम् अशनखादिमस्वादिमलक्षणम्, आहारत्रिकम्, वर्जयित्वा प्रत्याख्याय, सजीवं सचित्तं, नञ् क्रियया योक्ष्यते, 'जलमपि' पानीयमपि दूरे प्रत्याख्यातम् आहारत्रिकम् अप्रत्याख्यातं पानकमपि इत्यपेरर्थः, 'न पिवति' न धयति, प्रवररसम् अतिमिष्टम्, इदं च विशेषणं जलस्य दुस्त्यजताद्योतनार्थं, यः किल इत्याप्तवादे आप्ता एव एवं ब्रुवते, कृत उपवासो येन स कृतोपवासः, अभक्तार्थी स दृढव्रतत्वात्, वासम् अवस्थानं, लभते, परमपदे मोक्षे, ननु आलोयणानिमित्तं पारद्धतवम्मि, इत्यादि गाथास्थित'सचित्तवज्जणमिति,' पदेनैव सचित्तजलापानं लब्धमेव किं पुनरपि अत्रोक्तं, नहि उपवासे एव सचित्तजले वर्ज्यमाने परमपदवासो लभ्यते, नैकाशननि-

विकृत्याचाम्लेषु, नापि उपवास एव त्रिधाहारो नैकाशनादीनि, तस्माद् यथा पूर्वोक्तत्वात् एकाशनादिषु इदं नोक्तं, तथा अत्रापि वक्तुं नोचितमिति ? सत्यं किं तु आलोचनाव्यतिरिक्तेषु एकाशनादिषु अपि त्रिधाऽऽहारेषु उपवासानुरूपत्वात्, प्रासुकमेव जलं पेयमिति नियमज्ञापनार्थमिदम्, अत एव केचित् सैद्धान्तिकमन्या गृहस्थानपि यतीनिव पानकाकारषट्कम् उच्चारयन्ति, तच्च अतीवाऽयुक्तम्, वृद्धानामसंमतत्वात् नहि गृहस्था स्वधर्मोपहासभीताः सचित्तवर्जका अपि एकाशनादिप्रत्याख्याने कृते खर्जूरादिपानकं वा, तिलतन्दुलादिधावनं वा, अवश्रावणकाञ्जिकादि वा पिबन्ति; किं तर्हि ? उष्णोदकमेव; वा त्रिभीतकादिरसभावितोदकमेव वा, तच्च पानकाकारोच्चरणमन्तरेणापि पातुं कल्पते एव, एतच्च प्रागेव दर्शितम्, अथ न कल्पते तर्हि दिवसचरिमप्रत्याख्यानेऽपि पानकाकारोच्चारणप्रसङ्गः, तत्रापिहि द्विधाहारत्वेन त्रिधाहारत्वेन वा कृते पानकस्य पीयमानकत्वात्, ननु इदं रात्रिप्रत्याख्यानं दिवसचरमभागे एव क्रियमाणत्वात् रात्रिभोजननिषेधकत्वाच्च, रात्रौ च खर्जूरादिपानकानि धर्मविरुद्धत्वेन जैनानाम् अपेयानि एवेति, कथं पानकाकारोच्चारणप्रसङ्गः ? इतिचेत् एवं हि रात्रौ त्रिधाहारम् इतिपदमपि अनुच्चार्यमेव; एतदनुयायित्वात् पानकाकारोच्चारणस्य, यदुक्तं "जइ पुण कुणइ पोरसि पुरिमेगासण अभत्तट्ठे तिविह आहारो पाणगमुद्दिसिउं लेवाडे निच्चेव माइयं कुणइ आगाराणं छक्कं तत्थ य सुत्तं इमं भणियमिति" अथ शुद्धोदकपानार्थं त्रिधाहारमित्यादिपदम् उच्चार्यत एव अन्यथा संयुक्तनारयत्वाद् एकस्यापि आहारस्य अभक्षणं, सर्वेषामपि वा भक्षणं प्रसजेत्, एवं तर्हि सिद्धं पानकोच्चारणमन्तरेणापि शुद्धोदकपानं तथा च यथा दिनचरिमप्रत्याख्यानेऽनुच्चारितेषु अपि पानकाकारेषु रात्रौ

गृहस्थाः शुद्धोदकं पिबन्ति, तथाऽन्येष्वपि एकाशनादिषु दैवसिकप्रत्याख्यानेषु पिबन्तु समानयोगक्षेमत्वात्; किं च खर्ज्जूर-
तिलतन्दुलधावनावश्रावणादीनि पानकानि यथा रात्रौ गृहिणामपेयानि तथा दिवापि अपेयानि एव, तत्पानस्य धर्माभिमुखा-
नाम् अप्रतिपत्तिहेतुत्वेन, प्रतिपन्नानां विपरिणामहेतुत्वेन वैधर्मिकाणां जिनधर्मनिन्दाकृतौ प्रेरकत्वेन च महादोषत्वात्, तथा
न तेषां पानकाकारोच्चारणम् अनर्थकमेव; ननु नानर्थकं, यतो यद्यपि 'फोगरंगदाडिमच्छल्यादिभिः प्रासुकीकृतं जलं त्रिधा-
हारे पातुं कल्पत एव, तेषां कषायवृक्षफलछल्लीचूर्णत्वेन अनाहारत्वात्; तथापि विभीतकादिना प्रासुकीकृतं न कल्पते एव,
तस्य स्वादिमाहारत्वात् इति तदर्थं पानकाकारान् उच्चरन्तु गृहस्थाः ? इति चेत् न, वस्तुवृत्त्या विभीतकादेरपि कडुकफलत्वेन
अनाहारत्वात्; यदुक्तम् अनाहारो मोयछल्ली मूलकडुफलं च होइ अणाहारो, इत्यादि कल्पगाथाचूर्णौ 'मोयं काइयं छल्ली निंबा-
ईणं मूलं पंचमूलादि। कडुफलं च आर्द्रामूलकं, हरीतक बहेडगादि' त्ति, केवलं क्षीरामलकगुडविभीतकादीनि मधुरफलत्वात्
स्वादिमाहारा अप्येकजातीयत्वात् मा अनाहाराः स्युः, इत्यतिप्रसङ्गनिवारणार्थम् इत्यन्येऽपि स्वादिमाहारत्वेनैव व्यवह्रियन्ते,
तेषां तु एतान्यपि रोचन्ते, तेषामाहार एव, यथा उष्ट्रानां निम्बः, यदुक्तं कल्पभाष्ये 'जं वा सुक्खत्तस्स उ संकममाणस्स देइ
आसायं, सो सव्वो आहारो अकामणिट्ठं चणाहारो' त्ति, ततो यदा विभीतकादीन्यपि वस्तुवृत्त्या अनाहारस्ततः कथं तद् रस-
भावितं जलं स्वादिममिश्रं स्याद्, येन तत्पायिनां पानकाकारोच्चारणं सार्थकं स्यात्; ननु एवं तर्हि यतयोऽपि एतान् मा उच्च-
रन्तु ? नैवं; तेषां भिक्षाचरत्वात् अन्यार्थनिष्ठिताहारभोजित्वाच्च, ततस्ते यथाकृतं पानकं क्वचिदेव किंचिदेव लभंते, ततः

प्रत्याख्यानभङ्गरक्षणार्थम् अवश्यमेव पानकाकारान् उच्चरन्ति एव; एतानेवोद्दिश्य अस्य प्रत्याख्यानस्य सूचितत्वात् यदमीषां गर्ज्जूरतिलतन्दुलादिधावनानि आम्लावश्रावणादीनि वा सूत्रोक्तयतनया पिबतां न कश्चिद् धर्मोपहासो भवति, भिक्षाचरत्वात्, प्रत्युत यदि कश्चिज्जानीयात् तदा प्रशंसेदेव, यथा अहो दृढधर्मता जितेन्द्रियता चामीषां यद् इन्द्रियाणामप्यायकमपि कल्पनीयमेव पानकं पिबन्ति, न पुनः प्रपादिषु सर्वसाधारणतया सुलभमपि शीतलं स्वच्छं जलम् अकल्पनीयमिति; । नन्वेवं तर्हि दिवसचरिमेऽपि एते पानकाकारान् उच्चरन्तु, तत्करणानन्तरमपि एभिस्त्रिधाहारत्वेन पानकस्य पीयमानत्वात् ? इति चेत् नैवं, नहि एतदमीषां रात्रिभोजनस्य प्रत्याख्यानं तस्य व्रतारोपकाले एव तैः 'सव्वं भंते राईभोयणं पच्चक्खामि से असणं वा पाणं वा, खाइमं वा, साइमं वा, नेव सयं राइं भुंजिज्ज, इत्यादिना प्रत्याख्यातत्वात्; यदि पुनरिदं रात्रिभोजनप्रत्याख्यानं त्रिधाहारं स्यात्, तदा उच्चारयेरमेव पानकाकाराः प्रागुच्चारितानामेव एषां दैवसिकत्वेन आदित्यास्तगमनावधित्वात्, नचैवं रात्रौ जलस्य अपानात्; नापि एकाशनाद्याकाराणामिव तत्सहकृतानां पानकाकाराणामपि संक्षेपकं त्रिधाहारत्वात्; किं तर्हि ? आपवादिकभोजननिषेधकं; ततोऽस्मिन् कृते पारिष्ठापनिकादिकारणे उपस्थितेऽपि न भुञ्जते, पानकं तु सर्वमपि पिबन्त्येव अप्रतिषिद्धत्वात्, प्रतिषेधश्च अनेनैव चतुर्विधाहारप्रत्याख्यानेन पानकाहारप्रत्याख्यानेन वा भवति, नान्यथा, ततस्तयोरकृतयोः कथं पानकाकारानुच्चरन्ति यतयः, ननु इदमुत्तरं गृहिणामपि समानमेव ? नैवं, तेषां दिवसचरिमप्रत्याख्यानस्य प्रायो रात्रिभोजननिषेधकत्वात्; ते हि अनेनैव कृतेन सामान्यतोऽभ्युपगतेन वा निरुद्धा, रात्रौ न भुञ्जते, अन्यथा भुञ्जीरन् अगृहीतरात्रिभोजन-

नियमत्वात्, तथा च एकाशनादौ कृतेऽपि दिवा भोक्तुम् अप्रभुता रात्रावपि भुञ्जीरन् अप्रतिबद्धत्वादिति न गृहस्थयत्योः साम्यम्, इति सिद्धं यतय एव पानकाकारान् उच्चरन्ति न गृहस्था इति भावः ॥ १०७ ॥

इत्युक्त आलोचनातपसः करणविधिः, अथैतस्मिन्नन्यस्मिन् वा कल्याणकादिसम्बन्धिनिर्विकृत्यादितपसि यन्न कल्पते तदेकयुक्त्यैवाह—

**पायच्छित्तविसोहणकरणक्खम्मम्मि तवम्मि पारद्धे ॥ जलपिवणं कप्पइ नो निसाइ निव्वियाइ सेसतवे ॥ १०८ ॥**

व्याख्या—यद्यपि प्रायश्चित्तं विशोधकमेव आलोचनादि उच्यते, तथापि अत्र तद्विशोध्यं कश्मलकर्मजं पापमेव ज्ञेयं, तस्य विशोधनम् अपमार्जनं, तत्र क्षमे समर्थे प्रायश्चित्तविशोधनकरणक्षमे, 'तपसि' एकाशनादिके पञ्चविधेऽपि जलपानं न कल्पते निशायां तथा निर्विकृत्यादि, निर्विकृत्याचाम्लोपवासरूपे, शेषस्य आलोचनाव्यतिरिक्तस्य कल्याणकादेः तपःशेषतपस्तस्मिन् शेषतपसि अपि, अप्यत्र द्रष्टव्यः पुरिमार्द्धैकाशने मुक्त्वा शेषतपसो रात्रौ जलपानस्य नियम इत्यर्थः ॥ १०८ ॥

इत्युक्तम् आलोचनाव्यतिरिक्तपूरिमार्द्धैकाशने मुक्त्वा शेषतपस्सु सर्वेष्वपि रात्रौ जलपानस्य अकल्पनीयत्वम्, अथ सामान्यतो निर्विकृत्यादिषु अपवादत एव बाह्यतोऽपि विकृतिपरिभोगः कार्यो नोत्सर्गत इत्याह—

**पायाईणब्भंगो निव्वियायंबिलोववासेसु ॥ वायाइपीडिएहिं कायव्वो अन्नहा न करे ॥ १०९ ॥**

व्याख्या—'पादादीनाम्' अङ्गावयवानाम्, अभ्यङ्गो घृततैलादिना म्रक्षणं, निर्विकृत्याचाम्लोपवासेषु, आलोचनायाः कल्याण-

कादेर्वा सम्बन्धिषु, वातादिपीडितैरेव, आदिशब्दात् श्रमादि गृह्यते, वातश्रमादिव्यथितैरेव इत्यर्थः ॥ अन्यथा वातादिपीडायाम् असत्यां गुणार्थं शोभार्थं वा, न कुर्यात्, विरतीनां लोमाहारस्यापि कावलिकाहारवत् पुष्टिजनकत्वेन प्रस्तुततपसो विरुद्धत्वात्, इत्येवं पञ्चविधेऽपि तपसि प्रभूतशः कृते यदा गुरवो मिलन्ति तदा तदग्रे आकम्प्यदोषम् ।१। अनुमान्यदोषं ।२। दृष्टदोषं ।३। बादरदोषं ।४। सूक्ष्मदोषं ।५। छन्नदोषं ।६। शब्दाकुलदोषं ।७। बहुजनदोषम् ।८। अव्यक्तदोषम् ।९। तत्सेविदोषम् ।१०। इत्येतान् दशापि आलोचनादोषान् वर्जयन् प्रवर्द्धमानसंवेगः सर्वमपि आत्मदुष्कृतम् आलोचयति, यदुक्तं भगवत्यां—दस आलोयणा दोसा पन्नत्ता, तं जहा आकंपइत्ता अणुमाणइत्ता जं दिट्ठं बायरं च सुहुमं वा छन्नं सद्दाउलयं बहुजण अव्वत्त तस्सेवी एयद्दोसविमुक्कं पयसमयं वद्धमाणसंवेगो आलोए अम्भकज्जं, न पुणो काहंति निच्छयओ त्ति, तत्र। आकम्प्य आवर्जितः सन्नाचार्यः स्तोकं प्रायश्चित्तं मे दास्यतीति बुद्ध्या आलोचनाचार्यं वैयावृत्त्यकरणादिना आवर्ज्य यदालोचनम् असौ आकम्प्यनामाऽऽलोचनादोषः ।१। 'अणुमाणइ त्ति' अनुमान्य अनुमानं कृत्वा लघुतरापराधनिवेदनेन मृदुदण्डादित्वम् आचार्यस्य आकलय्य यदालोचनाम् असौ अनुमान्यनामाऽऽलोचनादोषः ।२। यद् आचार्यादिना दृष्टं श्रुतं वापराधजातं तदेव आलोचयति, एष दृष्टनामाऽऽलोचनादोषः ।३। बादरमेव अतिचारजातम् आलोचयति न सूक्ष्मं, तदावज्ञापरत्वात् बादरदोषः ।४। सूक्ष्मातिचारजातम् आलोचयति, यः किल सूक्ष्मं तदालोचयति स कथं बादरं नाऽऽलोचयति, एवं रूपभावसंपादनायाचार्यस्य इत्येषः सूक्ष्मदोषः ।५। छन्नं प्रच्छन्नम् अतिलज्जालुतया अव्यक्तवचनं यथा भवति एवम् आलोचयति, यथा आत्मनैव शृणोति, एष छन्नदोषः ।६। शब्दाकुलं बृहच्छब्दं यथा भवति एवम् आलो-

बहवो जना आलोचनागुरवो यत्रालोचने तद् बहुजनं यथा भवति
चयति अगीतार्थान् श्रावयन्नित्यर्थः, एष शब्दाकुलदोषः ७, बहवो जना आलोचनागुरवो यत्रालोचने तद् बहुजनं यथा भवति
ग्त्रम् आलोचयति, यथा एकस्यापि अपराधस्य बहुभ्यो निवेदनमित्यर्थः, एष बहुजनदोषः ८, अव्यक्तो गीतार्थः तस्मै आचा-
र्याय यदालोचनं तद् अप्यव्यक्तम् इत्युच्यते एषोऽव्यक्तदोषः ९, यम् अपराधम् आलोचयिष्यति तमेव आसेवते यो गुरुः स
तत्सेवीति, यतः समानशीलाय गुरवे सुखेनैव विवक्षितापराधोऽपि निवेदयितुं शक्यते इति तत्सेविने निवेदयति, इत्येष तत्से-
विदोषः १०, इत्येतद्दोषवर्जनपूर्वकम् आलोचिते गुरुभिश्च यथापराधं प्रायश्चित्ते दत्ते पूर्वकृतं तपस्तत्र प्रवेशनीयम् इत्यर्थः ॥१०९॥
इत्युक्त आगमोक्तायाः तपोरूपाया आलोचनायाः करणविधिः, अथ यो बहुत्वात् शरीराशक्तत्वादन्यतोऽपि वा कुतोपि कारणाद्
एनां यथोक्तां संपूर्णां कर्तुं न प्रभवति, अथ च स्वच्छाशयत्वात् एनामृणमिव शोधयितुं वाञ्छति, स कथं करोति ? इति
प्रश्नस्य उत्तरमाह

आलोयणाविसुद्धिं जो काउं वंछए स सज्झायं । वज्जिउं कालवेलं करेइ ताउ इमे चउरो ॥ ११० ॥

व्याख्या—यद्यपि गुरोः स्वापराधनिवेदनमेव आलोचना उच्यते, तथाप्यत्र कार्ये कारणोपचारात् आलोचनापूर्वकं प्रायश्चि-
त्तमपि आलोचना भण्यते, तत आलोचनायास्तपोरूपप्रायश्चित्तस्य विशुद्धिं शोधनं पूरणमित्यर्थः, 'आलोचनाविशुद्धिं' यः
कश्चित् शुद्धात्मा कर्तुं वाञ्छति, स 'स्वाध्यायं' परिवर्त्तनारूपं 'वर्जयित्वा' परिहृत्य 'कालवेलां' दुष्टवेलां करोति, यतोऽसौ प्रायः
सर्वेष्वपि धर्मगच्छेषु जीतव्यवहारेण प्रायश्चित्ततयापि व्यवह्रियते एव, अस्य तपोऽपेक्षया अधिकगुणत्वात्, तथाचोक्तं निशी-

थभाष्ये। बारस विहम्मि वि तवे अब्भिन्तरे बाहिरे कुसलदिट्ठे। न वि अत्थि नवि य होही सज्झायसम्मं तवो कम्ममिति, ॥१॥ एतच्च प्रागेव भावितं, तथाच अशीतिशत्या एकाशनं, सप्तसत्या निर्विकृतिकं, सहस्रेण आचाम्लं, द्वाभ्यां सहस्राभ्याम् उपवासः, सोध्यते, ताः पुनः कालवेलाः 'इमा' वक्ष्यमाणाः, पुंलिङ्गत्वं प्राकृतत्वात् चतस्र इत्यर्थः ॥११०॥ अथ तत्स्वरूपमेव विवरीतुमाह

**चउपोरिसिओ दिवसो दिणमज्झंते य दुन्नि घडियाओ। एवं रयणीमज्झे अंतंमि य ताओ चत्तारि ॥ १११ ॥**

व्याख्या चतस्रः पौरुष्यः प्रहरा यत्र असौ चतुःपौरुषीकः, 'दिवसो' दिनस्य विभक्तिलोपः प्राकृतत्वात्, 'मध्ये' पादोनद्विप्रहरोर्ध्वम्, अन्ते च सन्ध्यायां, द्वे द्वे अगृहीत वीप्सोऽपि द्विशब्दोऽर्थवशाद् वीप्सां गमयति, 'घटिके' लघुघटिके, कालवेला भवतीति वाक्यशेषः, दिने द्वे द्वे लघुघटिकामाने द्वे कालवेले इत्यर्थः, 'एवं' दिवस इव, 'रजनी' रात्रिश्चतुःपौरुषीका, तस्या अपि 'मध्ये' अन्ते च द्वे द्वे घटिके द्वे कालवेले इत्यर्थः, एवं दिवसे इव रजन्यां द्वे कालवेले, तथाच ताः द्वे कालवेला द्वे दिवसे द्वे च रात्री, एवं चतस्र इति, ननु कालवेलावर्जनं निर्ग्रन्थानामेव युक्तं, तेषामेव आगमपाठित्वेन उक्तत्वात्, तथाहि निशीथे 'नो कप्पइ निग्गन्थाणं वा निग्गन्थीणं वा चउहिं महाकालवेलाहिं सज्झायं करित्तए, तंजहा पढमाए १ मज्झण्हे २ पच्छिमाए ३ अड्ढरत्ते ४ इति। किंच सर्वसावद्यव्यापारनिवृत्तत्वेन स्वमनःस्थिरीकरणार्थम् अहोरात्रं स्वाध्यायं कुर्वत एतान् दृष्ट्वा मा लोको गर्हिष्ट, यथा धिग् धिग् अमीषां बहुशास्त्रपठनं, यदेतावदेव न जानते,

कालवेलायां हि सन्ध्यावन्दनवैश्वदेवतर्पणहोमादिप्रायं शान्तिककर्मैव कर्तुमुचितं
तत्कस्यां वेलायां किमपि कार्यं कर्तुमुचितमिति, यदि वा सोऽपि कर्त्तुमुचितो, यदि सर्वज्ञभाषितो न भवेत्,
न स्वाध्यायः, तस्य परमतत्त्वात्मकत्वेन दुष्टवेलायामतिगोप्यत्वात्, तथा चेदस्ति तदासौ अस्यां वेलायां विशेषेण गोपनीयः, सलक्षणत्वे-
परमेते एवं भणन्ति, यदस्मदीय आगमः सर्वज्ञभाषित एव, "सलक्खणमिदं सुत्तं जेण सव्वन्नु भासियं॥ सव्वं च लक्खणोवेयं
नास्य देवताधिष्ठितत्वात्, यदुक्तमेषामेव आगमे व्यवहारभाष्ये प्रायस्तस्य श्रेयोरूपत्वेन बहुविघ्नत्वादिति, आबालगोपा-
समहिट्ठिति देवतात्ति, सदेवतं च वस्तु अशुभवेलायां यत्नेन रक्ष्यते, तथा सन्ध्यासु संचरन्तो गुह्यकदेवाः स्वाध्यायासक्तत्वेन
लानां प्रसिद्धमपि अजानानाः कथमिव सर्वज्ञपुत्रका एते भण्यन्त इति, तथा अविश्रान्त्या स्वाध्यायं कुर्वन्तोऽमी
निरवधानानेतान् मा छलयन्, तथाऽवश्यकार्ये आवश्यके माऽमी अनुपयुक्ताऽभूवन्, साधूनामेव आज्ञाभङ्गादिदोषप्रदर्शनेन निषि-
मा कथ्यतामित्यादि कारणमाश्रित्य अतिवत्सलैः परमाप्तैः कालवेलासु स्वाध्यायः जो कुणइ आणमाईणि ॥ १ ॥
द्धः, तथाहि निशीथभाष्ये 'पुव्वावरसंज्झाए मज्झण्हे तह य अद्धरत्तम्मि ॥ चउसंझा सज्झायं, इति, ननु श्राद्धानां तेषां गृह-
लोएवि होइ गरिहा संझासु उ गुज्झगा पविचरंति ॥ आवासगउ व ओगो आवासो चेव खिन्नाणं ।२। उत्सर्गतो वर्ज्यमेव, तेषामपि
स्थत्वेन पूर्वोक्तकारणासंभवादिति चेत्, नैवं, यतो यच्छ्रमणानां वर्ज्यं तच्छ्रमणोपासकानामपि यदि ते कालवेलात्वात् स्वाध्यायं
मोक्षार्थित्वात्, ननु भवन्तु मोक्षार्थिनस्तथापि गृहकार्यव्यग्रत्वात्, कथमपि प्रभूता अपि सन्तो तथाच महादोषस्ततो वरं तदापि
न करिष्यन्ति, ततो बहुकार्यत्वात् पुनरपि अन्यस्मिन् कस्मिंश्चित् सावद्यव्यापारे प्रवर्त्स्यन्ति,

स्वाध्यायकरणम् ? इति चेत्, उच्यते–स्यादेव स्वाध्यायस्य तदा निषेधोऽनर्थफलो यदि कालवेलासु अन्यधर्मकृत्यं कार्यतयोपदिष्टं नाभविष्यत्, नचैवमस्ति, तदाहि तेषां 'समणेण सावएण य अवस्स कायव्वयं हवइ जम्हा ॥ अंतो अहोनिसिस्सा तम्हा आवस्सयं नाम १, इत्यनेन आवश्यककरणं, काले सुइभूतेणं विसिट्ठपुप्फाइएहिं विहिणा उ ॥ सारत्थुइ वुत्तगरूई जिणपूया होइ कायव्वा, इत्यनेन पूजाकरणं चोपदिष्टमस्ति, यथा पूजाकालश्चोत्सर्गतः कालवेला एवेति वृत्तिकृता व्याख्यातमस्ति, सूत्रकृतापि एवमेवोक्तमस्ति, यथा 'सो पुण इह विन्नेओ संझाओ तिन्नि ताव ओहेणमिति', ततो यदि ते प्रभूतास्तदा तत्क्षणे आवश्यकं वा देवपूजां वा सर्वकालविधेयत्वेन पञ्चपरमेष्ठिनमस्कारध्यानं वा करिष्यन्ति, न पुनः सावद्य कर्म धर्मार्थित्वात् इति न कश्चिद् दोषः, यदि वा मा कार्षुरावश्यकादिकं, तथापि स्वाध्यायं सावद्यकर्म प्रतिरोधकमपि, तदा वर्जयन्त्येव, प्रतिनियतकालविधेयत्वेन तस्य लोकेऽपि लोकोत्तरेऽपि तदावर्ज्यत्वेनोक्तत्वात्, तथाहि चत्वारि खलु कर्माणि सन्ध्याकाले विवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च विशेषतः ॥१॥ आहाराज्जायते व्याधिः क्रूरगर्भश्च मैथुनात् । निद्रातो धननाशश्च स्वाध्याये मरणं भवेत् ॥२॥ इति, तथा व्यवहारभाष्ये 'रत्तीदिणाण मज्झे उभओ संझओ अविचरन्ति ॥ गुज्झगा केवि तेण तासिं तु नो सुयमिति, ततो यथावश्यकं पापव्यवहारप्रतिबन्धकमपि अकाले एते न कुर्वन्ति, एवं स्वाध्यायमपीति, ये पुनस्तदापि स्वाध्यायं कुर्वन्ति, ते श्रुताशातनाकारित्वात् भगवदाज्ञोल्लंघकत्वाच्च विराधका एव, ननु असंख्यभवकर्मक्षयहेतुः स्वाध्याय उक्तो यथा 'कम्ममसंखिज्जभवं खवेइ अणुसमयमेव माउत्तो ॥ अन्नयरम्मि वि जोगे सज्झायम्मी विसेसेण ॥१॥ ततोऽसौ दुष्टवेलायामपि अनुष्ठीयमानस्तपोवन्निर्जरा-

हेतुरेव, नहि अमृतं मरणक्षणे पीयमानं न जीवनहेतुः, किंच यद्यसौ सम्यग् ज्ञानहेतुत्वेन मोक्षहेतुस्तर्हि नास्य कश्चिदकालः,
यदुक्तं "को आउरस्स कालो मयलंबरधोयणे य को कालो ॥ जइ मुक्खहेउनाणं को कालो तस्साऽकालो वा" इत्यस्मिन् काल-
वेलासु क्रियमाणे कथं विराधना प्रसङ्गः संगतः स्याद् ? इति चेत् उच्यते, महानिर्जराहेतुरपि असौ, जिनकल्पवत् प्रतिसिद्धे
कालेऽनुष्ठीयमानः कर्मबन्धनिबन्धनमेव, यदुक्तं 'कामं सु वओगो तवो ववहारं अणुत्तरं भणियं ॥ पडिसेहियम्मि काले तहावि
खलु कम्मबंधायेति' अन्यैरपि कालवेलासु स्वाध्यायो न कर्त्तव्यः किं पुनः शुद्धिकामिभिरितिभावः ॥१११॥ आह किं कालवे-
लास्वेव स्वाध्यायो न गुण्यते, किं वा अन्यत्रापि कुत्रापि इत्यत आह

चित्तासोए सियसत्तमट्ठमीनवमि तिसु तिहीसुं पि । बहुस्सुयनिसिद्धमेयं न गुणिज्जुवएसमालाइ ॥ ११२ ॥

व्याख्या—'चैत्रो' मधुमासः, आश्वयुज आश्विनमासः, तयोः समाहारद्वन्द्वे चैत्राश्वयुजं भवति, तस्मिन् 'सितसप्तम्यष्टमीनव-
मीषु' विभक्तिलोपः प्राकृतत्वात् 'तिसृषु तिथिषु' अनुस्वारः प्राकृतत्वात्, अपिरुक्तः समुच्चये, ततो न केवलं कालवेलासु श्वेतस-
प्तम्यष्टमीनवमीरूपत्रितिथिष्वपि, बहुश्रुतैर्विशिष्टश्रुतधरैर्निषिद्धं मिथ्यादृष्टिदेवतापूजार्थं प्रवृत्तसार्वत्रिकमहाहिंसाजनितास्वाध्यायि-
कदर्शनात्, इतस्ततः संचरद् भोगार्थिक्षुद्रदेवताच्छलनाद्युपद्रवसंभावनाच्च 'निवारितं' बहुश्रुतनिषिद्धम्, एतत्स्वाध्यायकरणम्, इति-
रत्र द्रष्टव्यः, इतिहेतोर्न गुणयेन्न परिवर्तयेत्, 'उपदेशमाला' श्रीमहावीरशिष्यश्रीधर्मदासगणिविरचितत्वाद् आद्यं प्रकरणं, सा
आदिर्यस्य तदुपदेशमालादि प्रकरणजातम्, अयमभिप्रायो यद्यपि आगमे आषाढकार्त्तिकयोः श्वेतपक्षे त्रीणि त्रीणि, चैत्राश्वि-

असाध्यायकत्वेन उक्तानि सन्ति, तथाहि 'नो कप्पइ निग्गन्थाणं वा निग्ग-
ए, तंजहा आसाढपाडिवए ।१। इंदमहपाडिवए ।२। कत्तियपाडिवए ।३। सुगि-
तुर्दश्यां पूर्णिमायां प्रतिपदायां दिने दिने अश्वयुक्श्वेतपञ्चम्याम् इन्द्रमहोत्सवो
तुर्दश्यां पूर्णिमायां प्रतिपदायां दिनत्रये, चैत्रेऽपि आश्विने इव दिनद्वादशकं
आगमे प्रयुज्यते, इति सिद्धान्तस्यैव गुणनम् एषु दिनेषु निषिद्धमुचितं, तथाऽपि
न्दभूतानि प्रकरणानि अप्यागम एव, केवलं गणधरादिव्यतिरिक्तश्रुतधरप्रणी-
ण्येव 'अमूनि' सप्तम्यादीनि दिनानि, अतिमहा-महत्त्वराद् अस्वाध्यायिकत्वेन
ेत् शुद्धिकामी श्रुतधराचीर्णस्य अनुल्लंघनीयत्वादिति ॥ ११२ ॥ अथादिश-
ापट्केन दर्शयन्नुपसंहरति
: । सयरी कम्मविवागं छयासि य तह दिवड्ढसयं ॥ ११३ ॥
सुद्धिं च । पडिकमणसमायारिं थेरावलियं सपडिक्कमणं ॥ ११४ ॥
च । पच्चक्खाणं तह पंचसंगहं अणुचयाइविहिं ॥ ११५ ॥
गमुत्तं । सावयपन्नत्ति नरयपन्नत्तं सम्मसत्तारियं ॥ ११६ ॥

सिद्धन्तपरमत्थो ॥ ११७ ॥
अट्ठयसोडसगाइं तह वीसं वीसियाउ पसमरई । जिणसत्तरियं एवमाइं जत्थ सिद्धन्तपरमत्थो ॥ ११७ ॥
भन्नइ तं सेसं पि हु पवयणमिह चउसु कालवेलासु । न गुणिज्जा सेयासुं चित्तासोए तिसु तिहीसु ॥ ११८ ॥

व्याख्या—उपदेशपदानि पञ्चाशकानि च तथा शब्दाः सर्वेऽपि समुच्चये, पञ्चवस्तुकशतकं, सप्ततिकां कर्मसप्ततिमित्यर्थःकर्म-
विपाकं षडशीतिं, तथा द्व्यर्द्धशतम् ॥११३॥ 'जीवसमासं'संग्रहणिकर्मप्रकृती द्वित्वे बहुत्वं प्राकृतत्वात्, 'पिण्डशुद्धिं पिंण्डविशुद्धि-
मित्यर्थः, 'प्रतिक्रमणसमाचारीं, स्थविरावलिकां सह प्रतिक्रमणं नाम प्रतिक्रमणसूत्रसहितामित्यर्थः ॥११४॥ सामायिकचैत्यवन्दन
कानि प्रतीतानि, बहुत्वे एकत्वं समाहारवशात्, कायोत्सर्गसूत्रं च प्रत्याख्यानं, तथा पञ्चसंग्रहम् अणुव्रतादिविधिम् अणुव्रतशब्द
आदिर्यस्य स तथा तम् अणुव्रतविधिमित्यर्थः ॥ ११५ ॥ 'क्षेत्रसमासं' प्रवचनसंदोहोपदेशमालापञ्चसूत्राणि प्रसिद्धानि, नवरम्
उपदेशमाला अन्यकर्तृकी ज्ञेया, न तु धर्मदासगणिकर्तृकाः, तस्याः प्रागेव उक्तत्वात्, एकवचनं तु समासानुरोधात्, श्रावकप्रज्ञप्तिं
नरकवर्णनां, सम्यक्त्वसप्ततिकां दर्शनसप्ततिमित्यर्थः ॥११६॥ 'अष्टकानि षोडशकानि, तथा विंशति विंशतिका प्रशमरति जिन-
सप्ततिकाम् 'एवमादि' एवं प्रकारं, सिद्धान्तार्थपूर्वकत्वेन उपदेशमालादिसदृशमित्यर्थः, एतदेव विवृणोति—यत्र सिद्धान्तपरमार्थो
भण्यते तत् शेषमपि, अपरमपि हुर्निश्चये, प्रकरणमिह प्रवचने चतसृषु कालवेलासु निश्चयेन न गुणयेत्, श्वेतासु अनुस्वारः प्राकृ-
तत्वात्, न चैत्राश्वयुजे तिसृषु तिथिषु वचोऽत्र द्रष्टव्यः, अयमभिप्रायो यद्यपि अस्वाध्यायिकस्थितिः सिद्धान्तस्यैव तदभ्यासिनां
साधूनामेव आगमे साक्षादुक्ता दृश्यते, न प्रकरणानां न वा तत्पाठिनां श्राद्धानां तथापि आराध्यश्रुताशातनावर्जिभिः श्राद्धैर्-

परम्परागतः कालवेलासु चत्राश्वयुजश्वतसप्तम्यादादिनत्रय च प्रकरणपठनादिनिषेधः पश्चशतादेशवत् बहुमन्तव्य एव, अन्य-
र तु असाध्यायिकेऽपि अध्येयतया उक्ता निर्युक्तयोऽपि इन्द्रमहादिषु पठ्येरन् गुण्येरन् वा, न पठ्यन्ते गुण्यन्ते वा वृद्धैरनुक्तत्वात्,
स्माद् वृद्धप्रवादोऽपि आगमवत् प्रमाणिक एवेति ॥ ११७ ॥ ११८ ॥ इत्युक्तं यस्मिन् काले क्रियमाणः स्वाध्यायः कर्मब-
ाय जायते, तस्य वर्जनम्, अथैनं यथा नीत्या यैश्च वर्ज्यमानै-र्यया वा मुद्रया येन च प्रणिधानविशेषेण कुर्वाणः शुद्धिकामी
पूर्णमनोरथो भवति, तथोपदेष्टुं गाथाद्वयमाह

पढमं पडिक्कमिऊणं इरियावहियं जहासमायारिं । निंदं विकहं कलहं हासकिड्डाइं वज्जन्तो ॥ ११९ ॥
वयणदुवारे मुहणंतयं च वत्थंचलं अह दाउं । सुत्तत्थे उवउत्तो सज्झायं कुणइ सुणइ पढे ॥ १२० ॥

व्याख्या—प्रथममादौ प्रतिक्रम्य अनुष्ठाय ऐर्यापथिकीम् अनुष्ठानविशेषं, समाचार्या अनतिक्रमेण यथा समाचारि, अनु-
ारः प्राकृतत्वात् यथाविधि, निद्रां स्वापं, विकथां स्वाध्यायधाराविच्छेदकारिणीम्, अन्येन सह वार्त्ता, कलहं वाग्युद्धं, हासो
मक्रीडाद्यूतरमणादि ते आदी यस्य तत् हासक्रीडादि, आदिशब्दाद् बालकधात्रीत्वादिगृहव्यापाराणां ग्रहः 'वर्जयन्' परि-
रन्, स्वाध्यायावधानविरोधित्वादितिभावः ॥ ११९ ॥ 'वदनद्वारे'मुखाग्रे, मुखानन्तकं मुखवस्त्रिकां, चः पूरणे 'वस्त्राञ्चलं वा'
तरीयांशुकादिप्रान्तं वा, गृहीते सामायिके मुखवस्त्रिकाम्, अन्यदा तु वस्त्राञ्चलमपि इत्यर्थः, 'दत्त्वा' आत्मसंयमविराधना-
रिहरणार्थमेव इदमुपदिष्टं भगवद्भिरित्यर्हद्वचनबहुमानात् धृत्वा अत्राक्षिणी निमील्य हसतीत्यादिवत् निमील्यादिभेदस्तुल्य-

कर्तृके इत्यनेन सहकाले क्त्वाप्रत्ययः, ततो मुखद्वारे मुखवस्त्रिकां ददान एवेत्यर्थः, अन्यथा त्वसौ कर्मबन्धकार्येव सावद्यभाषि-
त्वात्, वस्त्रादिना मुखम् अनावृत्य ब्रुवाणो हि सावद्यभाषी एव, यदुक्तं भगवत्यां सक्केणं भंते देविंदे देवराया किं सावज्जं
भासं भासइ अणवज्जं वा? गोयमा? सावज्जं पि भासं भासइ अणवज्जं पि भासं भासइ? से केणट्ठेणं भंते एवं
वुचइ गोयमा? जाहे णं सक्के देविंदे देवराया सुहुमकायं अणिज्जूहित्ताणं भासं भासइ, ताहे सक्के देविंदे
देवराया सावज्जं भासं भासइ, जाहे णं सक्के देविंदे देवराया सुहुमकायं निज्जूहित्ता णं भासं भासइ, ताहे
अणवज्जं भासं भासइ त्ति, 'सुहुमकायं ति, सूक्ष्मकायं हस्तादिकं वस्तु इति वृद्धाः ॥ अन्ये तु वस्त्रमित्याहुः, 'अणिज्जू-
हित्त त्ति' अपोह्य अदत्त्वा हस्ताद्यावृतमुखस्यैव हि भाषमाणस्य जीवसंरक्षणतोऽनवद्या भाषा भवति, अन्यथा तु सावद्यैव, ततो यदा
वैक्रियशरीरिणः शक्रस्यापि अनावृतमुखत्वेन भाषमाणस्य भाषा सावद्या भवति, तदा सुतरां मनुष्याणां भाषा सावद्या भविष्यति,
तेषामौदारिकशरीरत्वेन शब्दोत्पत्तिनिमित्तप्रयत्नप्रेरितस्य मुखवातस्य उष्णत्वेन दुर्गंधत्वेन वातिशयेन जीवोपघातहेतुत्वादिति
भावः। अथ शब्द आनन्तर्यार्थत्वाद् ईर्यापथिकीप्रतिक्रमणानन्तरमेव शुद्ध्यर्थिना स्वाध्यायः कर्त्तव्यो नतु अन्तरं कार्यमिति द्योत-
यति, क्त्वाप्रत्ययेन तु पूर्वकालतामात्रमेवोक्तम्, नतु आनन्तर्यं, 'सूत्रार्थे' सूत्रेऽर्थे वा उभयस्मिन् वा 'उपयुक्तः' प्रणिधानवान् अनेन
तु इदमुक्तं, पुस्तकाद्युपरि अन्येन वा सह गुण्यमानोऽसौ नालोचनायां प्रविशति, तथा गुणनेहि प्रायः सूत्रार्थावधानाभावात्,
स्वाध्यायम् अष्टादश शीलाङ्गसहस्रादिकं करोति गुणयति आलोचनापूर्त्तावनङ्गेऽपि श्रवणपठने गुणनसमानविधिविधेये इति

सूत्रकृताप्रोक्ते इति, शृणोति संविग्नेन केनापि गुण्यमानम् अधीयमानं वा स्वाध्यायमाकर्णयति, पठति अधीत इत्यर्थः ॥ १२०॥ इति यथा कृतः स्वाध्याय आलोचनाशुद्ध्यै भवति तथोक्तम्, अथालोचनायां गृहीतायां लब्धेष्वनेकेषूपवासेषु कुतश्चिदाकस्मिकरोगादेर्जातायां सहजायां वा अशक्तौ सत्यामुपवासं कर्तुमशक्तः कथमेतत् शोधयतीति प्रश्नस्योत्तरं गाथाद्वयेनोक्तं तत्रेयं प्रथमा

चउरिक्कासणएहिं उववासो तह य निव्वियतएण । आयंबिलेहिं दोहिं यारसपुरिमड्ढ उववासो ॥ १२१ ॥

व्याख्या—चतुर्भिरेकासनकैरुपवासः, तथाचेति निपातसमुदायः समुच्चये, तथा निर्विकृतित्रयेणोपवासः, तथा द्वाभ्यामाचाम्लाभ्यामुपवासः, भवतीति क्रियात्र अध्याहार्या: तदपेक्षयैवहि कारकाणां प्रवृत्तेः, तथा द्वादशपुरिमार्द्धैरुपवासो भवतीति। नन्वादिश्यमपि उपवासपदं यथा निर्विकृत्याचाम्लपदाभ्यां सह क्रमेण योजितम्, एवं पुरिमार्द्धपदेनापि सह योज्यते, किं पुनरपि अस्य ग्रहणं कृतम्? इति चेद् उच्यते—एकासनादीनां करणत्वं विवक्षितं, तृतीयान्तत्वेन उपन्यस्तत्वात्, पुरिमार्द्धानां तु कर्तृत्वं प्रथमान्तत्वात्, ततः सामानाधिकरण्यार्थं पुनरपि उपवासपदस्य ग्रहणं कृतमिति न पौनरुक्त्यदोषः। ननु पुरिमार्द्धानां कर्तृत्वमपि किमिति विवक्षितम्? उच्यते तेषामेकासनादिभ्यो विभिन्नरूपतां सूचयितुं? सा चेयम्—एकासननिर्विकृत्याचाम्लैर्यथोक्तसंख्यैस्त्रिधाऽऽहारैरपि आलोचनायामुपवासो भवति, किं पुनश्चतुर्विधाहारैः; पुरिमार्द्धैस्तु चतुर्धाहारैरेव द्वादशभिरुपवासो न त्रिधाहारैर्यत उक्तं प्राग् "पुरिमड्ढतवो इह जो सो सव्वाहारचागाओ त्ति" ननु तथापि द्वादशपूर्वार्द्धोपवास इति, यदुक्तं तदसमीचीनमेव, आगमाचरणाबाधत्वात्, आगमेहि अष्टभिरेव पूर्वार्द्धैरुपवास उक्तोऽस्ति, तथाहि प्रायश्चित्तविधौ 'मासं कमेण

निव्वियपुरिमेगासणनिरुद्धखमणाणं पायजुत्तेक ।१। दुअट्ट २ पण ५ दस ॥ १० ॥ वीस २० तह विसोया, इति गाथायां सार्द्धौ
द्वावेव विशोपकौ पुरिमार्द्धस्य मानमुक्तम्, तौ च अष्टभिर्गुणितौ विंशतिर्विंशोपका उपवासस्य मानं भवतीति, तथा "कल्लाण-
गमावन्ने अतरंते जह कमेण काउं जो दस कारिंति चउत्थे तद्दिगुणायंबिलतवे वा एक्कासणपुरिमड्ढाणि निव्विगई चेव विगुणवि-
गुणा उ" इति व्यवहारभाष्यसार्द्धगाथा विवृतौ श्रीमलयगिरिणापि चूर्णिकारेण चाष्टभिरेव पूर्वार्द्धैरुपवास इति सूचितं, यतस्ताभ्या-
मुभाभ्यामपि दशानामुपवासानां स्थानेऽपवादतोऽशीतिः पूर्वार्द्धानि कार्याणीति तत्र व्याख्यातमस्ति, तथाहि कल्याणकं प्रायश्चि-
त्तम् आपन्ना ये यथाक्रमेण तत्कर्तुमशक्नुवन्तस्तान् दश चतुर्थानि कारयन्ति, तथापि अशक्नुवन्तस्तद् विगुणानि आचाम्लानि
तपः कारयन्ति, विंशतिमाचाम्लानि कारयन्तीत्यर्थः, एवमेकासनपूर्वार्द्धनिर्विकृतीन् द्विगुणात् द्विगुणान् कारयन्ति, किमुक्तं
भवति विंशत्याचाम्लकरणाशक्तौ चत्वारिंशदेकासनकानि कारयन्ति, तत्रापि अशक्तौ अशीतिं पूर्वार्द्धानि कारयन्ति, तत्रापि
अशक्तौ षष्ठ्याधिकं शतं निर्विकृतीकानां कारयन्तीति, ततो यदा दशानां भागेऽशीतिर्भवति, तदैकस्य भागेऽष्टौ एव भवन्तीति,
आचरणायां तु षोडशभिरेव पूर्वार्द्धैरुपवास उक्तोऽस्ति, तथाहि प्रायः सर्वसंमतोपधानविधौ 'आयरणाउ नेयं पुरिमड्ढा सोल-
सेहिं उववासोत्ति, इति चेन्न, नहि युगप्रधानगुरवः प्राणात्ययेऽपि आगमाऽऽचरणाबाह्यं प्ररूपयन्ति, तत्किमयं पक्ष आगमिक
आचीर्णो वा? उच्यते आगमिक एव? ननु कस्मिन्नागमे इदं भणितमस्ति? उच्यते महानिशीथे मध्यमवाचनायां यथोक्तोप-
धानतपःकरणासमर्थमुद्दिश्य द्वादशभिरेव पुरिमार्द्धैरुपवास उक्तोऽस्ति, तथाहि "तओ नाऊणं पियधम्मं दढधम्मं भत्तिजुत्तं

ताहे जाव इयं पच्छित्ताणं निव्वाहेउं समत्थो भवइ, ताव इयं कारविज्जा राईभोयणं च दुविहं तिविहं चउव्विहेण वा जहा सत्तीए पच्छित्तं दाविज्जइ तो, गोयमा ? पणयालाए नमुक्कारसहियाणं चउत्थं चउवीसाए पोरिसीहिं बारसेहिं पुरिमड्ढेहिं दसहिं अवड्ढेहिं छहिं निव्वीएहिं चउहिं एगट्ठाणेहिं दोहिं आयंबिलेहिं एगेण सुद्धअत्थंबिलेण" इत्यादि, नन्वेवं तर्हि जैनागमा अपि लौकिकागमवच्च सर्वज्ञपूर्वका परस्परविरुद्धार्थप्रतिपादकत्वादिति ? नैवं, विरुद्धार्थप्रतिपादकत्वं हि तदैव अमीषां स्याद्, यद्येते त्रयोऽपि एकेनैवाऽभिप्रायेण प्रवृत्ताः स्युः, न चैवमस्ति सर्वज्ञपूर्वकत्वादेव, यश्चामीषां भिन्नभिन्नोऽभिप्रायः, स सम्यगाम्नायगम्य एवेति, तत्त्वार्थिना तद्वेदिनो महाश्रुतधरा एवानुसरणीयाः, ते चात्रैवंविधमेव आम्नायं व्याचक्षते यथा–चतुर्विधाहारैरष्टभिरेव त्रिधाहारैर्द्वादशभिरेव, द्विधाहारैः षोडशभिरेव पूर्वार्द्धैरुपवासो भवतीति, शब्दविशेषानुयायित्वेन त्रयोऽप्येते पक्षा अविरुद्धा एव । नन्वेवं तर्हि अत्र त्रिधाहारैरेव द्वादशभिरुपवास इत्येव वक्तुं युक्तं, न चतुर्द्धाहारैरेवेति, तथा च 'पुरिमड्ढतवो इह जो' इत्यादि प्राक्तनगाथाविरोध इति ? चेत् सत्यं, किन्तु विशिष्टशुद्ध्यर्थमेव इत्यमुक्तं, यतो यथा द्विधाहारैरप्येकासनैश्चतुर्भिरुपवासो भवन्नपि आलोचनायां त्रिधाहारैरेव, अमीभिश्चतुर्भिरुपवासो भवतीत्येवमत्रापि विशेषमिति न कश्चिद् विरोध इत्यर्थः ॥ १२१ ॥

इत्युक्तं यावद्भिरागमिकैरेव लघुभिस्तपोभिरुपवासः पूर्यते तेषां तावत् संख्यानम्, अथ प्रायश्चित्तत्वेनाचीर्णेन यावता स्वाध्यायेन यावद्भिश्च शुद्धैकासनैरसौ पूर्यते तावदेव तत्संख्यानं द्वितीयगाथया प्राह

सज्झायसहस्सेहिं दोहिं एगो हविज्ज उववासो ॥ कारणउ कस्सइ पुण अट्ठहिं दोकासणेहिं च ॥ १२२ ॥

व्याख्या—'स्वाध्यायस्य' पुस्तकादिसहायान्तरानपेक्षित्वेन गुणितस्य गाथामानेन श्लोकमानेन वा 'सहस्रे, स्वाध्यायसहस्रे
ताभ्यां द्वाभ्यामेको भवेदुपवासः, तथा कारणतोऽत्यन्तहीनसत्त्वरक्षणाय याऽत्र ग्लानादिकारणमाश्रित्य कस्यचिदतिसुकुमार-
शरीरस्य नतु सर्वस्य, पुनःशब्द उपवासपूरकसैद्धान्तिकैकासनादितपोभ्यो भेदमाह—अष्टभिर्द्व्येकासनैश्चोपवासो भवतीति,
यदुक्तं—जह भणियं पच्छित्तं दिज्जा हिड्डस्स नउ गिलाणस्स । जाव इयं चावि सहइ तं दिज्जसहिज्ज वा कालमिति, एतावता
चेदमुक्तं भवति, अत्यन्तदुष्करतपश्चरणविधिश्रवणाद् आलोचनातो न भेत्तव्यं किन्तु अत्यन्तहीनबलैरपि एषा ग्राह्या एव,
यतोऽस्यां गृहीतायां जन्मप्रभृतिसंचितप्रबलकलिमलसाकल्यविलयस्य भावात्, अत्यन्ताशक्तादिदशोचितस्यापि प्रायश्चित्तस्य
भगवद्भिरुपदिष्टत्वाच्च, अत एव अगीतार्थानामालोचनादानं निषिद्धं तेषां द्रव्यक्षेत्रकालभावपुरुषप्रतिसेवनागतविशेषानभि-
ज्ञत्वेन द्रव्याद्यौचित्येन प्रायश्चित्तानि दातुमसमर्थत्वादिति भावः ॥ १२२ ॥ इत्युक्तोऽत्र अशक्तानुद्दिश्य प्रायश्चित्तकरणविधिः,
अथात्रैव सुकरे सुखलम्पटत्वाद् मन्दश्रद्धात्वाद्वा शक्तावपि मा प्रवर्त्ततामिति अतिप्रसङ्गनिवारणार्थमाह—

संतम्मि बले संतंमि वीरिए पुरिसकारि सन्तंमि ॥ जह भणियं सुद्धिकए करिज्ज आलोयणाइ तत्तं ॥ १२३ ॥

व्याख्या—'सति' विद्यमाने 'बले' शरीरसामर्थ्ये, 'सति वीर्ये' जीवशक्तौ मनउत्साहे वा, पुरुषाकारे अङ्गीकृत-निर्वाहकत्व-
लक्षणे सति, भणितस्य 'आलोयणानिमित्तं पारद्धतवम्मि, इत्याद्येकोनत्रिंशद् गाथोक्तस्य आलोचनाचार्येण दत्तस्य वाऽनतिक्र-
मेण यथाभणितम्, अयमभिप्रायो यत्तपोऽधुनैव ग्रन्थकृता आलोचनाचार्येण वा यथा कार्यतयोक्तं, तथैव तदिति 'शुद्धिकृते'

सकलकलिमलप्रक्षालनाय कुर्यात्, आलोचनायास्तप उपवासादिकम्, अन्यथा आज्ञाभङ्गानवस्थादयो दोषाः प्रसज्येयुः, यदुक्तं-'तस्स य पायच्छित्तं जं मग्गविऊ गुरू उवदिसंति। तं तह आयरियव्वं अणवत्थपसंगभीएण, इत्यर्थः ॥ १२३ ॥ ननु यस्तीव्र-श्रद्धोऽपि तथाविधबलवीर्याद्यभावाद् यथा भणितमालोचनातपःकेवलोत्सर्गरूपत्वात् कर्तुं न शक्नोति, तेन किं कार्यमित्याह—

अह नत्थि सरीरबलं तवसत्ती वि हु न तारिसा होइ। भावो विज्जइ सुद्धो ता अववाएण कुज्ज तवं १२४

व्याख्या—अथेति पक्षान्तरे 'नास्ति' न भवति 'शरीरबलं' देहसामर्थ्यं तपःशक्तिरपि हुर्निश्चये, 'न तादृग् भवति' यादृश्या यथा भणितम् आराध्यते, उपवासादौ कृते झटित्येव शिरोऽर्त्त्यादिविकारप्रादुर्भावात् केवलं भावोत्साहो विद्यते 'शुद्धो' निष्कपटः, 'ता' तदा, अपवादेन एकासनचतुष्कादिकरणरूपेण भवेत्, तप उपवादिकं कर्त्तव्यमिति शेषः, तादृश्यां ह्यवस्था यामेवमपि कुर्वाण आराधक एव, यदुक्तं 'न हु किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिन्देहिं। एसा जिणाणमाणा कज्जे सच्चेण होयव्वं, इत्यर्थः ॥ १२४ ॥ इत्युक्त औत्सर्गिक आपवादिकश्चालोचनातपःकरणविधिः, अथानेनापि विधिना उत्सर्गे अपवादेऽपि वा प्राप्ते यो गुर्वनुज्ञया एव आलोचनातपः करोति, स एव मोक्षलक्षणं फलम् अश्नुते इत्याह—

सुगुरूणं आणाए करिज्ज आलोयणातवं भव्वो ॥ इय भणियसुत्तविहिणा सो लहु परमप्पयं लहइ १२५

व्याख्या—'सुगुरूणां' संविग्नधर्माचार्याणाम् 'आज्ञया' उपदेशेन, 'कुर्यात्' करोति, य इति पदमत्र ज्ञेयं यत्तदोर्नित्या-भिसंबन्धाद्, 'आलोचनातपः' प्रायश्चित्तं 'भव्यः' शुद्धधी, इति, एवं, 'भणितसूत्रविधिना' प्रागुक्तसूत्रनीत्या, स 'लघु' शीघ्रं

'परमपदं' मोक्षं, लभते, विशुद्धचित्तत्वात्, यदुक्तम्—आलोइए समाणे सम्मं पुव्वोदितेण विहिणाओ। दिंति गुरू पच्छित्तं जह भणियं वीयरागेहिं,॥ दिंति गुरू पच्छित्तं दव्वं खित्तं च कालभावं च। परिचिंतिऊण सम्मं जह सोही जायए तस्स ॥ तह विहियाणुट्ठाणं जम्हा आलोयणाविसोही य। जिणवयणसुट्ठिएणं तम्हा उभयंपि कायव्वं॥ उभयं सेवंताणं विसुद्धचित्ताणं भव्वसत्ताणं। केवलणाणुप्पत्ती दिट्ठा समए अणंताणमित्यर्थः ॥१२५॥

इत्युक्तं सुगुरुवचनेनैव क्रियमाणस्य औत्सर्गिकस्यापवादिकस्य चालोचनातपसः फलम्, अथ कुगुरुदत्ताऽऽलोचना प्रमाणमप्रमाणं वेति यत्पृष्टं तदुत्तरदानार्थमनुवदति—

केणावि सावएणं मुद्धेणं सिढिलसूरिपासम्मि। आलोयणा य गहिया पमाणमिह किं न सा होइ ॥१२६॥

व्याख्या—'केनापि' अनिर्दिष्टनाम्ना श्रावकेण, अनुस्वारः प्राकृतत्वात्, 'मुग्धेन' प्रवचनकौशल्यादिगुणरहितेन, लिङ्गमात्रभ्रान्तेन वा, 'शिथिलसूरिपार्श्वे' क्रियाभ्रष्टाचार्यसमीपे, आङ्मर्यादायां, "लोकृ दर्शने" इति धातुश्चुरादौ, तत आलोचनं 'जह बालो जंपन्तो कज्जमकज्जं च उज्जुयं भणइ। तं तह आलोइज्जा मायामयविप्पमुक्को येति' मर्यादया गुरोः पुरतः स्वापराधप्रकाशनम् आलोचना तथा च, यद्यपि आलोचना विकटना भण्यते, तथापि कार्ये कारणोपचारादालोचनान्तरं गुरवो यत्प्रायश्चित्तं ददति तदेवात्र आलोचनोच्यते, चोऽनुक्तसमुच्चये, ततो न केवलं वन्दनादिप्रतिपत्तिपुरस्सरं स्वदुश्चरितं तस्य निवेदनं तत् दत्ता प्रायश्चित्तरूपालोचना, नापि गृहीता स्वीकृता सा चशब्दोऽग्रस्थोऽपि अत्र योज्यते सा प्रमाणं युक्ता कर्त्तव्येत्यर्थः। 'इह' जिनधर्मे किं न

अथ न प्रमाणं भवतीति यत्पृष्टमासीत् शेष इत्यर्थः ॥ १२६ ॥ अथोत्तरं दातुकामः स्वयमेव पातनिकामाह तत्रोत्तरमिति तत्र एवंविधे प्रश्ने उत्तरमिदं तदेवाह

जमगीयत्थो सिढिलो आउट्टिपमायदप्पकप्पेसु ॥ न वि जाणइ पच्छित्तं दाउं अह तं परं देइ ॥ १२७ ॥

व्याख्या—'जं' यस्मात्कारणात् अगीतार्थः सुखीत्वेन अपरिणतधर्म्मतत्त्वेन वा प्रायोऽनभ्यस्तसिद्धान्तार्थः 'शिथिलो' द्रव्याचार्यः, यद्यपि शिथिलो गीतार्थोऽपि संभवति, तथाप्यप्राप्तो न गृहीतो ग्रहस्थैर्दुर्लक्षत्वात्, यदि वा लक्ष्यतां कथमपि' तथापि तस्यापि पार्श्वे सशल्यमरणभयाद् अन्त्यावस्थायामेव आलोचनाग्रहणस्य उक्तत्वाच्च; तत इत्यत्राध्याहार्यं, ततः कारणात् आकुट्टिरूपे प्राणातिपातादिकरणं, ॥१॥ दर्पो धावनवल्गनादिकट्टनवल्गनादिकः ॥२॥ प्रमादः, कन्दर्पादिः, मद्यादिकं वा, निरव-धानतया प्राणातिपातादिकरणं वा ॥ ३ ॥ कल्पः कारणेन गीतार्थस्य उपयुक्तस्य यतनया आधाकर्म्मादिसेवनं ॥ ४ ॥ यदुक्तं । जीतकल्पभाष्ये 'आउट्टिया उवेच्चा दप्पो पुण होइ वग्गणाईओ । कंदप्पाइ पमाओ कप्पो पुण कारणे करणमिति', ततो द्वन्द्व-स्तेषु, दर्पात्पूर्वं प्रमादस्येह उपन्यासो गाथाबन्धानुरोधात्, अन्यथा दर्पात्प्रमादस्य लघुतरापराधत्वेन उत्तरमेव न्यासो न्याय्यः, तथाहि जीतकल्पे—आउट्टियाइ दप्पपमायकप्पेहिं वा निसेविज्ञा इति, तथाऽन्यत्रापि उक्तं "तह आउट्टियाइ दप्पप्पमाओ कप्पओव जयणाए कज्जे वाइय जयणाए जहट्ठियं सव्वमालोए" नापि अपिरेवार्थः, नैव जानाति, नैव बुध्यते, पापं छिनत्तीति पापच्छित्, अथवा प्रायो बाहुल्येन चित्तं जीवं मनो वाऽतीचारमलमलिनं शोधयतीति निरुक्त्या प्रायश्चित्तम्, आर्षत्वात् प्राकृते पच्छित्तं, यदुक्तं पाव

छिंदइ जह्मा पायच्छित्तं तु भन्नए तेण पाएण वा वि चित्तं सोहइ य तेण पच्छित्तमिति, प्रायश्चित्तं ह्यालोचनादिदशप्रकारात्मक-
त्वेन आकुट्टयादि प्रतिसेवनाभेदापेक्षकापत्तित्वेन द्रव्यक्षेत्रकालभावपुरुषाद्यनुसारिदानत्वेन चातिगहनमिति, तद्दातुम् अर्पयितुम्,
अयमभिप्रायः—प्रथमं तावदसौ स्थूलमतित्वात् अपरिशीलितागमत्वाद् वृद्धाननुजीवित्वाद् वा आकुट्टयादीनां स्वरूपमेव न
जानाति, कुतस्तत्पूर्वकत्वेन भिन्नभिन्नां प्रतिसेवनां, तद्विपयत्वेन च भिन्नं भिन्नं प्रायश्चित्तं दातुं जानाति, तद्विशेषेण न
जानाति, यदुक्तं पडिसेवणा चउद्धा आउट्टिपमायदप्पकप्पेहिं । न वि जाणइ अगीओ उस्सग्गववाइयं चेवत्ति, अथेति पक्षान्तरे,
अजानानोऽपि धृष्टत्वात् प्रायश्चित्तं परमधिकम् अप्रायश्चित्तेऽपि प्रायश्चित्तं, प्रायश्चित्ते वा प्राप्तेऽतिमात्रमित्यर्थः, ददाति तदा
श्रुतधर्माशातनाकारितया विराधक एवासौ इति वाक्यशेषः, यदुक्तम्—अपच्छित्ते य पच्छित्तं पच्छित्ते अइमत्तया धम्मस्सा
सायणा तिव्वा मग्गस्स य विराहणात्ति, अतः शिथिलसूरिसमीपे गृहीतालोचनाऽनर्हत्वेन दत्तत्वात् स्वकपोलकल्पितैः प्रायश्चित्तैः
शुद्ध्यभावाच्च न प्रमाणमित्यर्थः ॥ १२७ ॥ नन्वेवं दायकस्यैव दोषो, यः सम्यगविज्ञाय प्रायश्चित्तं ददाति, न तु ग्राहकस्य
तस्य त्रिकरणविशुद्धत्वात्, ततो यथा धार्म्मिकमपि परमान्नं भुञ्जानस्य क्षपकसाधोस्त्रिकरणविशुद्धतया केवलज्ञानोत्पत्तिहेतुः
सिद्धिरभूद् एवमस्यापि तामालोचनां कुर्वतो भविष्यतीत्यत आह—

तत्थ वि गाहगस्स वि दोसो सो दायगस्स अहिययरो ॥ तित्थगराणाभंगो आणा वेसा जओ भणियं १२८

व्याख्या—'तत्र' तस्यामालोनायाम् 'अस्ति' भवति 'ग्राहकस्यापि' आलोचकस्यापि दोषः, संसारगर्त्तापातरूपः, "सल्लुद्ध-

रणनिमित्तं गीयस्स अन्नेसणा उ उक्कोसं। जोयणसयाइं सत्त उ बारस वरिसाइं कायव्वा," इत्यादि, तीर्थकराज्ञोल्लंघनात् स दोपः, दायकस्य अगीतार्थाचार्यस्य अधिकतरः, तीर्थकरासंमतमानमायागौरवदायकत्वेन तस्य आत्मपरवञ्चकत्वात् यदुक्तम्, "अगीओ न वियाणाइ सोहिं चरणस्स देइ ऊणहियं। तो अप्पाणं आलोयगं च पाडेइ संसारे"त्ति, कुत एवंविधरौद्रो दोषो भवतीत्यत आह 'तित्थेति' तीर्थकराज्ञाभङ्गात्, आज्ञा च तीर्थकरस्य औत्सर्गिकी आपवादिकी वा एषाऽनन्तरमेव वक्ष्यमाणा तामेव प्रकटयितुमाह 'यतो भणितम्' आगमे इति शेषः, आगमेहि आलोचकालोचनाचार्यौ द्वावपि प्रत्येकं द्विभेदावुक्तौ स्तः, यथा अर्होऽनर्हश्चेति, तत्र संवेगनिर्मायत्वादिगुणवान् आलोचकोऽर्हः, यदुक्तं "संविग्गो उ अमाई मइमं कप्पट्ठिओ अणासंसी। पण्णवणिओ सड्ढो अणाइत्तो दुक्कडतावी॥ तव्विहि समूसगो खलु अभिग्गहा सेवणाइलिङ्ग जुओ। आलोयणापयाणे जुग्गो भणिओ जिणिन्देहिं"त्ति, एतस्माद् विपरीतोऽनर्हः, तथा आचारवान् यथोक्तालोच्यापराधावधारणावान्, आगमादिपञ्चविधव्यवहारज्ञः प्रच्छन्नाकार्यालोचनप्रतिबन्धकलज्जादित्याजनकुशलः, अतिचारशुद्धिकारयिता स्वदत्तप्रायश्चित्तनिर्वाहणोपायदर्शक ऐहिकामुष्मिकापायदर्शक आलोचितदोषाणाम् अन्यस्याप्रकाशकः परहितः सूक्ष्मार्थवेदी इङ्गितादिभिः परभावलक्षक आलोचनाचार्योऽर्हः, यदुक्तम् "आयारवमव धारवं ववहारो व्वीलए पकुव्वी य निज्जव उवायदसी अपरिसावी य बोद्धव्वा, तह परिहियम्मि जुत्तो विसेसओ सुहुमभावकुसलमई। भावाणुमाणवं तह जुग्गो आलोयणायरिओत्ति" अतो विपरीतस्त्वनर्ह इति, एतयोश्चान्योन्यमीलने चत्वारो भङ्गा भवन्ति, तत्राद्ये द्वयोरपि अर्हत्वाद् उत्सर्गतस्तीर्थकराज्ञा, यदुक्तम्—इत्थं पुण एस विही

अरिहो अरिहम्मि दलयइ कमेणत्ति, द्वितीये त्वपवादतो गुरोरर्हत्वेन आलोचकस्यापि क्रमेणार्हत्वभावात्, तृतीयेतु अत्यन्ताप-
वादतः, आलोचनागुरोरनर्हत्वेऽपि आलोचकस्य अर्हत्वात्, यतः, "छत्तीस गुण समन्नागएण तेणंवि अवस्स कायव्वा । परसखि-
या वि सोही सुट्ठु विवहारकुसलेण" इत्याद्यागमाराधनार्थं परश्चेद् अर्हो न लभ्यते तदाऽनर्होऽपि साक्षीक्रियते एव, चतुर्थे तु
न कथंचिदाज्ञा, द्वयोरपि अनर्हत्वादित्यर्थः, ॥ १२८ ॥ एतदेव सर्वमागमभणितं सूत्रकारः स्वयमेव दर्शयन् प्रथमभङ्गकरचनां
दर्शयति—

आलोयण चउभेया अरिहो अरिहम्मि पढमओ भंगो ॥
अरिहम्मि अणरिहो पुण बीओ अरिहो वि जमणरिहे ॥ एसो तइओ जत्थेव अणरिहा दोवि सो चउत्थो उ १२९

व्याख्या—आलोचना विकटना रूपा प्रायश्चित्तरूपा वा, चतुर्भेदा आलोचकालोचनाचार्यगतार्हत्वानर्हत्वरूपभेदाभ्यां चतुः-
प्रकारा, तानेव चतुरो भेदान् विवरीतुमाह 'अर्हति' आकृतिवैराग्यादिगुणप्रकर्षवत्तया स्वदुष्कृतमालोचयितुं तच्छुद्धिं वा ग्रहीतुं
योग्यो भवतीति अर्हः, आलोचकः, 'अर्हति' गीतार्थसुविहितत्वेन आलोचनीयं श्रोतुं तच्छुद्धिं वा दातुं योग्यो भवतीत्यर्ह आ-
लोचनाचार्यः; तस्मिन् ततश्चार्हे आलोचनाचार्ये अर्ह आलोचक आलोचयति, प्रायश्चित्तं वा गृह्णाति, इत्येष प्रथमको भङ्गः, अत्र
सप्तम्यन्तम् अर्हपदं गुरुवाचकं, प्रथमान्तं त्वालोचकवाचकं ज्ञेयं, पदव्यत्ययस्तु गाथाबन्धानुरोधात् तथा 'अर्हे' आलोचकार्हे
अनर्हे पुनः पूर्वोक्तसंविग्नत्वादिगुणविकलत्वेन अयोग्य आलोचक आलोचयतीति द्वितीयः ॥ २ ॥ अनर्हे वाल्पेऽपि कारण-

माश्रित्य स्थापिते आचार्ये ऽनभ्यस्तविशिष्टशास्त्रत्वात्, अभ्यस्तविशिष्टशास्त्रेऽपि वा कस्मिंश्चित्पार्श्वस्थादौ क्रियाभ्रष्टत्वात् अयोग्ये अर्होऽपि आलोचनासमाचारीकुशलत्वादिना योग्योऽपि यदालोचयतीत्येष तृतीयः ॥ ३ ॥ यत्रैवशब्दो व्यतिक्रमे योक्ष्यतेऽनर्हावेव सूत्रोक्तगुणरहितत्वेनायोग्यावेव, द्वावपि आलोचनाचार्यालोचकौ स भङ्गश्चतुर्थः ॥ ४ ॥ तुरेवार्थः, भङ्गकरचनानुगमा इतिसार्धगाथार्थः ॥ १२९ ॥ इत्युक्ता आलोचनायाश्चतुर्भङ्गी, अथैतस्यां प्रथमभङ्ग एकान्तेन शुद्ध एव, द्वितीयतृतीयावपि कथंचित् शुद्धौ, चतुर्थस्तु सर्वथापि अशुद्ध एव आज्ञाबाह्यत्वादिति चतुर्थभङ्गकवर्त्तित्वेन पृष्टालोचना सदोषैव इत्याह—

पढमो उस्सग्गेणं सुद्धो अववायओ बीओ ॥ तइओ पुण अच्चन्तावायओ कम्मि होइ कस्स वि य। आणा वज्झो भंगो एस चउत्थो तओ दोसो ॥ १३० ॥ १३१ ॥

व्याख्या—प्रथमो भङ्ग उत्सर्गेण शुद्धः, संपूर्णविधिपूर्वकत्वात्, संपूर्णश्च विधिरर्होऽर्हस्य आलोचनां ददातीति, यदुक्तं "इत्थं पुण एस विही अरिहो अरिहम्मि दलयइ कमेणत्ति" अपवादतः पुरुषविशेषादिकारणमाश्रित्य द्वितीयोऽपि शुद्धः, तत्र हि गीतार्थत्वेन गुरुगुणविशेषमाकलय्य पूर्वोक्तगुणविकलत्वेनानर्हस्यापि प्रायश्चित्तं ददातीत्यर्थः ॥१३०॥ तृतीयभङ्गकः, पुनरत्यन्तापवादमाश्रित्य कस्मिंश्चिदेव सूत्रोक्तगुणयुक्तालोचनाचार्यसंप्राप्तसंभावनारूपे प्रस्तावे भवति, शुद्ध इत्यनुवर्त्तते कस्यापि एव चोऽवधारणेऽन्त्यावस्थां प्राप्तस्यैवेत्यर्थः, अन्त्यावस्थां प्राप्तो हि सुगुरूणामसंप्राप्तौ मा सशल्यमरणं भूयादिति, सूत्रोक्तगुणहीनत्वेनानर्हस्यापि पार्श्वस्थादेः पार्श्वे गीतार्थमात्रगुणमाश्रित्य आलोचयत्येव, यदुक्तं कल्पभाष्ये "संविग्गे गीयत्थे असईपासत्थमाइसारूवीति'

एतदपि, क्रियते, आलोचना परसाक्षिक्येत्र कार्या इत्युक्तत्वात्, तथाह्योघनिर्युक्तौ "जह सुकुलोवि विज्जो अन्नस्स कहेइ अप्पणो
वाहिं । सोऊण तस्स विज्जस्स सोवि परिकम्ममारभइ, एवं जाणंतेण वि पायच्छित्तविहिमप्पणो सम्मं । तहवि य पागडतरं
आलोएयव्वयं होइत्ति" प्रकटतरं परसाक्षिकमित्यर्थः, आज्ञाबाह्यः, कथमपि अर्हद्भिर्नोपदिष्टः, भङ्गो भेद एष स्वयमज्ञानेना-
ज्ञानस्यैव पार्श्वे गृहीता आलोचना इत्येवंरूपश्चतुर्थः, ततः कारणात्, दोषोऽनन्तसंसारिकत्वलक्षणः, अयं च दोषो "जं जगइ
अगीयत्थो जं च अगीयत्थ निस्सिउ जयइ वट्टावेइ गच्छं अणंतसंसारिओ होइ" इत्यादिगाथाप्रबन्धेन विस्तरेणोपदेशमा-
लायां समर्थितोऽस्ति, इति तत्र परिभावनीय इत्यर्थः ॥ १३० ॥ १३१ ॥ इत्युक्तो मुग्धगृहीतशिथिलसूरिदत्तालोचनाग
अनर्हाभयात्मकत्वेन अनन्तभवभ्रमणहेतुत्वरूपो दोषः, अथैतत्समर्थनार्थमस्या अपवादालोचनाया दृष्टान्तपूर्वकमलीकत्वमाह—
दुण्हवि य अयाणंते पच्चक्खाणं पि जं मुसावाओ ॥ आलोयणा वि एवं गहिया हुज्जा मुसावाओ ॥ १३२ ॥
व्याख्या—द्वयोरपि प्रत्याख्यातृप्रत्याख्यापकयोः, 'चः' पूरणेऽजानतो भावोऽजानत्वं प्रत्याख्यानसूत्रार्थविध्याद्यकुशलत्वं
तस्मिन् सति प्रत्याख्यानमपि एकासनाद्यपि किं पुनः सम्यक्त्वदेशविरत्यादयः, गृहीतमित्यत्र योज्यं, ततो गृहीतं प्रतिपन्नं यत्ता-
त्कारणात् मृषावादोऽलीकं व्यर्थमित्यर्थः, द्वयोरपि अनर्थहेतुत्वात्, यदुक्तं केवलमिह चउभंगो जाणंतो जाणगस्स
पासम्मि । बीओ अयाणमाणो गिण्हइ जाणन्तगसमीवे, ॥१॥ तइयम्मि जाणमाणो गिण्हइ पासे अजाणमा-
णस्स, चरिमे अजाणमाणो अजाणमाणस्स मूलम्मि ॥२॥ इत्थ य पढमो सुद्धो संमं गाणस्स तत्थ भावाओ ।

थिरईए नाणं चिय सुद्धीए कारण जेण ॥ ३ ॥ विरइ जाणावेउं ओहेणाहार विगइमाईयं । दिज्ञा पचक्खाणं इहरा दुण्हं वि मुसावाओ ॥ ४ ॥ नइए गुरुणो जाणगो जिट्ठो भायावमाउलाई वा । गुरुपूजितोत्ति काउं तस्स उ पूयाकया होइ ॥ ५ ॥ अप्पत्तिय च गस्स वज्जियं होइ कारणं णेवं । गिण्हइ पचक्खाण इहरा दोसो य गीयम्मि ॥ ६ ॥ जो पुण सयं न जाणइ गिण्हइ पासे अयाणमाणस्स । सो सयमंधो लग्गइ मग्गे अन्नस्स अन्धस्स ॥ ७ ॥ इय नाऊणं सम्मं जाणतो जणगस्स पासम्मि । कुज्ञा पचक्खाणं मुक्खफलं जेण तं होइत्ति ॥ ८ ॥" आगेनापि, प्रायश्चित्तमपि, एव प्रत्याख्यानवत् द्वयोरपि आलोचकाऽऽलोचनाचार्ययोरजानतो गृहीता भवेद् मृषावादो निरर्थिका पापाच्छेदकत्वात् प्रायश्चित्ताशोधकत्वाच्च, अयमभिप्रायो यद्यपि प्रायश्चित्तमपराधिविषयेतरन अन्यायप्रवृत्तौ भयहेतुत्वेन आपातत: कष्टावहत्वेन च दण्ड एव, तथापि भावत: प्रतिपन्न स्वस्वविषयं दोषं शोधयत्येव, तच्छोधकत्वेनैवास्य परमार्थेरुपदिष्टत्वात्, इत्यत्र लब्धे स्वात्मैव अनुशासनीय उपालम्भश्च, यदुक्तमागमे "दंडसुलभम्मि लोए मा अमितिं कुणसु दंडिओमिति,। एस कुलओ हु दंडो भवदंडनिवारिणो जीवो ॥१॥ अचिय हु विसोहिओ ते अप्पाइणो या एमय लिज्जो जीवा" इति अप्पपरे, उभगे अणुसट्ठि मुइत्ति, एगट्ठा तु मए चेव रूयमिण न मुद्दकारिस्स विज्ञए दंडो । इह सुक्कोवि न मुचसि परत्थ अह होउ वा लंभोत्ति ॥ ३ ॥ तथा अन्यैरपि उक्त—चिकित्सागम इव विशुद्धिहेतुर्दण्ड इति' केवलं सविग्नगीतार्थ एव यथा दोषमिदं दातु जानाति न चेतर', सहि अज्ञत्वेन रागद्वेषाभिभूतत्वेन वा प्रायोऽन्यथैव

दर्शनात्, अगीतार्थदत्तालोचना दुःप्रणीतत्वेन अनर्थहेतुत्वादप्रमाणमेव दयाति, ततस्तद्दत्तं प्रायश्चित्तं स्वस्वदोषाविषयत्वेन न शुद्धिहेतुरिति, अगीतार्थदत्तालोचना दुःप्रणीतत्वेन अनर्थहेतुत्वादप्रमाणमेव
ददाति, ततस्तद्दत्तं प्रायश्चित्तं स्वस्वदोषाविषयत्वेन न शुद्धिहेतुरिति, इति ॥ १३२ ॥
यदुक्तं । दुःप्रणीतोहि दण्डः कामक्रोधाभ्यामज्ञानाद्वा सर्वविद्वेषं करोति, इति ॥ १३२ ॥

इत्युक्तं द्रव्याचार्यदत्तालोचनाया अप्रामाण्यम्, अथ यत्र दिने यावन्त्यो विकृतयः प्रत्याख्यातास्तत्र तासामेकद्वित्र्यादि प्रत्याख्यातविकृतीनामुत्कृष्टद्रव्याण्यपि भक्षयितुं न कल्पन्त एव, तेषां तद्विकृतिगतत्वेन तत्तद्विकृतिसमानदोषत्वात्, अत एव निर्विकृतिके सर्वाण्यपि तत्तद्विकृतिप्रतिबद्धानि एतानि परिह्रियन्ते इति केषांचिद् वचनमाकर्ण्य संशयानस्य पृच्छामाह—

दो तिन्नि य विगईओ पच्चक्खन्तेण मुक्कला उ कया । ताऊ भोयणसमए सव्वा भुत्ता गुडेण विणा ॥१३३॥

ता खंडसक्कराओ सो भुंजइ किं नवेति इय पुच्छा ॥

व्याख्या—द्वे तिस्रो वा, चो वाशब्दार्थः 'विकृतयो' प्रत्याख्याता घृतादिकाः प्रत्याख्यानं कुर्वता सता, मुत्कलाः कृता गृहीता इत्यर्थः, ताश्च भोजनसमये जेमनवेलायां, सर्वा यावत्यो मुत्कलाः कृतास्तावत्य एवेत्यर्थः, भुक्ता जिमिता, गुडेन विना न गुडो भक्षित इत्यर्थः ॥ १३३ ॥ ततः खण्डशर्कराः, बहुवचनात्खण्डशर्कराभ्यां व्यतिरिक्तान्यपि गुडप्रतिबद्धोत्कृष्टद्रव्याणि गृह्यन्ते, इत्यादि 'बहुवचनान्ता गणस्य संसूचका इति वचनात्, स भुङ्क्तेऽभ्यवहरति, किं नवेति, अथवा न भुङ्क्ते, इति एवंरूपा पृच्छा इत्यर्थः ॥ अत्रोत्तरं, निर्विकृतिवक्तव्यतायां किंचिदुक्तमस्ति मुग्धावबोधार्थं विशेपतः पुनरप्याह—

(उत्तरमेवं) तत्थ उ सो वि न भक्खिज्ज खण्डाइ ॥ १३४ ॥

व्याख्या—उत्तरम् एतद्वक्ष्यमाणं, तत्र पृच्छायां, तुरेनार्थः, क्रियया योक्ष्यते, सोऽपि भक्षितगुडव्यतिरिक्तसर्वमुत्कलीकृतविकृतिकोऽपि, न केवलं प्रत्याख्यातनिर्विकृतिक इत्यपेरर्थः, न भक्षयेदेव, नाश्नीयादेव, खण्डादीनि आदिशब्दात् शर्करावर्षोपलाऽमृतिकाफणितादीनि गृह्यन्ते इत्यर्थः ॥ १३४ ॥

इत्युक्तं नियमितविकृतिप्रतिबद्धोत्कृष्टद्रव्याणामुत्सर्गेण अभक्षणम्, अथापवादतस्तेषां यथा भक्षणं युक्तं यथाचायुक्तं तथाह—

**जइ पित्ताई रोगो सो खण्डाईहिं उवसमइ तस्स। ता तग्गहणं जुत्तं रसगिद्धीए न तं भुञ्जे ॥ १३५ ॥**

व्याख्या—यदि पित्तादिः पित्तवातश्लेष्मणामेकतरो रोगः कस्यापि प्रकुपितः स्यादिति गम्यम्, अत्र.स रोगः खण्डादिभिः खण्डशर्करेयीशुण्ठीचूर्णमिश्रितपक्वगुडपर्पटिकादिभिरुत्कृष्टद्रव्यैरुपशाम्यति निवर्तते, तस्य भुक्तसर्वमुत्कलीकृतविकृतिकस्यापि, निर्विकृतिप्रत्याख्यानिनोऽपि वा 'ता' तदा 'तद्ग्रहणं' खण्डादिभक्षणं युक्त, समीचीनम्, आगमोक्तत्वात्, आगमेष्वागाढयोगवाहिनामपि एतद्भक्षणमनुज्ञातमस्ति, किं पुनरनागाढयोगवाहिनां तथा हि योगविधौ "अक्ष्वे च कक्कर खण्डसक्कर धाव ग्गोयरसाग्गीरी वासि य चुप्पडपक्कं वासियतिलकुट्टी मोरिंडगा खलपलल अमक्खियरोट्टगमंडा भरोलगवासि य भोइय सत्तुय नालिए रतिल एवमाइ गिहत्थेहिं अप्पणो अट्ठाए कयं कप्पइ, खुहुक्षुदिवग्गा वाणर्गाचा चाणय नालियर चाणय उवहृय गुलधाणय सुंठिमिरियमाईयं च कप्पइ दहीकय आसुरी धूवियाइ दुरीमोकल सिग्वरिणी तद्दिवस कयकरं घयं न कप्पइ, छट्ठ जोगलग्गो संघुस्य

न आरओ कप्पइ अववाएणं, असहुस्स निव्भंजणं जुत्तं रसगिद्धिए न
तक्क तीमण भज्जियाइयं च कप्पइ, न आरओ कप्पइ अववाएणं, पुव्विल्लधय भरिय तावियाए वीयघाण पक्कंपि ओगाहिमं
तं भुंजे चउत्थघाणो गाहिमं अन्न घयाइ अप्पक्खेवे पुव्विल्लघय भरिय ताविमाए भक्षणेऽपि न नियमभङ्गोऽविकृतित्वात्, एतेन
कप्पइत्ति" ततस्तद्विकृतिनियमेऽपि तत्तद्विकृतिनिष्पन्नोत्कृष्टद्रव्याणामपवादतो भक्षणेऽपि न तत्खण्डादिकं शुद्धं भक्षयति,
यत्कश्चित् एतेषां विकृतिसमानदोषत्वं ब्रूते, तदपास्तं वेदितव्यं, रसगृद्ध्या आस्वादलाम्पट्येन न तत्खण्डादिकं शुद्धं भक्षयति,
इच्छानिरोधार्थमेवहि विकृतयो नियमिताः, ततो यदि नियमितविकृतिगतोत्कृष्टद्रव्याणि असौ रसगृद्ध्या भुङ्क्ते, तदा नियमभङ्ग
एव, इच्छाया अनिरोधात्, तेषांहि केषांचित् स्वविकृत्यपेक्षया केनापि गुणेनाभीष्टतमत्वात्, यथा गुडात् खण्डशर्करादीनां,
केवलं यस्य स्वरूपत एव, गुडाद्येकतमां विकृतिं न भक्षयिष्यामीति अभिग्रहो भवति, तस्य खण्डशर्करादिभक्ष्यमाणेऽपि न
कश्चिद्दोष इति भावः ॥ १३५ ॥ इत्युक्तं नियमितविकृतिप्रतिबद्धोत्कृष्टद्रव्याणामुत्सर्गतोऽभक्षणम्, अथ पार्श्वस्थादिमार्गे संगररा-
जिका अद्विदलत्वेनैव व्यवह्रियन्ते, अथ च दलनानन्तरं तासु द्वे द्वे दले दृश्येते, ततस्ता द्विदलं भवन्ति वा न वेति पृच्छाम-
नूद्योत्तरमाह—

जं संगरराईओ भवंति विदलं नवत्ति पुट्ठाओ ॥ तत्थेवं भन्नइ राइयाउ विदलं न भणंति ॥ १३६ ॥

व्याख्या—यत्संगराणि शमीवृक्षफलिकाः, राजिकाः, कृष्णिकाः ततः संगरराजिका भवन्ति, द्विदलं न वेति पृष्टाः, तत्रैवं
भण्यते राजिका द्विदलं न भण्यते, अत्र यद्यपि यथोद्देशनिर्देश इति न्यायात् प्रथमं संगरपृच्छाया उत्तरं दातुमुचितं, तथापि अल्प-

प्रयाससाध्यमिति कृत्वा सूचीकटाहन्यायमाश्रित्य आदौ राजिकापृच्छाया उत्तरं दत्तम् इति, न कश्चिद्दोष इत्यर्थः ॥ १३६ ॥ इत्युक्तं राजिकानामद्विदलत्वम्, अथात्रैवार्थे हेतुमाह—

वरहासाईसु ठाणेसु ताओ जं घाणगम्मि पक्खित्तुं ॥ पीलिज्जंती तिलसरिसवुव्व तिल्लं चिय मुयंति ॥१३७॥

व्याख्या—'वरहासनामा देशविशेषः' स आदिर्येषां तानि, तथा तेषु 'स्थानेषु' देशेषु 'ताः' राजिकाः, यस्मात्कारणात्, 'घाणके' यन्त्रविशेषे 'प्रक्षिप्य' निधाय, पीड्यमानाः, तिलसर्षपा इव तैलमेव मुञ्चन्ति, अयमभिप्रायो-राजिका दलद्वयवन्त्योऽपि न द्विदला भण्यन्ते स्निग्धत्वात् चारुलिकावत्, द्विदलं हि तदेव भवति, यत्र स्वभावतो निःस्नेहे द्वे दले भवतः, यदुक्तं श्रीपूज्यैरेव स्वोपज्ञे प्रकरणान्तरे—"जम्मि य पीलिज्जंते मणयं पि न नेहनिग्गमो हुज्जा ॥ दुन्नि य दलाइ दीसंति मित्थगाईव तं विदलं" इति, इदं च द्विदललक्षणं सैद्धान्तिकैरस्मद्गच्छान्तरीयैरपि श्रुतधरैरुक्तत्वात् तथाहि—'जम्मि य पीलिज्जंते दव्वे नेहो न होइ, तं विदलं। विदलंपि हु निप्फन्न नेहजुयं होइ नो विदलं', इत्यागमिकलक्षणरहितत्वान्न राजिका द्विदलमित्यर्थः ॥ १३७ ॥ अथ संगरपृच्छाया उत्तरमाह—

जइ किर चवलयचणया विदलं तह संगराविं विदलं ति ॥
दिणचरिया नवपयपगरणेसु लिहिया उ फलिवग्गे ॥ १३८ ॥

व्याख्या—'किलेति' आप्तवादे, तत आप्ता एवं ब्रुवते—यथा महारूक्षद्विदलवत्त्वाच्च चपलकचनका धान्यविशेषाः, द्विदलं

इति हेतोर्दिनचर्यानवपदप्रकरणयोर्लिखिता निक्षिप्ताः फलिका-
तथा संगराण्यपि द्विदलं, संगरशब्दस्य पुल्लिङ्गत्वं प्राकृतत्वाद्, इति हेतोर्दिनचर्यानवपदप्रकरणे तु कक्कसूरिकृते न दृश्यन्ते, परं
वर्गे–तथाहि दिनचर्यायां "फलिवग्गे तह संगर वल्ला चवलाय होलायेति" नवपदप्रकरणे तु कक्कसूरिकृते स्वयं परिभाव्याः, फलिकाश्च प्रायो द्विदला एव
पूज्योक्तत्वात् तद्वृत्तौ क्वापि तत्रैव च अन्यश्रुतधरकृते लिखिता भविष्यन्तीति स्वयं परिभाव्याः, अथैतत्समर्थनार्थमेव लक्षणसद्भावं भावयंति
भवन्तीति भावः ॥ १३८ ॥ इत्याप्तोक्तत्वेन संगराणां द्विदलत्वं समर्थितम्, दलिए दुन्नि दलाई मुग्गाईणं च दीसंति ॥ १३९ ॥
नय संगरबीयाओ तिल्लुप्पत्ती कया वि संभवइ ॥ दलिए दुन्नि दलाई मुग्गाईणं च दीसंति दलिते च संगरबीजे द्वे दले मुद्गादीनामिव
व्याख्या—न च संगरबीजात्तैलोत्पत्तिः, कदापि यन्त्रपीडनादिकालेऽपि संभवति, दलिते च संगरबीजे द्वे दले मुद्गादीनामिव
दृश्येते, ततः संपूर्णलक्षणसद्भावात् संगरं द्विदलमेव, अत एव दहिए विगइगयाई घोलवडा घोलसिहरिणी करंबो। लवणकण
दहियमहियं संगरगाइम्मि अपडिए" इति प्रवचनसारोद्धारगाथाद्वितीयार्द्धं व्याख्यानयद्भिः श्रीआनन्दसूरिभिः सद्वृत्तावुक्तं,
लवणकणैर्जीरकलवणलेशैर्युक्तं दधि तदपि हस्तेन मथितं वस्त्रेण गालितं, तदपि रात्र्युषितं सत् कल्पते, निर्विकृतिकप्रत्याख्या-
नवतां, क्वापि देशे संगरिकाद्यपि तत्र प्रक्षिप्यते इत्याशङ्क्याह—परं संगरिकादौ अपतिते सति तत्र तु द्विदलदोषसंभवान्न कल्पते
इत्यर्थः, इत्यन्यैरप्याचार्यैः संगरस्य द्विदलत्वं प्रतिपन्नमेवेत्यर्थः ॥ १३९ ॥ इत्थं संगरस्य द्विदलत्वे सिद्धे सति एतद् दृष्टान्तेन
अपरेषामपि आढकिधान्यानां द्विदलत्वमतिदिश्य गोरसेन सह अभक्ष्यत्वमाह
एवं कंडुय गोवारपभिइमाइत्तियं भवे विदलं ॥ एयं न साबएणं भुत्तव्वं गोरसेण समं भणियं ॥ १४० ॥

व्याख्या—एवं संगरमिव कण्डुगोवारप्रभृति आरण्यम् अरण्यभवं धान्यम् 'आरन्नियमिति' प्राकृतत्वात्, पूर्वोक्त द्विदललक्षणानुकत्वाद् भवेद् द्विदलं, तथा च सति किमित्यत आह—एतत्संगरादि, न श्रावकेण भोक्तव्यं गोरसेन अपक्वेनेति गम्यं, समं धर्मविरुद्धत्वात्, अयमभिप्रायो 'दहितिलाई दव्वे पय सोवीरय हुन्ति हु विरुद्धा। देहस्स विरुद्धं पुण सीउण्हाणं समाजोगोत्ति' कल्पभाष्यवचनप्रामाण्यात् यथाद्रव्यविरुद्धत्वात् दध्ना सह तैलं, दुग्धेन वा सह काञ्जिकं, यथा वा देहविरुद्धत्वात् शीतलेन समम्रुष्णं न भुज्यते, एवं धर्मविरुद्धत्वादामगोरसेन समं द्विदलान्नम् उपलक्षणत्वात्, समानधर्मपञ्चोदुम्बर्यादिकं च न भोक्तव्यमित्यर्थः ॥ १४० ॥ अथ स्वदत्तोपदेशं समर्थयितुमन्यसंवादं दर्शयति 'भणितं च, अन्यैरपि इति शेषः, यथा

पंचुंबरि चउविगई हिमविसकरगे य सव्वमट्टीय ॥ राईभोयणगं चिय बहुबीयणंतसंधाणं ॥ १४१ ॥

घोलवडावायंगण अमुणिय नामाइं पुप्फफलयाइं ॥ तुच्छफलं चलियरसं वज्जह वज्जाणि बावीसं ॥ १४२ ॥

व्याख्या—पञ्चानामुदुम्बराणां समाहारः पञ्चोदुम्बरी, वटपिप्पलोदुम्बरप्लक्षकाकोदुम्बरी, फलरूपा समयप्रसिद्धा, सा मशकाकारसूक्ष्मजीवभृतत्वात् वर्जनीया, चतस्रो विकृतयो मद्यमांसमधुनवनीतरूपा वर्ज्याः, सद्य एव तत्र तद्वर्णासंख्यातजीवसंमूर्च्छनात्, यदुक्तं "मज्जे महुम्मि मंसे नवणीयम्मि चउत्थए उप्पज्जंती ॥ असंखाओ तव्वणा तत्थ जंतुणो" हिमं वर्ज्यं असंख्यातापकायिकजीवमयत्वात्, तत्र विषं मन्त्राद्युपहतमपि वर्ज्यम्, आन्तरकृमिगण्डोलकादिजीवविघातहेतुत्वात्, मरणसमये महामोहोत्पादकत्वाच्च, तथा करका अपि वर्ज्या, असंख्यातापकायिकजीवमयत्वात्, तथा सर्वापि पकापक्वतया द्विभेदापि

मृतिका वर्ज्या, दर्दुरादिपञ्चेन्द्रियप्राण्युत्पत्तिनिमित्तकत्वात्, आमाश्रयादिरोगजनकत्वात्, यस्मै रोचते तस्य प्रत्याख्यानभङ्गहेतु-
त्वाद् च, यतोऽसौ तं प्रत्याहार एव, यदुक्तं कल्पे—"अह वा जं भुक्खंतो कद्दम उवमाइ पक्खिवइ कोट्ठे। सो सव्वो आहारो ओस-
हमाई पुणं भइओ" इति भाष्यस्य चूर्णौ 'जं कद्दम उवमाइत्ति' लोके वक्तारो भवन्ति, अपि कर्दमपिण्डानां कुर्यात् कुक्षिं निर-
न्तरं, ताहे आहारो मट्टिया सप्पक्खइए ओसहनिमित्तं मट्टियाई अणाहारो भवइ त्ति, तत्र पक्का कवेलुकेट्टिका वटकर्परिकादिः,
तथा रात्रिभोजनं वर्ज्यम् अनेकजीवविनाशादिदोषयुक्तत्वेन इह लोके परलोके चासुखावहत्वात्, तथा बहुबीजं पंपोटकरिं-
गिणिकादि वर्ज्यं, प्रतिबीजं जीवोपमर्दभावात्, तथा अनन्तकायिकानि वर्ज्यानि, अनन्तजन्तुमयत्वेन बहुपापहेतुत्वात्, तथा
संधानकम् आस्त्यानकं बिल्विकादीनां वर्ज्यं, जीवसंसक्तिहेतुत्वात्, तत्पुष्पिकादौ अनन्तकायिकजीवभावाच्च, तथा घोलवट-
कानि उपलक्षणत्वाद् आमगोरसमिलितद्विदलान्नानि च वर्ज्यानि, केवलिगम्यसूक्ष्मजीवसंसक्तिभावात्, तथा वृन्ताकानि वर्ज्यानि
निद्राबाहुल्यकामोद्दीपनादिदोषहेतुत्वात्, तथा स्वयं परेण वा येषां नाम न ज्ञायते, तानि अज्ञातनामानि पुष्पाणि फलानि च
वर्ज्यानि, अज्ञानतो निषिद्धफलादिप्रवृत्तौ व्रतभङ्गसंभवात्, विषफलादिप्रवृत्तौ जीवितनाशाच्च, तथा तुच्छम् असारं फलं,
मधूकबिल्वादेरुपलक्षणत्वात् पुष्पं चारणिशिग्रुमधूकादेः, पत्रं च प्राट्पि तन्दुलीयकादेः वर्ज्यं बहुजीवसंमिश्रत्वात्, यद्वा तुच्छ-
फलम् अर्धनिष्पन्नकोमलचवलकफलिकादिकं, तेषु हि प्रभूतेष्वपि भक्षितेषु तथाविधा तृप्तिर्नोपजायते, अपि तु बहुजीवविराध-
नैव भवति, तथा 'चलितरसं' कुथितान्नम् उपलक्षणत्वात्, पुष्पितौदनादि दिनद्वयातीतं दधिवर्ज्यं, जीवसंसक्तिमत्त्वात्, एतानि

द्वात्रिंशतिसंख्यानि जिनधर्मविरुद्धत्वेन वर्ज्यानि, हे भव्यजना ? वर्जयन्त परिहरत इति शाखान्तरीयगाथाद्वयार्थः ॥ १४२ ॥
इत्युक्तं गयुक्तिक्रमामगोरसेन समं द्विदलान्नस्य तत्प्रसङ्गेन तत्सहपठितानां पञ्चोदुम्बर्यादीनां चाभक्ष्यत्वम्, अथ यया श्राविकया एताः पृच्छाः कृताः, तया स्वपरिग्रहपरिमाणान्तर्गतगाथाविचारं सम्यग् अवबुद्ध्यमानया पृष्टं, यथा भगवन्नेतस्या गाथाया अर्थं न बुध्ये इति, ततस्तदनुरोधात् तां व्याख्यातुमनुवदन्ति ‘

मणुय सुरतिरिय विसयं दुविहं तिविहेण थूलगमबंभं। सवसा चयामि मुत्तुं सयणाइ सदार कारवणं ॥ १४३ ॥

व्याख्या—इमीए गाहाए वक्खाणं एवं कीरइ, मणुया नरा, सुरा देवा, तिरिया गोअस्साइणो तेसिं विसयं, संबन्धियं थूलं बायरं, जं अनिउण लोएण वि लक्खिज्जइ, तं भण्णइ, अबंभं मेहुणं, दुविहं करण-कारावणेहिं, जओ गिहत्थाणं अणुमई अत्थि, परं मज्झिमखंडेण वाहिं, तिविहेणं मणेणं वायाए काएणं, सवसा अप्पाइत्ता, परवसाए पुण न नियमभंगो अत्थि, जओ सो तीए भंगो दव्वाओ जाओ न भावओ, ‘चयामि’ परिहरामि ‘मुत्तुं’ वज्जिय, किं तं वज्जणिज्जं ? भण्णइ–‘सयणाइसदारकारवणं’ स्वजनाः स्वगोत्रजना भण्यन्ते, तेषां स्वजनानाम् आदिशब्दात् गोप्रभृतीनां तेषां स्वजनादीनां, स्वकीया आत्मीयाः, दाराः कलत्राणि, तेषु स्वदारेषु, कारवणं, मैथुनकरणं प्रति प्रेरणमिति गाथार्थः, सदारकारवणे ण तीए साविगाए नियमभंगो अत्थीति चतुर्थपदभावार्थः, संपूर्णगाथातात्पर्यार्थस्त्वयं मनुष्यैर्देवैस्तिर्यग्भिश्च सह मैथुनं मनसा वाचा कायेन स्वयं न करोमि नापि अन्यान् स्त्रियः पुरुषान् वा कारयामि, स्ववशा सती स्वजनादीनां स्वकीयगोमहिषीप्रभृतितिरश्चां च मैथुन-

कारापणं मुत्कलमिति चतुर्थाणुव्रतनियमः ॥ १४३ ॥ इति प्राकृतभाषया व्याख्याता चतुर्थाणुव्रतगाथा, अथैकेन केनचित्
श्रावकेण श्राविकया वा किंचित् कल्याणकादितपः कृतं, तच्च कुतोऽपि कारणान्नोद्यमितं ततस्तस्य फलं भवति वा नवेति
प्रश्नस्योत्तरमाह

काए वि साविगाए विहिओ दिक्खातवो न उज्जमिओ ॥ भावविसुद्धीइ फलं तहावि से अत्थि इहरा नो ॥१४४॥

व्याख्या—कयापि श्राविकया उपलक्षणत्वात् श्रावकेणापि, विहितं कृतं, दीक्षातपः निष्क्रमणकल्याणकतपः, अर्थात् तीर्थ-
कृतामिति ज्ञेयम्, उपलक्षणत्वादन्यान्यपि गृहस्थोचिततपांसि कृतानि, तपःशब्दस्य प्राकृते पुल्लिंगत्वं सान्तत्वात्, परं कुतोऽपि प्रतिब-
न्धकात् नोद्यमितं, न तस्योद्यापनकं कृतं, भावविशुद्ध्या मनःशुद्ध्या, फलं निर्जरारूपं, तथापि 'से' तस्य, अस्ति भवति, इतरथा विशुद्ध-
भावाभावे, नो नास्ति, अयमभिप्रायो—यद्युद्यमयिषायां सत्यां तथाविधसामाग्र्यभावान्नोद्यमितं तदैतत्सत्फलमेव, अथ कुतोऽपि
कदवलेपात् नोद्यमितं तदा फलहेतोर्भावस्याभावात् निष्फलमेव, यदुक्तं "धनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं क्रियाकाण्डं चण्डं
रचितमवनौ सुप्तमसकृत्। तपस्तीव्रं तप्तं चरणमपि चीर्णं चिरतरं नोच्चेच्चित्ते भावस्तुषवपनवत्सर्वमफलमित्यर्थः ॥१४४॥ इत्यनुद्य-
मितमपि तपो यथा सफलं भवति, तथोक्तम्, अथ यथाकृतमिदम् अफलमनर्थफलं च स्यात् तथाह

अह सा सग्गहगहिया पासे सच्छंदसिढिललिंगीणं ॥ कुणइ तवो नत्थि फलं ता तीसे होइ भूरिभवो॥१४५॥

व्याख्या—अथेति पक्षान्तरे सा श्राविका उपलक्षणत्वात् श्रावकोऽपि स्वस्य आत्मनो ग्रह आग्रहः, स्वग्रहः, यदि वाऽसद्ग्रहः,

कदभिनिवेशः, तेन गृहीता अधिष्ठिता, कुलक्रमागता एतेऽस्माकं गुरव इत्यादिकदलेपादिरूढा इति यावत्, पार्श्वे समीपे, स्वच्छन्दा यथाच्छन्दा उत्सूत्रभाषका इत्यर्थः, शिथिलाः क्रियाभ्रष्टा एवंविधा ये लिङ्गिनो लिङ्गमात्रधारिणः, तेषां स्वच्छन्दशिथिललिङ्गिनां पार्श्वस्थादिकतराणामित्यर्थः, करोति तपः पूर्वोक्तं, नास्ति फलं कुग्रहाद्यंशमिश्रितत्वेन न भवत्यभिप्रेतं फलं 'ता' तदा तस्याः कर्त्र्याः कर्तुश्च, यदुक्तं जिनगृहजैनबिम्बजिनपूजनजिनयात्रादिविधिकृतं दानतपोव्रतादि गुरुभक्तिश्रुतपठनादि चाइतं स्यादिह कुमतकुगुरुकुग्रहकुबोधकुदेशनांशतःस्फुटमनभिमतकारि परमोजनमिव विपलवलिरेयत इति, प्रत्युत भवति भूरिभवः, सुगुरूपदेशाराधनविकलत्वेन दीर्घसंसारः, यदुक्तं निशीथे "छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं। अकरंतो गुरुवयणं अणन्तसंसारिओ होइत्ति" न च स्वच्छन्दशिथिलसूरयो गुरवः, तेषां मिथ्यादृष्टित्वेन तत्त्वाप्रतिपादकत्वादित्यर्थः ॥ १४५ ॥ ननु श्राद्धाः सम्यक्त्वप्रतिपत्तिकाले 'इय सपरपरत्तविसयं स कारणं जाणिऊण मिच्छत्तं। पच्चक्खाय तिह तिविहेण पालणा भावणा एवमित्यादिरचनात्, स्वपक्षमिथ्यात्वमिव परपक्षमिथ्यात्वमपि गुरुमूले प्रत्याख्यान्त्येवमतोऽमीषां परतीर्थगमनवन्दनपूजनादीनि मिथ्यात्वकारणत्वात् कर्तुं न कल्प्यन्ते, तथा च यस्य कुलदेवता अकृतपूजाद्युपचारा सती शान्तिमल्पमाचरति स कथं भवतु इति पृच्छन्नाह

अच्चन्तखुद्दसीला उवद्दवं कुणइ जो न पूएइ। जस्सेरिस त्थि गुत्तम्मि देवया स कहं सड्ढोत्थु ॥ १४६ ॥

व्याख्या—अत्यन्तक्षुद्रशीला अतिक्रूरस्वभावा, उपद्रवं मारणान्तिकोपसर्गं करोति, तस्येत्यध्याहार्यं, तस्य यो न पूजयति,

स श्राद्धः कथं
उपलक्षणत्वात् न नमति, पर्वणि नैवेद्यं वा नार्पयति, इत्यादिकमन्यदपि ज्ञेयं, यस्य गोत्रे ईदृशी देवताऽस्ति भवति, स श्राद्धः कथं वा अ-
अस्तु कथं भवतु, अतो यदि पूजयति तदा "नो मे कप्पइ अज्जप्पभिइं अन्नतित्थिए वा अन्नतित्थियदेवयाणि वा अ-
न्नतित्थियपरिग्गहियाणि अरिहंतचेइयाणि वा वंदित्तए वा नमंसित्तए वा पुव्विं अणालवित्तएणं आलवित्तए वा
संलपित्तए वा तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पयाउं वा" इत्याद्यालापकोच्चारणपूर्वकं
गुरुपार्श्वे कृतस्य मिथ्यात्वप्रतिक्रमणनियमस्य भङ्गप्रसङ्गः, अथ न पूजयति, तदा स्वस्य महान् विघ्नो भवति, इत्युभयपाशारज्जुरिति
भावः ॥१४६॥ अथोत्तरं दातुमाह—भण्यते कथ्यते, अथोत्तरमुत्सर्गापवादाभ्यां द्विभेदमप्यत्र प्रथमोत्कृष्टत्वाद् औत्सर्गिकमेवाह

उस्सग्गेण न कप्पइ तीए पूयाइ तस्स सड्ढस्स । जइ मारइत्ता मारउ कुडुंबगं एस परमत्थो ॥ १४७ ॥

व्याख्या—उत्सर्गेण न कल्पते तस्याः कुलदेवतायाः, पूजादि तस्य श्राद्धस्य नियमितत्वात्, धर्मयोग्यसामर्थ्यगुणवत्त्वेन
निर्भीकत्वाच्च, यदुक्तं "होइ समत्थो धम्मं कुणमाणो जो न बीहइ परेसिं । माइपिइसामि गुरुमाइयाण धम्माणं भिण्णा मिति"
एवं च अपूजनाद् क्रुद्धा सती सा यदि मारयति, तदा मारयतु कुटुम्बकम्, एष परमार्थो निश्चयः, यदुक्तं "पडिकूला हवउ
सुरा मायापिउणो परम्मुहा हुंतुं, पीडंतु सरीरवाहिणो वि खिसन्तु, सयणा वि निवडंतु आवयाउ गच्छउ लच्छीवि केवलं
इक्का मा जाओ जिणे भत्ती तदुत्ततत्तेसु तत्ती येत्यर्थः ॥ १४७॥ इत्युक्तमौत्सर्गिकमुत्तरम्, अथापवादिकं वक्तुं गाथाद्वयमाह

रायगुरु देवयाचितिच्छेयबलगणभिओगा य ॥ १४८ ॥
गीयत्थेणमगारच्छक्कमिह देसियं च सम्मत्ते ॥

ता इय अगारणिवेयणाओ धम्मत्थमन्नतित्थम्मि ॥ वयणाओ अववाएण तीए नमणाईसु न दोसो ॥१४९॥

व्याख्या—गीतार्थेन श्रुतकेवलिना श्रीमद्भद्रबाहुस्वामिना, मकारो लाक्षणिकः, आक्रियन्ते इत्याकारा अपवादाः, आकारस्य ह्रस्वत्वं प्राकृतत्वात्, तेषां षट्कम्, इह अस्मिन् सम्यक्त्वे सम्यक्त्वदण्डके, दिष्टं च, चः समुच्चये ततो न केवलं मिथ्यादृष्टिदेवतादीनां वन्दनादिकं निषिद्धं, सम्यक्त्वदण्डके आकारषट्कमपि आदिष्टं च, के ते षट् आकारा इत्यत आह 'रायेत्यादि, राजा च गुरुश्च, देवता च, वृत्तिच्छेदश्च, बलश्च, गणश्च, राजगुरुदेवतावृत्तिच्छेदबलगणाः, तेषामभियोगा बलात्काराः, राजगुरुदेवतावृत्तिच्छेदबलगणाभियोगा एव, चोऽवधारणे, न पुनरन्नत्थणाभोगेणं सहसागारेणं पच्छन्नणं कालेणं, इत्यादयः पौरुषीप्रत्याख्यानाकाराः, अभियोगशब्दः प्रत्येकं राजादिभिः सह योज्यते, यथा राजाभियोग इत्यादि यदुक्तम् आवश्यकनिर्युक्तौ सम्यक्त्वदण्डके—"अन्नत्थ रायाभिओगेणं ।१। गणाभियोगेणं ।२। बलाभियोगेणं ।३। देवताभियोगेणं ।४। गुरुनिग्गहेणं ।५। वित्तीकंतारेणमित्यर्थः ॥ १४८ ॥ ततश्च किमित्यत आह 'ताईत्यादि 'ता' तस्मात् कारणात् इत्याकारनिवेदनात्, एवंविधापवादपदमुत्कलनकरणात्, धर्मार्थमन्यतीर्थे इति पदाभ्यां वाक्यं सूचितं साकांक्षत्वात्, ततश्च 'धम्मत्थमन्नतित्थे न करे तवबन्दणन्हाणदाणहोमाईति, द्वादशव्रतादिभूतसम्यक्त्वनियमवचनाच्च, चः समुच्चयार्थोऽनुक्तोऽपि अत्र द्रष्टव्यः, 'अपवादेन' देवताभियोगलक्षणेन, तस्या गोत्रदेवताया, उपलक्षणत्वादन्यासामपि साधिष्ठायकदेवतानां, नमनपूजननैवेद्यदानादिषु विघ्नोपशमनार्थं क्रियमाणेष्वतिगम्यं, न दोषः, न प्रतिपन्नधर्मातिक्रमणलक्षणोऽपराधः, तत्र देवताभियोगे कथानकम् आवश्यकवृत्तौ एवं—जहा एगो गि-

हत्थो सावगो जातो, तेण वाणमन्तराणि चिरपरिचितानि उज्झियाणि, एगा तत्थ वाणमंतरी पओसमावन्ना तस्स गावार-
क्खगो पुत्तो, तीए वाणमन्तरीए गावीहिं समं अवहरिओ, ताहे उड्डा साहइ तज्जंती किं तुमं ममं उज्झसि नवत्ति ? सावगो
भणइ, नवरि मा मम धम्मविराहणा भवउ ? सा भणइ ममं अच्चेहि, सो भणइ जिणपडिमाणं अवसाणे ठाहि आमं ठामि तेण
तत्थ ठाविया, ताहे दारगो गावीओ य आणीयाओत्ति" ईदृश्यश्च साधिष्ठायकदेवता अल्पा एव भवन्ति, इत्यमूदृशीरुद्दिश्य नान्यासां
पूजादिकं कार्यमिति भावः ॥ १४९ ॥ अथ ग्रन्थकारोऽस्य प्रकरणस्य गुणनिष्पन्नमात्मना दत्तं नाम प्रकटयन् सिद्धान्तार्णवनि-
र्यामकप्रायःसुगुरुसंप्रदायागतोत्तरात्मकत्वं तु दर्शयितुं श्रीसुधर्मस्वामियुगप्रधानवंशाग्रध्वजपटायमानश्रीजिनवल्लभसूरिशिष्यत्वं
स्वस्य प्रकाशयंश्च ग्रन्थसमर्थनामाह

इय कइवयसंसयपयपण्हुत्तरपयरणं समासेणं । भणियं जुगपवरागमजिणवल्लभसूरिसीसेण ॥ १५० ॥

व्याख्या—इति, उक्तप्रकारेण, कतिपयसंशयपदानां, परिमितसंदेहस्थानानां, प्रश्नोत्तराणि यत्र तत् कतिपयसंशयपदप्र-
श्नोत्तरं, तच्च तत् प्रकरणं च कतिपयसंशयपदप्रश्नोत्तरप्रकरणं, कतिपयसंशयपदप्रश्नोत्तरनामकं प्रकरणमित्यर्थः, समासेन
संक्षेपेण अनुस्वारः प्राकृतत्वात्, भणितं, प्रणीतं रचितमित्यर्थः, क्वचित् 'लिहियं' इति पाठो दृश्यते तत्र लिखितं पूर्वाचार्यकृत-
ग्रन्थादिभ्य उद्धृतं, युगं, वर्तमानः कालस्तत्र प्रवरं शेषजनापेक्षया प्रधान आगमो यस्य स युगप्रवरागमः, स चासौ जिनवल्लभ-
सूरिश्च युगप्रवरागमजिनवल्लभसूरिस्तस्य शिष्येण विनयेन, अत्र हि ग्रन्थस्य साम्नायतां दर्शयितुं शास्त्रानौद्धत्यं च गर्तुं युगप्रवरा-

गमजिनवल्लभसूरिशिष्येण इत्युक्तम्, अन्यथा एतत्साध्यस्योपादेयत्वस्य सहस्रकिरणवदतिप्रकटेन श्रीगौतमस्वामिनामानुहारिधाम्ना श्रीजिनदत्तसूरिरिति निजनाम्नैव सिद्धेरितिभावः ॥ १५० ॥

इति श्रीवाचनाचार्यप्रबोधचन्द्रगणिविरचिता संदेहदोलावलीवृत्तिः समाप्ता

चान्द्रे कुलेऽतुलबुधौजसि वर्द्धमानसूरिर्बभूव सुमुनिस्थितिकेलिधामा । ध्यानप्रकर्षमहिमेक्षितसूरिमन्त्रेशः साधुधर्म इव योग इवाथ मूर्त्तः ॥ १ ॥ तत्पट्टे च जिनेश्वरो गुरुरभूचौलुक्यचूडामणिः । श्रीमद्दुर्लभराजसमितौ यस्योग्रवाहकृथा कम्प्राणाम् प्रतिवादिनां प्रथिगलत्स्वेदोदबिन्दुच्छलान्निःसघुस्त्वरितं विपादव इवाङ्गेभ्यः सुविद्यालवाः ॥ २ ॥ ध्वान्तं हतं खलु जगत्यपि हन्यतां नादर्शयन्वरं सदसतोरपि दर्श्यतां न । उष्णत्ववत्तदपि भानुमता न लेभे यस्योपमा भवदसौ जिनचन्द्रसूरिः ॥ ३ ॥ ततोऽनुजज्ञेऽभयदेवसूरिर्वृत्तिः कृता येन नवा नवाङ्ग्याः । इतीव सेव्येयमभूद् यथेच्छं स्वसेविनां निर्वृतिदायिका च ॥ ४ ॥ विद्या मा भवाऽतुला जननि वाग्देवि त्वमाश्वासयैवा धातस्त्वमिमां प्रबोधय गिरं प्रज्ञन् स्वयं मा मुहः । आसीनोऽभयदेवसूरिमुनिराट् पट्टे जगद्वल्लभः सूरिःश्रीजिनवल्लभः सुरसतः सिद्धं च एनोऽपि सत्वम् ॥ ५ ॥ तत्पट्टे जिनदत्तसूरिरभवन्मार्तण्डचण्डप्रभो यस्मिन् विष्टपशर्मणे तव इतः स्वच्छन्दसा भ्राम्यति । तज्ञोतिर्गलहस्तितानघतमःपिण्डा इव द्विड्गजा जग्मुर्दिशु विदिक्षु मंक्ष्वभिभवं चक्रुं तु दिग्दन्तिनाम् ॥ ६ ॥ कन्दर्पेऽपि न रूपमीदृशमिदं तेजो न सूर्येऽप्यसौ वीणायामपि न ध्वनिर्न च कलाश्चन्द्रेऽपि चैवंविधाः ॥ धाता तत्कथमेष ईदृगजनीत्याशङ्कि लोकैश्चिराद् यं दृष्ट्वा जिनचन्द्रसूरिरथ सोऽभूत्तत्पदद्योतकः ॥ ७ ॥

येषां गीर्वाणवाणीलहरिभिरश्रितः प्रेर्यमाणाऽखिलापि श्रीपृथ्वीराजपृथ्वीपतिसमितिरिहैश्वर्यसिन्धौ ममज्ज । चित्रं तत्रापि शत्रौ-
र्वपुषि ववृधिरे तर्पमालिन्यतापाः पापानां वा किमेतज्जिनपतिगुरवस्तेऽथ पट्टे बभूवुः ॥ ८ ॥ अथ जिनेश्वरसूरिरिदं पदं समलं
कुरुतेऽर्थ इवाद्भुतः । यदुपदेशगिरं विबुधाः सुधालहरितोऽप्यधिकं बहुमन्यते ॥ ९ ॥ ज्वलति परमज्योतिर्दीपो यदेप दिवा-
निशं हृदयसदने यत्के वागीश्वरी प्रतिचारिकः । तत इह महार्थानां कोटिर्विजृम्भत इत्यहो स्फुरति हृदि मे यत् नो लिङ्गं विना
निजलिङ्गिना ॥ १० ॥ तस्यास्त्यन्तेवासी प्रबोधचन्द्रगणिवाचनाचार्यः । गुरुकुलसेवाहेवाकविदितशिक्षाद्वयरहस्यः ॥ ११ ॥ जिनचन्द्रसूरि-
सुविहितसामाचार्यां लक्षणसाहित्यविद्ययोर्यस्य । मूर्त्तो गुरुरिव गुरुरजनि वाचनाचार्यपद्मदेवगणिः ॥ १२ ॥ कदापि नवयैक्षितामपि कथामिवान्वेक्षिकीं
शिष्यः समजनि गुणभद्रवाचनाचार्यः । जंगमतीर्थं कातन्त्रपंजिकादौ गुरुर्यस्य ॥ १३ ॥ विजयदेवसूरिर्गुरुः
यथा कविविवक्षितं सदसि यो वतार्थापयत् । स यस्य विनयोदधेर्विपमतर्कविद्यार्णवावगाहनविधावभूद् यस्यागमे गुरवः ॥ १५ ॥
॥ १४ ॥ नृपसमितिविजितविविधप्रतिवादिवितीर्णजयपताकौघाः । जिनपालोपाध्याया आसन् ॥ १६ ॥ प्रथमं लक्ष्मीतिलकोपाध्यायैः
दीक्षाचार्यजिनेश्वरसूरिवचः सिद्धमन्त्रमासाद्य । मुग्धावबोधनार्थं तेनेयं विरचिता वृत्तिः ॥ १७ ॥ स्वपरसमयतत्त्वज्ञैरतिवत्सलमानसैर्महाकविभिः ।
सूक्ष्मदर्शिमतिमद्भिः । जिनरत्नाचार्यैश्चाथ चन्द्रतिलकैरुपाध्यायैः ॥ १८ ॥ युग्मम् ॥ अन्यैरपि विद्वद्भिः संविग्नैरत्र सूत्रवाह्यं यत् । संभाव्यते
प्रतिभाजितसुरगुरुभिस्त्रिभिरपि समशोधि विधिनासौ ॥ १८ ॥ युग्मम् ॥ अन्यैरपि विद्वद्भिः संविग्नैरत्र सूत्रवाह्यं यत् । संभाव्यते
तदखिलं मिथो विचार्यैव संशोध्यम् ॥ १९ ॥ अत्रार्थेऽहं तेषामञ्जलिबन्धं करोमि बहुमानात् । मिलितैरपि पूज्यानां ग्रन्थे

महिमा यतो जन्याः ॥ २० ॥ मार्गामार्गसमानताभ्रमभवाद् व्यामूढता त्रोटिनी तत्त्वज्ञानकरी कुमार्गगतसद्दोषव्रजाविष्करी ॥ एषा निर्मलधर्मकर्मजननी संदेहदोलावली वृत्तिर्नन्दतु तापजाड्यमथनी भवीर चन्द्रार्कयोः ॥ २१ ॥ अस्याः सूत्रयुताश्वृत्तेः प्रत्यक्षरं विमृश्य कृतम् । ग्रन्थाग्रं सप्ताधिकचत्वारिंशत् शतानि सार्द्धानि ॥ २२ ॥ विक्रमवर्षे वरकरशिशिररूपमिते ( १३२१ ) मधोः प्रथमपक्षे । पञ्चम्यां प्रह्लादपुरनगरेऽसौ समर्थिता सोमे ॥ २३ ॥ इति ग्रन्थप्रशस्तिः, श्लोकमानम् ॥४७५०॥

इति याचनाचार्यप्रबोधचन्द्रगणिविरचितबृहत्सन्देहदोलावलीवृत्तिः समाप्ता ॥

इति संदेहदोलावलीप्रकरणं समाप्तम्।